श्री व्यासतीर्थविरचितम्

# तर्कताण्डवम्

श्रीराघवेन्द्रतीर्थविरचित न्यायदीपसहितम्

द्वितीयं सम्पुटम्

सम्पादकः

कृ.त. पाण्डुरङ्गि

प्रकाशकाः

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्, बेङ्गलूरु-४.

श्रीव्यासतीर्थविरचितम्

# तर्कताण्डवम्

श्रीराघवेन्द्रतीर्थविरचित न्यायदीपसहितम्

## द्वितीयं सम्पुटम्

*Edited by*

Mahāmahopādhyāya
**Prof. K.T. Pandurangi**
formerly Professor of Sanskrit, Bangalore University
Hon. Director of Dvaita Vedanta Studies and
Research Foundation, Bangalore.

**2003**

*This Volume is published with the grant from Govt. of India. Ministry of Human Resources Development, Dept. of Education under the Central Paln scheme – Development of Sanskrit Education.*



*Published by*
**Dvaita Vedanta Studies and Research Foundation**
No.11, Uttaradi Matha Compound, Bangalore-4.

**Tarkatāṇḍavam** of Śrī Vyāsatīrtha with the Commentary Nyāyadīpa of Śrī Rāghavendra tīrtha. Edited by Prof. K.T. Pandurangi, Hon. Director and Published by Dvaita Vedanta Studies and Research Foundation, No.11, Uttaradi Matha Compound, Bangalore.

No. of Pages : lx+412

No. of Copies : 1000

Price : Rs.400



*Copies can be had from :*
**Dvaita Vedanta Studies and Research Foundation**
No.11, Uttaradi Math Compound, Basavanagudi, Bangalore-560 004.
Ph.: 26627272

*Printed at :* **Shabda Mudrana,** Bangalore.

# Preface

Tarkatāṇḍavam of Śrī Vyāsatīrtha is an important work of Indian epistemology. It deals with the problems of Prāmāṇya svarūpa, Śabdapramāṇa and Anumānapramāṇa. Among the six systems of Indian philosophy Nyāyaśāstra or Tarkaśāstra is primarily concerned with epistemology. In this field, Tatvachintāmaṇī of Gangesha holds the central position. The entire Navyanyāya is developed on the basis of this text. Though the writers of Navyanyāya have tried their best to provide definitions for these pramāṇas, some inadequecies still remain. Tarkatāndava identifies these inadequecies and improves upon them.

Tarkatāndava is primarily a detailed review of Tatvachintāmaṇi. In addition to this, the views of Bhatta and Prabhākara on this subject are also reviewed. The views of other schools of Vedānta on this subject are not reviewed here, since, these are dealt with in Nyāyāmṛta and Tātparyachandrikā of the author.

Prof. K.T. Pandurangi the Hon. Director of Dvaita Foundation has edited this valuable work. He has discussed the main issues in detail in his introduction in English. Sri Venkatesh Katti and Sri Nagendra Acharya Deshpande have helped him. We hope this volume will be useful to the Research scholars in Indian Philosophy.

We record our appreciation of the good work of Prof. Pandurangi and his associates and thank them for their excellent work which they have done.

We thank Shabda Mudrana for good printing and neat get up.

**N. Narasimha Rau**
*Chairman*

# Tarkatāṇḍavam

## द्वितीयः - परिच्छेदः (अनुवृत्तः)

## Introduction

## विधिवादः

### ३२. आप्ताभिप्रायस्य लिङ्गावद्यर्थत्वे बाधकम् ।

Udayana who holds the view that आप्ताभिप्राय or वक्तृभिप्राय is the import of the injunction does not agree with the view that इष्टसाधनत्व is the import of the injunction. At the close of the fifth section of his न्यायकुसुमाञ्जलि, he raises five objections against the इष्टसाधनत्व view. He states

हेतुत्वादनुमानाच्च मध्यमादौ प्रयोगतः ।
अन्यत्र क्लृप्तसामर्थ्यात् निषेधानुपपत्तितः ॥

i) हेतुत्वात् – इष्टसाधनत्व is not the import of the injunction. It is only the ground or reason to implement the injunction.

न इष्टसाधनत्वं विधिः । कुतः इदं कर्तव्यमिति प्रश्ने इष्टसाधनत्वात् इति इष्टसाधनत्वस्य हेतूकरणात् ।

ii) अनुमानात् – In the instance of तरति मृत्युं तरति ब्रह्महत्यां यो अश्वमेधेन यजेत' इष्टसाधनत्व is already conveyed by अर्थवाद but still an injunction as यजेत is envisaged by inference. This means the injunction conveys something different from इष्टसाधनत्व.

अर्थवादेन इष्टसाधनत्वे बुद्धेपि विधिप्रत्ययानुमानाच्च ।

iii) मध्यमादौ प्रयोगतः – From the usages in the first person and the second person as कुर्याम् and कुर्याः The desire of the speaker to act himself and direct the person addressed is conveyed. This desire is the import of the injunction. The desire arises from the awareness of इष्टसाधनत्व of the act concerned. However, इष्टसाधनत्व itself is not the import of the injunction. It is the desire i.e., अभिप्राय of the speaker that is the import.

इष्टसाधनत्वबोधानन्तरं कर्मकाले प्रयुक्ताभ्यां कुर्याः कुर्यामिति मध्यमोत्तमपुरुषाभ्यां सम्बोध्यकर्तृक-स्वात्मकर्तृक क्रियाविषययोः अभिप्राययोरेव प्रतीतेः ।

iv) अन्यत्रक्लृप्तसामर्थ्यात् – In the पाणिनिसूत्र 'विधिनिमन्त्रणामन्त्रणाधीष्ट सम्प्रश्नप्रार्थनेषु लिङ्.' The meaning इच्छा is already fixed in आमन्त्रण, अध्येषण etc. Hence, the same has to be adopted as the import of the विधि i.e., injunction also.

पाणिनिसूत्रोक्तदिशा इच्छाविशेषरूपो यः आमन्त्रणाध्येषणादिः तदर्थवाचित्वस्य क्लृप्तत्वात् तदन्यत्रापि ।

v) निषेधानुपपत्तितः – If इष्टसाधनत्व is the import of the injunction, it cannot be denied in the negative statements like न कलञ्जं भक्षयेत् ।

i) इष्टसाधनत्वार्थकत्वे 'न कलञ्जं भक्षयेत् ? इत्यादौ मानान्तरविरोधेन तन्निषेधानुपपत्तेः ।

ii) आप्ताभिप्रायार्थत्वे तु मम कलञ्जभक्षणेच्छा आप्तस्य नास्तीत्यर्थकत्वात् न दोषः ।

In view of the above objections इष्टसाधनत्व cannot be taken as the import of the injunction. Hence, आप्ताभिप्राय or वक्तृभिप्राय is the import of the injunction.

Before answering the above objections Tarkatandava points out the difficulties in accepting आप्ताभिप्राय or वक्तृभिप्राय as the import of injunction.

i) When a child proceeds to suck the milk from the mother's breast, there is no speaker to direct it. Similarly when a person who is dumb by birth proceeds to undertake an activity, there is no speaker to direct him. In such cases it is इष्टसाधनताज्ञान that enables to take initiative. Hence, वक्तृभिप्राय cannot be the import of the injunction.

बालस्य आद्यस्तन्यपादिप्रवृत्तौ हेतुत्वेन इष्टसाधनत्वमेव क्लृप्तम् । नहि बालस्य आद्यप्रवृत्तौ जातिबधिरप्रवृत्तौ वा वक्ता अस्ति । येन तत्रापि वक्तृभिप्रायज्ञानमेव हेतुः स्यात् ।

ii) Even if one comes to know the desire of the speaker he will not proceed to act unless himself develops a desire for it. Such desire arises only by इष्टसाधनताज्ञान. Hence इष्टसाधनत्व has to be taken as the import.

किञ्च वक्त्रभिप्राये ज्ञातेपि चेतनस्य इच्छां विना कथं प्रवृत्तिः । कथं च इष्टसाधनत्वज्ञानं विना इच्छा ।

## ३३. उदयनोक्तवक्तृभिप्रायविधित्वभङ्गः

After pointing out the difficulties in taking आप्ताभिप्राय or वक्त्रभिप्राय as the import of the injunction तर्कताण्डव answers, the five objections raised against taking इष्टसाधनत्व as the import.

i) हेतुत्वात् – इष्टसाधनत्व being the ground or reason for undertaking the act does not come in the way of its being the import of the injunction. In fact - आप्ताभिप्राय is also the ground or reason for undertaking the act in your view. Therefore, this is not a convincing argument.

बाधकपञ्चकेपि आद्यं तावत् न युक्तम् । त्वन्मते इदं कर्तव्यम् आप्ताभिप्रेतत्वात् इति हेतूकरणवत् उपपत्तेः ।

ii) अनुमानात् – when इष्टसाधनत्व is comprehended by अर्थवाद, an injunction for this purpose is not envisaged by inference.

नापि द्वितीयम् – अर्थवादादेव इष्टसाधनत्वे बुद्धे विधिप्रत्ययस्य तदर्थस्य वा अनुमित्यनभ्युपगमात् । तद्बोध्यस्य प्रवर्तकस्य इष्टसाधनत्वस्य अर्थवादादेव सिद्धेः ।

iii) मध्यमादौ प्रयोगतः From the usages in the first person and the second person कुर्याम्, कुर्याः, इष्टसाधनत्व itself is directly conveyed but not through आप्ताभिप्राय.

नापि तृतीयम् कुर्याम् कुर्याः इत्यत्रापि सम्बोध्यं स्वात्मानं प्रति च इष्टसाधनत्वस्यैव लिङ्गार्थत्वे बाधकाभावात् ।

iv) अन्यत्र क्लृप्तसामर्थ्यात् - Without giving up the meaning इच्छा which is accepted as a meaning in आमन्त्रण. अध्येषण etc., इच्छा विषयसाधनत्व i.e., इष्टसाधनत्व could be included in the scope of the meaning of injunction.

नापि चतुर्थम् । क्लृप्तेच्छार्थकत्वात्यागेन इच्छाविषसाधनत्वांशेपि लिङ्गादेः शक्तिः कल्प्यते । अधिकांशे शक्तिकल्पनात् नेदं बाधकम् । (न्या.दी.)

v) निषेधानुपपत्तितः - In the case of negative statement like न कलञ्जं भक्षयेत्' इष्टसाधनत्वविरुद्धानिष्टसाधनत्व is conveyed. It is a case of पर्युदास as in the case of नानुयाजेषु ये यजामहे ।

नापि पञ्चमम् ।

i) त्वद्रीत्या लक्षणया मद्रीत्या अभिधया इष्टसाधनत्वविरुद्धानिष्टसाधनत्वार्थकत्वात् ।

ii) दृष्टं च नञः क्रियायोगेपि नानुयाजे ए यजामहं करोति इत्यादौ पर्युदासार्थकत्वम् ।

iii) अनुयाजा नाम त्रयो अनुयाजाः यागविशेषाः । अनुयाजनामकयागभिन्नेषु ''ए यजामहं' मन्त्रं करोति – उच्चारयतीत्यर्थः (न्या.दी.)

In respect of negative statements another explanation is also offered.

i) The नञर्थ First gets connected with धात्वर्थ, then, these two get connected with लिङ्. By this arrangement the negative injunction conveys that कलञ्जभक्षणाभाव is इष्टसाधन।

प्रथमं नञर्थधात्वर्थयोरन्वयः । अनन्तरं तदन्वितेन लिङा । कलञ्जभक्षणाभावस्य इष्टसाधनत्वमेव उच्यते ।

Normally धात्वर्थ first gets connected with प्रत्ययार्थ. However, there are certain exceptions. For instance, in the sentence 'गम्भीरायां नद्यां घोषः' the adjective गम्भीरा first gets connected with नदी and then only the प्रकृति i.e., नदी gets connected with प्रत्यय i.e., सप्तमीविभक्ति.

न च प्रकृतिभूतधात्वर्थस्य प्रथममन्तरङ्गेण प्रत्ययार्थेनैव अन्वयः न तु नञर्थे नेति वाच्यम् । गम्भीरायां नद्यां घोषः इत्यादौ गम्भीरान्विताया एव नद्याः सप्तम्यर्थेन अधिकरणत्वेन अन्वयस्य दर्शनात्

Keeping these two explanations in the mind the word विपर्यय is used in the context of explaining the implication of negative statements in विष्णुतत्त्वनिर्णय.

एतदेव परिहारद्वयं मनसिकृत्य विष्णुतत्त्वनिर्णये 'ज्ञात्वैव हि इष्टसाधनतां प्रवर्तते निवर्तते च विपर्ययेण इति विपर्ययशब्दः प्रयुक्तः । कलञ्जभक्षणस्य अनिष्टसाधनत्वं कलञ्जभक्षणाभावस्य इष्टसाधनत्वं चेति द्वयमपि कलञ्जभक्षणेष्टसाधनत्वस्य विपर्यय एव ।

## ३४. बलवदनिष्टाननुबन्धित्वादिविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गः

Gangeśa in his Tattvachintāmani takes the stand that mere इष्टसाधनत्व is not a sufficient import of injunction. Two more clauses have to be added to this viz., i) कृतिसाध्यत्व i.e., suitability to be achieved by the initiative of the person concerned. (ii) बलवदनिष्टाननुबन्धित्व i.e., not leading to any strong adverse consequence. The first clause excludes such impossible tasks such as bringing the gem from the hood of a furious snake and the second clause excludes the sipping of honey mixed with the poison. Therefore, the import of the injunction should include these two points also.

अत्रोक्तं मणौ न इष्टसाधनत्वमात्रं विधिः i) अशक्ये तक्षकचूडामण्याहरणादौ ii) तात्कालिकेष्टसाधने विषसम्पृक्तमधुभक्षणे च प्रवृत्तिप्रसङ्गात् ।

किन्तु कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धित्वेन विशिष्टमेव इष्टसाधनत्वं विधिः ।

This approach has an advantage in explaining the negative statements. In these statements the विशेषण clause बलवदनिष्टाननुबन्धित्व only denied. This prevents the प्रवृत्ति for कलञ्जभक्षण.

एवं च निषेधवाक्यस्थेन नञा बलवदनिष्टाननुबन्धित्वरूपं विशेषणमेव निषिध्यते । न तु विशेष्यम् ।

On this, an objection is raised. If नञ् is connected with a part of the meaning of the injunctive suffix it will violate the rule that the meaning of a word should not get connected with a part of the meaning of the other word.

न च नञः विध्यर्थैकदेशेन विशेषणेनान्वये एकशब्दार्थस्य अपरशब्दार्थैकदेशेन न अन्वयः इति व्युत्पत्तिविरोधः ।

The above objection is answered by pointing out that there are good many instances where in this rule is not followed. We may notice the following instances.

i) कुमुदं श्वेतमेव i.e. कुमुद variety of lotus is white only.

Here, the white colour of the कुमुद variety is affirmed and other colours are excluded. The exclusion of other colours is a part of the meaning of the word एव. The meaning of the word श्वेत is connected with it. This is अयोगव्यवच्छेद type of expression.

ii) पार्थ एव धनुर्धरः । पार्थ alone is the bow wielder.

Here, the fact of पार्थ alone being the bow wielder is affirmed and the others are excluded. The exclusion of others is a part of the meaning of एव. The meaning of the word पार्थ is connected with it. This is अन्ययोगव्यवच्छेद type of expression.

iii) नीलं सरोजं भवत्येव – The lotus is certainly blue.

Here, the blue colour of the सरोज is affirmed and the exclusion of the other colour is also affirmed. The exclusion is a part of the meaning एव. The meaning of the क्रियापद i.e. भवति is connected with it. This is अत्यन्तायोगव्यवच्छेद type of expression.

In these three cases the विशेषण, विशेष्य, क्रिया are connected. with a part of the meaning एव. Hence, the rule that the meaning of a word should not be connected with a part of the meaning of the other word is not an obligatory rule.

किञ्च कुमुदं श्वेतमेव पार्थ एव धनुर्धरः नीलं सरोजं भवत्येव इत्यत्र विशेषण विशेष्यक्रियान्विता-नामवधारणानां यथाक्रममयोगान्ययोगात्यन्तायोगव्यवच्छेदाः अर्थाः ।

एवं च श्वेतादीनामवधारणार्थैकदेशेन अयोगादिना अन्वयः दृश्यते । तथाच एकदेशेन अन्वय-व्युत्पत्तिरेव असिद्धा ।

Some try a different solution in respect of negative statements. कृतिसाध्यत्व, इष्टसाधनत्व and अनिष्टासाधनत्व are separately the meanings of the injunction. In view of this the negation need not be connected with a part of the meaning of the injunction.

केचित्तु कृतिसाध्यत्वेष्टसाधनत्वानिष्टासाधनत्वानि प्रत्येकं विधिप्रत्ययार्थाः । तथा च निषेधस्य न विध्यर्थैकदेशेन अन्वयः ।

This is not acceptable to विशिष्टेष्टवादिन् on two grounds.

i) If the three are separately meanings, then, only one meaning will be conveyed by one usage. Consequently the same injunction has to be repeated thrice.

ii) Assigning three denotative powers to one word is not justified.

त्रयाणां प्रत्येकमर्थत्वे एकैकस्मिन् प्रयोगे एकैकस्यैव प्रतीतिप्रसङ्गात् ।
शक्तित्रयकल्पनस्य अन्याय्यत्वाच्च ।। तस्माद् विशिष्टमेव इष्टसाधनत्वं विधिप्रत्ययार्थः ।

Stating the विशिष्टेष्टसाधनत्व view as explained above, तर्कताण्डव points out that adding the two clauses viz. कृतिसाध्यत्व and बलवदनिष्टाननुबन्धित्व is not necessary.

The import of the injunction is discussed in the context of याग.

इष्टसाधनत्वज्ञान is sufficient to undertake initiative to perform याग. There is no possibility of any अनिष्ट in the case of याग. Hence, the absence of अनिष्ट need not be a part of the import of the injunction.

विशिष्टार्थत्वकल्पनं हि न तावत् यागादौ प्रवृत्त्यर्थम् । इष्टसाधनत्वज्ञानेनैव तदुपपत्तेः । नहि यागे बलवदनिष्टानुबन्धित्वं प्रसक्तम् । येन तदभावो यजेतेत्यनेन बोध्येत ।

In the case of विषसम्पृक्तमधुभोजन, there arises उत्कटद्वेष in such acts. Consequently there will be no desire to undertake such act. Hence, there is no need to make अनिष्टाननुबन्धित्व a part of the meaning by adding a clause अनिष्टाननुबन्धित्व.

विषयसम्पृक्तमधुभोजनादिफले दुःखे उत्कटद्वेषदशायां तत्फले सुखे इच्छैव नेति न तत्र प्रवृत्तिः ।

## ३५. कृतिसाध्यत्वादिविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गः

Adding कृतिसाध्यत्व clause is also not necessary. When a person realises that the act enjoined is not within his capacity, he will not desire to undertake that activity. Therefore, to exclude such activity from the scope the injunction there is no need to add कृतिसाध्यत्व as a part of the import of the injunction.

कृत्यसाध्यत्वज्ञानदशायां तु कृत्या फलं साधयिष्यामि इति फलेच्छायाः अभावादेव अप्रवृत्तेः ।

However, when there is कृति साध्यत्वज्ञान, then, a person undertakes initiative for that act.

कृतिसाध्यत्वज्ञानदशायां प्रवृत्त्यापादने इष्टापत्तेः ।

It should be noted here that this कृतिसाध्यत्वज्ञान is not provided by the injunction. The injunction यजेत does not say that a person who desires svarga is capable to perform it. It only says the याग is इष्टसाधन. The fact of क्रिया i.e. याग, being achievable by कृति is comprehended by the inference in the natural course.

क्रियायाः कृतिसाध्यत्वज्ञानं न लिङ्शब्दजन्यम् । क्रियायाः कृत्यन्वयव्यतिरेकगम्यत्वेन तत्र लिङ् शक्तेः अकल्पनात् । न हि यजेत इति शब्दः स्वर्गकामस्य यागः शक्यः इत्याह । किन्तु इष्टसाधनमित्येव ।

Keeping this position in mind न्यायसुधा remarks 'कृतिसाध्यत्वविशेषणस्य व्यर्थत्वात् । In this connection Tarkatāṇḍava draws our attention to the following remarks in कर्मनिर्णयटीका and विष्णुतत्त्वनिर्णयटीका.

i) न चैवं सुधायाः, कृतिसाध्यतैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तिः इति कर्मनिर्णयटीकया.

ii) कृतिसाध्येष्टसाधनतायाः कार्यतापर्यायत्वात् इति विष्णुतत्त्वनिर्णयटीकया च विरोधः इति वाच्यम् ।

In both these remarks कृतिसाध्यत्व is made one of the grounds along with इष्टसाधनत्व for undertaking the initiative for the act. These appear to be inconsistent with the remark in सुधा 'कृतिसाध्यत्वविशेषणस्य व्यर्थत्वात्' ।

Tarkatāṇḍava clarifies the position as under :

सुधा does accept the प्रवृत्तिहेतुत्व of कृतिसाध्यत्व but only rejects the status of the meaning of injunction to it. Its knowledge is provided by other means i.e. inference.

सुधया निर्णयटीकाभ्यामुक्तां मानान्तरजस्य कृतिसाध्यत्वज्ञानस्य प्रवृत्तिहेतुतां स्वीकृत्यैव कृतिसाध्यत्वस्य लिङर्थत्वमात्रनिषेधात् ।

The fact of इष्टसाधनता alone being the import of the injunction is made very clear in कर्मनिर्णय and its टीका.

i) अत एव कर्मनिर्णये लिङाद्यर्थस्तु इष्टसाधनत्वमेव ।

ii) तट्टीकायामपि कृतिसाध्यतायाः स्वरूपतः क्रियासमवायमुक्त्वा इष्टसाधनतायाः ज्ञानमुक्तम् ।

## ३६. कार्यताज्ञानस्य प्रवर्तकत्वभङ्गः

Prābhākaras hold the view that the कार्यताज्ञान is प्रवर्तक but not इष्टसाधनत्वज्ञान.

तर्कताण्डव offers a number of possible explanations of the concept of कार्यत्व and points out the drawbacks in them. Finally quotes two standard explanations given in प्राभाकर works.

i) कृत्युद्देश्यत्वे सति कृतिसाध्यत्वं कार्यत्वम् ।

ii) कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते ।

Kārya is that which could be accomplished by कृति and which is the aim of कृति.

Tarkatāṇḍava points out that by both these explanations Prābhākaras cannot escape from इष्टसाधनत्व.

i) The उद्देश of कृति cannot be other than इष्टसाधनत्व.

ii) प्राधान्य of क्रिया also cannot be other than इष्टसाधनत्व.

i) प्रवृत्तिविषययागादिक्रियायामपि इष्टसाधनत्वातिरिक्तस्य उद्देश्यत्वस्य अभावात् ।

ii) इष्टसाधनत्वातिरिक्तस्य क्रियानिष्ठस्यप्राधान्यस्य अभावात् ।

तर्कताण्डव further points out that even प्राभाकरs consider इष्टसाधनत्व as सहकारिन्. This means that इष्टसाधनत्वज्ञान is a necessary requirement. It is better to consider that itself as प्रवर्तक and the import of the injunction.

तस्मात् प्रवर्तकस्य कृतिसाध्यत्वज्ञानस्य इष्टसाधनत्वज्ञानं सहकारीत्येव वक्तव्यमिति इष्टसाधनत्वज्ञाने आवश्यके किं कृतिसाध्यत्वज्ञानेन.

Further, इष्टसाधनताज्ञान, the desire for इष्ट, and initiative are the attributes of आत्मन् beyond these there is nothing special in the object or act which could be considered as a means.

किञ्च प्रथममिष्टसाधनताज्ञानं ततः तत्र इच्छा ततः प्रयत्नः ततः परिस्पन्दः इति जायन्ते । न तु अर्थे कश्चिदतिशयो अनुभूयते । यो अभिमतसाधनतया अनुमीयते ।

## ३७. स्वमते श्येनाग्नीषोमीयवैषम्यम्

There is an important difference between अग्नीषोमीय and श्येनयाग. The former is not accompanied by निन्दार्थवाद and प्रायश्चित्तोपदेश while latter is accompanied by it.

The निन्दार्थवाद reads as 'विष्ठा वार्धुषिकस्यान्नं अभिचाररतस्य च.' The प्रायश्चित्त is stated as प्राजापत्यकृच्छ्रनामकद्वादशदिवसनिवर्त्यव्रतविशेषैः त्रिभिः व्यभिचारदोषं परिहरति । (न्या.दी.)

Therefore हिंसा at अग्नीषोमीय is not अनिष्टसाधन.

In the case of श्येनयाग the injunction conveys इष्टसाधनत्व only. However, in view of निन्दार्थवाद it is अनिष्टसाधन also.

मन्मते श्येने लिङ् मुख्य एव स्ववाच्यस्य इष्टसाधनत्वस्य सत्त्वात् । अनिष्ट साधनत्वस्यापि सत्त्वात् निन्दादिकं चोदनासूत्रोक्तमनर्थत्वं च युक्तम् ।

## ३८. नैयायिकोक्तश्येनाग्निषोमीयवैषम्यभङ्गः

A section of the नैयायिकs explain the position of श्येनयाग as under.

The mere act of killing is not हिंसा. But the act that directly leads to death is हिंसा. The श्येन does not directly lead to death. Hence, बलवदनिष्टाजनकत्व clause is satisfied and the injunction conveys बलवदनिष्टाजनकेष्टसाधनत्व. However, श्येनयाग leads to नरक consequent on the वैरिवध inflicted by it.

नैयायिकैकदेशिनस्तु मरणजनकव्यापारमात्रं न हिंसा कृष्यादौ गवि नष्टे कृषिकर्तुः गोहन्तृत्वापत्तेः । किन्तु साक्षात् मरणफलको व्यापारः । लिङर्थस्तु बलवदनिष्टाजनकत्वविशिष्टमिष्टसाधनत्वम् । तच्च श्येने अस्तीति तत्र लिङ् मुख्य एव तस्य नरकाजनकत्वात् । एवं च श्येनस्य नरकाजनकत्वात् विधानम् । नरकानुबन्धत्वात् अनर्थत्वमित्याहुः ।

Tarkatāṇḍava rejects this explanation by pointing out that a person who dies by food stuck in his throat will have to be considered as killed himself. On the contrary a person who puts the poison in the food which leads to death will not be a killer and a person who hits by the sword and the affected person dies through a series of wounds will not be the killer.

तन्न । गळलग्नान्नकबळेन मृतस्यात्महन्तृत्वापत्तेः । अन्ने विषप्रयोक्तुः खड्गेन व्रणपरम्परया घातकस्य च अहन्तृत्वापत्तेः ।

Another section of नैय्यायिकs hold the view that the act that is undertaken with the intention of killing and results in the death is हिंसा.

श्येनयाग is enjoined aiming against tribal persons. However, if it is performed aiming at a Brāhmaṇa, the expiatory acts are prescribed.

नव्यास्तु मरणोद्देश्यको मरणफलको व्यापारो हिंसा । एवं च श्येनो हिंसैव । विधिप्रत्ययस्तु इष्टसाधनत्वरूपविशेष्यमात्रपरः ।

म्लेच्छजनपदाभिचारमुद्दिश्य वेदे श्येनविधिः धनलोभादिना ब्राह्मणाभिचारमुद्दिश्यानुष्ठिते श्येने प्रायश्चित्तविधिरित्युक्तम् ।

Tarkatāṇḍava rejects this explanation by pointing out that if श्येनयाग is prescribed against म्लेच्छs, performing it against Brāhmaṇas is irregular. Therefore prescribing expiatory acts for it is out of place.

However, the definition of हिंसा is acceptable to us. But the fact of considering बलवदनिष्टाननुबन्धित्वविशेष्टेष्टसाधनत्व as the import of injunction and restricting it इष्टसाधनत्व only by लक्षणा in the case of श्येनयाग is an unnecessary exercise.

तन्न । अन्योद्देशेन विहिते अन्योद्देशेन अनुष्ठानस्य अप्रसक्त्या प्रायश्चित्तोपदेशायोगात् ।

त्वदुक्तं हिंसालक्षणं श्येने हिंसात्वं च ममापि सम्मतमेव । किन्तु मद्रीत्या श्येन विधिप्रत्ययस्य मुख्यत्वसम्भवे अतिजघन्या विधौ लक्षणा न युक्ता ।

## ३९. सांख्याद्युक्तश्येनाग्नीषोमीय वैषम्यभङ्गः

The sāmkhyas explain the implication of श्येनयाग as under : अग्नीषोमीयपशुहिंसा is also covered by the negation of 'मा हिंस्यात्' therefore, that also leads to sin. But as this हिंसा is associated with the याग enjoined by वेद this sin is very little and could be nullified.

अग्नीषोमीयहिंसायाः असङ्कुचितवृत्तिना न हिंस्यादित्यनेन निषिद्धतया पापहेतुत्वेपि महाफलसाधन वेदविहितक्रतूपकारकत्वात् पापमल्पं सुपरिहरं च । पुण्यं च महदित्याहुः ।

Tarkatāṇḍava rejects this explanation by pointing out that when यागीयपशुहिंसा could be excluded from the scope of the general negation of हिंसा, considering यागीयपशुहिंसा as पापहेतु is not proper.

तन्न । सामान्यनिषेधस्य सर्वसम्मते विहितेतरपरत्वे सम्भवति विहितपरत्वं स्वीकृत्य वेदविहित हिंसायाः पापहेतुत्वोक्त्ययोगात् ।

Yoga explains the implication of श्येनयाग differently.

Killing the पशु is ordinarily पापहेतु but in the case of यागीयपशु, though its present body is destroyed it leads to a दिव्यशरीर. Hence, this is not हिंसा in the ordinary sense.

अन्येतु अग्नीषोमीयालम्भनं यद्यपि पशुप्राणवियोजकं तथापि तस्य 'न वा उ एतन्म्रियसे न ऋष्यति' इत्यादिमन्त्रैः पापफलपशु प्रहाणेन उत्कृष्टभोगसाधनदिव्यदेहसम्पादकत्वात् न हिंसा ।

## ४०. प्राभाकरभाट्टोक्ताग्नीषोमीयवैषम्यभङ्गः

According to प्राभाकरs the position of श्येनयाग and अग्नीषोमीय is quite distinct. श्येनयाग is करण. Hence, one proceeds to undertake it by his personal interest in it. अग्नीषोमीयहिंसा is an auxiliary enjoined by the injunction.

Tarkatāṇḍava rejects this explanation by pointing out that करण has to be performed aided by the auxiliaries. Hence, it is as much undertaken by the personal interest as the करण is. करण could achieve the desired result only when it is accompanied by इतिकर्तव्यता.

i) प्राभाकरास्तु श्येनः करणम् । अग्नीषोमीयहिंसा तु अङ्गम् । करणे च रागतः प्रवृत्तिः । अङ्गे तु वैधी इति वैषम्यमित्याहुः ।

ii) तदपि न । सेतिकर्तव्यताकस्यैव करणत्वेन इतिकर्तव्यतांशेपि फलरागादेव प्रवृत्तेः । यदि हि इतिकर्तव्यतां विनापि फलं सिद्ध्येत् तर्हि तदनुष्ठानं व्यर्थमेव ।

Bhattas explain it differently. Killing of the enemy by the श्येनयाग is the result of the याग. This is covered by the prohibition of the injunction न हिंस्यात् while अग्नीषोमियहिंसा is an aid of the sacrifice. Hence, this is not covered by the prohibition.

भाट्टास्तु श्येनस्य वधः फलम् । तच्च न हिंस्यादिति निषिद्धम् । अग्नीषोमीयस्य तु क्रतूपकारः फलं तच्च न निषिद्धमिति वैषम्यमित्याहुः ।

Tarkatāṇḍava rejects this explanation also.

Here, the question arises whether फलनिषेध extends to साधननिषेध or not. In the first alternative, साधनविधि also will extent to फल. In the second alternative one will not withdraw from साधन.

न हिंस्यादित्यस्य हिंसासाधनं न कार्यं इत्येत्पर्यन्तत्वमस्ति उत न (न्या.दी.)
आद्ये–फलनिषेधस्य साधनपर्यन्तत्वे साधन विधेरपि फलपर्यन्तत्वापत्तेः
यदि च फलनिषेधो न साधनपर्यन्तः तर्हि साधनात् निवृत्तिः न स्यात् ।

# अपूर्व वादः

## ४१. अपूर्वस्य लिङ्वाच्यत्वभङ्गः

Prābhākaras consider अपूर्व i.e. कार्य, as the import of लिङ् i.e. injunction. स्वर्गकाम i.e. a person who desires to obtain Svarga is नियोज्य i.e. the person to be elicited by the injunction. The act of performing the sacrifice cannot be enjoined as to be accomplished. A person who desires to obtain Svarga will accomplish only that which remains until svarga is realised and leads to it. The act of sacrifice is perishable and does not remain until svarga is realised. Therefore this cannot elicit नियोज्य to accomplish it. Hence अपूर्व that remains until the result is realised has to be considered as the import of the injunction. It should be noted here that this concept of अपूर्व of Prābhākara is quite different from that of Bhattas. The Bhattas envisage अपूर्व by अर्थापत्तिप्रमाण as a link between याग and स्वर्ग. प्राभाकरs consider अपूर्व as conveyed by the injunction itself. It is not a link. It is a goal to be achieved by performing the sacrifice. It is कार्य to be accomplished. The sacrifice is both करण and विषय of it. The स्वर्ग is only a side product provided as an incentive to accomplish this कार्य or अपूर्व.

प्राभाकरास्तु स्वर्गकामो यजेत इत्यादौ स्वर्गकामं नियोज्यं प्रति क्रिया लिङ्शब्देन बोधयितुमशक्या । कामी हि काम्याव्यवहितसाधनमेव कार्यतया अवैति । क्रिया च अस्थायित्वात् काम्यव्यवहितत्वात् न कामिनियोज्यान्वययोग्या । तस्मात् फलपर्यन्तस्थायि अपूर्वमेव लिङ् कार्यत्वेन बोध्यते ।

Tarkatāṇḍava rejects the above contention by pointing out that just as the act of sacrifice is not able to get connected with the result as it immediately does not proceed the result, it cannot get connected with अपूर्व also as its subject matter.

तन्न न क्रियायां व्यवहितफलान्वयस्येव अपूर्वेण सह विषयतयापि अन्वयस्यापि क्वापि अदर्शनात् ।

Further the लिङ् does not convey the direct means, nor does it convey the means through something else. But it conveys such a means in the absence of which the result will not be realised. It convey a means only that may be direct or indirect. This is sufficient to undertake the act. Hence the clause अव्यहितत्व is not necessary.

किञ्च लिङा न साक्षात् साधनत्वं बोध्यते । येन अयोग्यताधीः स्यात् नापि परम्परया साधनत्वम् येन परम्पराघटकं द्वारमुपस्थाप्यं स्यात् । किन्तु यदकरणे काम्यं न सिद्ध्यति तत्त्वरूपं साक्षात् परम्परा-साधारणसाधनत्वसामान्यम् तज्ज्ञानमात्रेण कार्यताबुद्ध्युपपत्तेः अव्यवहितत्वविशेषणं व्यर्थम् ।

A means that is not direct cannot be considered as not a means at all. In that case the so called अपूर्व also could not be caused by कृति.

न च व्यवहितसाधनमसाधनमेव । भावार्थद्वारा कृतिसाध्यस्य अपूर्वस्यापि कृत्यसाध्यतापत्तेः ।

It should be noted here that according to Prābhākaras लिङ् conveys both कृति and कार्य i.e. अपूर्व. This कृति accomplishes कार्य through भावार्थ i.e. the act of sacrifice conveyed by यज्. Thus कृति is an indirect means of कार्य. If Prābhākaras insist that the means should be direct means of the result to elicit a नियोज्य, then, their own concept will not satisfy this condition.

If अव्यवहितत्व is insisted, then, it amounts to saying 'A person who desires the result will undertake only such an act which will immediately lead to the result. In this case so called अपूर्व of Prābhākara's also will not be कार्य as it does not immediately lead to the result.

किञ्चैवं यदुत्पत्त्यनन्तरमेव कार्योत्पत्तिः तत्रैव कामिनः कार्यताधीः इत्यपि सुवचत्वात् अपूर्वेपि कार्यताधीः न स्यात् । किन्तु अपूर्वजन्ये स्वोत्पत्त्यनन्तरमेव स्वर्गाद्युत्पादके चरमे व्यापारविशेषे कार्यताधीः स्यात् ।

In the instance, of a statement 'He who desires to get rid of his decease should slowly take this medicine' the intervention of the time is advised by the very statement.

If अव्यवहितत्व i.e. immediate precedence of the cause to the result is insisted, then, initiative for this act will not be possible.

किञ्चैवं विलम्बेन महाव्याधिनिवृत्तिकामः इदं औषधं पिबेत् इत्याप्तवाक्यात् प्रवृत्तिर्नस्यात् । व्यवधानस्य आप्तेनैवोक्तेः ।

After pointing out the अव्यहितत्व clause is not necessary to consider a cause to lead its result Tarkatāṇḍava, argues that the concept of अपूर्व can be adopted as a link between the cause i.e. the act of sacrifice and the result i.e. svarga. This need not be conveyed by लिङ् i.e. injunctive suffix. Tarkatāṇḍava gives an example to envisage such a position. When a person is asked to bring water by the jar, the jar has to be without a hole. This point is not expressly conveyed by the statement. Similarly an enduring intermediary has to be implied to sustain the cause and the effect position of याग and स्वर्ग. This enduring intermediary is अपूर्व. It need not be conveyed by the injunction.

यथा त्वन्मते घटेन जलमाहर इत्यादौ अशक्यस्यापि छिद्रेतरत्वस्य अन्वयितावच्छेदकत्वेन भानम् तथा इहापि अशक्यस्यापि स्थायिव्यापारस्य अन्वयितावच्छेदकत्वेन भानमस्तु कृतमपूर्वे शक्तिकल्पनया ।

Tarkatāṇḍava suggests another way also to sustain the cause and effect position of याग and स्वर्ग avoiding the conveying of अपूर्व by the injunctive suffix लिङ्.

When It is stated by reliable person that Devadatta who is quite healthy and stout does not take his food during the day, his taking the food during the night is envisaged by arthāpatti to sustain this position. Similarly when it is comprehended that the याग leads स्वर्ग, the अपूर्व has to be envisaged as a link between these two by arthāpatti. Hence, अपूर्व need not be conveyed by the injunctive suffix लिङ्.

किञ्च पीनः चैत्रः दिवा न भुङ्क्ते इति आप्तवाक्यादन्वये पश्चात् तदुपपादकं रात्रिभोजनमिव इहापि वेदेन यागस्य स्वर्गं प्रति साधनत्वसामान्ये बुद्धे स्वद्वारा तदुपपादकं अपूर्वं पश्चात् कल्प्यताम् । किमन्यलभ्ये अपूर्वे शक्तिकल्पनया ।

After pointing out that अव्यवहितत्व is not necessary to be a साधन and suggesting that the अपूर्व can serve the purpose of linking याग and स्वर्ग, Tarkatāṇḍava discusses the question of अन्वययोग्यता of याग with लिङर्थ.

Prābhākaras consider that धात्वर्थ i.e. याग gets connected with स्थायिकार्य as विषय. However, it is common experience that लिङर्थ gets connected as आश्रित.

i) त्वन्मतेहि स्थायिकार्यस्य धात्वर्थेन सह विषयितया अन्वयः

ii) लोके लिङर्थस्य धात्वर्थेन सह आश्रितत्वेनैव अन्वयस्य दर्शनात् ।

Strictly speaking बाधकप्रमाणाभाव is यौग्यता. This is found in respect of याग getting connected with लिङर्थ.

तस्मात् बाधकप्रमाणाभाव एव योग्यता । सा च प्रकृतेप्यस्ति ।

Tarkatāṇḍava concludes this topic with the remark.

तस्मात् क्रियान्वययोग्यम् इष्टसाधनत्वमेवलिङर्थः ।

## ४२. लिङादेः अपूर्वे व्युत्पत्तिभङ्गः

In this section Tarkatāṇḍava points out that the denotative power of लिङ् to convey the अपूर्व as its import cannot be properly explained. It cannot be stated as

i) कृतिसाध्य i.e. to be accomplished by कृति i.e. initiative to undertake an act.

ii) क्रियातिरिक्तकार्य i.e. a कार्य that is distinct from the क्रिया.

iii) स्थायिकार्य i.e. an enduring accomplishment. These features are found in the objects jar etc also. Therefore this explanation of अपूर्व as the import of लिङ् is not the kind of अपूर्व envisaged by Prābhākara.

किञ्च लिङादेः अपूर्वे शक्तिग्रहः न तावत् कार्यत्वेन वा क्रियातिरिक्तकार्यत्वेन वा स्थायिकार्यत्वेन वा तेषामपूर्वादन्यत्र घटादावपि सत्त्वेन शक्यतानवच्छेदकत्वात् ।

It should be noted here that Prābhākaras envisage अपूर्व or कार्य as something distinct from यागक्रिया, permanent, and accomplished by कृति. These features of अपूर्व or कार्य are listed here and pointed out that these features do not warrant envisaging of a fictitious entity as the import of the injunctive suffix.

Another attempt is made on behalf of Prābhākaras in the pūrvapakṣa section of अपूर्व in तत्त्वचिन्तामणि by गङ्गेश as under.

The injunction conveys the i) The enduring nature ii) Providing the result nature iii) Accomplished by the initiative nature. These three are not conveyed without the

comprehension of their being related. These cannot be related by themselves without a common object. Hence, a dharmi i.e. a common object viz. अपूर्व has to be envisaged. This contention does not solve the problem. It amounts to conveying the three attributes only. The dharmi i.e. अपूर्व is not conveyed. Hence, लिङ् does not convey अपूर्व by its denotative power.

एतेन स्थायित्व फलजनकत्व कृतिसाध्यत्वेषु अगृहीतसंसर्गकेषु त्रिषु धर्मेषु शक्तिग्रहः । तत्तु धर्मत्रयं परस्परमन्वयायोग्यं सद् अन्विताभिधान दशायां स्वान्वययोग्यं धर्मिसामान्यमुपस्थापयति इति निरस्तम् । त्वदभिमतस्य अपूर्वरूपस्य धर्मिणः वाच्यत्वासिद्धेः ।

It cannot be argued that अपूर्व could be established by तर्क as 'If there is no enduring entity, then, the act of sacrifice cannot lead to the result' will establish the enduring entity.' This तर्क results in अन्योन्याश्रय i.e. reciprocal dependence.

i) किञ्च यदि तर्कस्यापि 'यदि स्थायी व्यापारः न स्यात् तर्हि क्रियायाः व्यवहितफलसाधनत्वं न स्यात्' इत्येवं रूपतया फलसाधनत्वप्रतीत्यनन्तरभावित्वेन अन्योन्याश्रयः ।

ii) फलसाधनत्वप्रतीत्यनन्तरं तदुपजीवनेन तर्कप्रवृत्तिः । तर्केण च अपूर्वोपस्थितौ तद्द्वारा फलसाधनत्वप्रतीतिः इति अन्योन्याश्रयः । (न्या.दी.)

Further, as stated above, it is not possible to work out the denotative power for the injunction to convey अपूर्व. On the contrary it will go against the well-known denotative power of the injunction to convey क्रियाकार्य.

किञ्च न केवलमपूर्वे व्युत्पत्तिविरहः । किन्तु लोकसिद्धप्राथमिक क्रियाकार्य विरोधः ।

## ४३. पण्डापूर्वभङ्गः

In the earlier section it was pointed out that the injunction has no denotative power to convey अपूर्व. This अपूर्व of Prābhākaras is designated as पण्डापूर्व to distinguish it from the Bhattas concept of अपूर्व which is accepted by अर्थापत्ति प्रमाण but not conveyed by the injunction. This concept of पण्डापूर्व is rejected in this section by pointing out that in the case of obligatory injunctions and prohibitions there is no scope to envisage पण्डापूर्व.

## ४४. न्यायमते अपूर्वस्य कल्प्यत्वभङ्गः

In Tattvachintāmaṇi of Gangeśa, states that the fact of याग being साधन of स्वर्ग is known by vedic injunction. A साधन is expected to immediatly proceed the effect. Hence, an intermediary viz. अपूर्व has to be envisaged.

मणौ 'प्रतीता च स्वर्गसाधनता साक्षादसाधनस्य यागस्य व्यापारमन्तरेण अनुपपत्त्या स्वर्गनिर्वाहकं व्यापारं कल्पयतीत्यादिना अपूर्वस्य कल्प्यत्वमुक्तम् ।

Tarkatāṇḍava points out that there is no need to separately envisage it. The clause अव्यवहितत्व included in the Nyāya definition of a कारण presupposes the vyāpāra i.e. अपूर्व.

न्यायमते तु अपूर्वस्य कल्प्यत्वमयुक्तम् । कारणत्वं हि तन्मते अनन्यथासिद्ध नियत पूर्ववृत्तित्वम् । तच्च अव्यवहितपूर्ववृत्तित्वं वाच्यम् । एवं च कारणत्वान्तर्गताव्यवधानशरीरे एव प्रविष्टस्य अपूर्वस्य कारणत्वबोधकेन शब्देनैव उक्तत्वात् कथमपूर्वस्य कल्प्यत्वम् ।

## ४५. स्वमते अपूर्वस्य कल्प्यत्वसमर्थनम्

Tarkatāṇḍava states that śakti i.e. the potency is the cause. The other explanations of cause such as अनन्यथासिद्धनियतपूर्ववृत्तित्व etc are not satisfactory. The śakti is envisaged by अन्वय-व्यतिरेक i.e. positive and negative verifications in some instances, and by Vedic statements in other instances. The object that has śakti should immediately precede the product it produces. In the case of याग such immediacy is not possible. Hence अपूर्व has to be envisaged as व्यापार i.e. an intermediary.

ममतु अनन्यथासिद्धनियतपूर्ववृत्तित्वं न कारणत्वम् । किन्तु शक्त्याख्यम् अतीन्द्रियं धर्मान्तरम् । तच्च क्वचिदन्वयव्यतिरेकाभ्यामुन्नीयते । क्वचित् शब्देन तदाश्रयस्य शक्तस्य कार्यकादाचित्कत्व-नियामकत्वेन अव्यवधानमावश्यकम् । तच्च अव्यवधानं चिरध्वस्तस्य यागस्य साक्षात् न सम्भवतीति व्यापारद्वारेण अव्यवधानं वक्तव्यमियुक्तं द्वारीभूतस्य अपूर्वस्य कल्पनम् ।

## ४६. यागध्वंसस्य यागव्यापारत्वभङ्गः

In this section Tarkatāṇḍava raises an interesting point and answers it. The objection is as under :

Just as अपूर्व arises from याग, the यागध्वंस also arises from it. Why not consider it as a व्यापार between याग and स्वर्ग. Ordinarily प्रतियोगिन् and its ध्वंस cannot be the causes of the same. However, as व्यापार and व्यापारिन् these can be the causes of the same.

This objection is brushed aside by pointing out that since प्रध्वंसाभाव is अनन्त the स्वर्गरूपफल also will have to be produced endlessly. This objection does not apply to अपूर्व since, अपूर्व ceases to be present as soon as the result arises.

i) अस्तु यागध्वंस एव यागस्य व्यापारः यागजन्यत्वात् । न तु अपूर्वः ।

न च प्रतियोगिध्वंसयोः कथमेकत्र अपेक्षा इति वाच्यम् । व्यापारव्यापारिभावेन अपेक्षायाम् अविरोधात् । एककाल एव तयोः अपेक्षा विरुद्धा । न तु कालभेदेपि ।

ii) मैवम् । ध्वंसस्य अनन्तत्वेन फलानन्त्यापातात् । अपूर्वं तु फलविनाश्यम् ।

## ४७. क्रियाजन्यापूर्वस्य ईश्वरप्रीतिहेतुत्वसमर्थनम्

In this section it is stated that अपूर्व obtains देवताप्रीति i.e. the grace of the Supreme God which will bestow the result of the yāga. देवताप्रसाद is not a substitute for अपूर्व, nor अपूर्व alone can lead to स्वर्ग. If after the completion of याग the Supreme God immediately bestows his grace, then, there would not have been any delay. Hence, अपूर्व has to be envisaged as an intermediary. At the right time the Supreme God bestows his grace and the result is realised. In श्रुति and स्मृति अदृष्ट i.e. अपूर्व, and ईश्वरप्रसाद are distinctly mentioned.

i) ननु तर्हि देवताप्रीतिरेव यागव्यापारोस्तु किमपूर्वेण इति चेदुच्यते ।

साङ्गप्रधानानुष्ठानानन्तरमेव ईश्वरप्रीतिश्चेत् फले विलम्बो न स्यात् । परमस्वतन्त्रेश्वरप्रीतेः फलजननेऽन्यानपेक्षत्वात् । तथा च फलपर्यन्तस्थायिना क्रियाजन्येन अपूर्वेण फलाव्यवहितपूर्वकाले ईश्वरप्रसादः सम्पाद्यः इत्येव युक्तम् ।

ii) In the following श्रुति and स्मृति statements अदृष्ट i.e. अपूर्व, and ईश्वर are distinctly stated.

a) देहो ब्रह्मार्थेन्द्रियाद्याः क्रियाश्च ।
तथा अदृष्टं पञ्चमं कर्महेतुः ॥
इत्यादिश्रुतौ ब्रह्मादृष्टशब्दाभ्याम् ।

b) अधिष्ठानं तथा कर्ता करणं च पृथग् विधम् ।
विविधाश्च पृथक् चेष्टाः दैवं चैवात्र पञ्चमम् ।
इत्यादिस्मृतौ कर्तृदैवशब्दाभ्याम् ईश्वरादृष्टयोः पृथगुक्तिः ।

c) अपूर्वं यत्तत्क्रियाफलं धर्माख्यं परब्रह्मणि यज्ञपुरुषे भगवति वासुदेवे एव भावयानः इत्याद्युक्तिः ।

## ४८. सन्ध्यावन्दनाद्यकरणे दुरितसमर्थनम्

In this section it is stated that if सन्ध्या is not performed it will result in incurring दुरित. This will lead to नरक i.e. Hell. This is clear from the prescription of the expiatory act. If दुरित is not generated, then, there will be nothing to remove by the expiatory act.

i) ननु क्षणिकब्रह्महत्यादिक्रियायाः कालान्तरीयनरकजनकत्वार्थं दुरितापूर्वं कल्प्यताम् । सन्ध्यावन्दनादिनित्याकरणे तु कथं दुरितकल्पनम् । सन्ध्याकालीनं यत्करणं तदभावस्य स्थायितया नरकार्थं दुरितानपेक्षणात् ।

ii) दुरितापूर्वाभावे प्रायश्चित्तवैयर्थ्यम् । दुरितापूर्वान्यस्य तन्निवर्त्यस्याभावात् ।

## ४९. व्रीहियवसाध्ये यागे वैजात्यभङ्गः

In Tattvachintāmaṇi, Gangeśa takes the yāgas performed with व्रीहि and यव alternately as विजातीय just as the fire produced by तृण, अरणि etc. is विजातीय. Otherwise, when व्रीहि is used, the यव is absent and when यव is used व्रीहि is absent. Consequently there will not be अव्यभिचरितयागहेतुत्व for these. If the two yāgas are distinct the absence of one of them will not result in व्यभिचार.

यत्तु मणौ वैकल्पिकव्रीहियवादिसाध्ये यागे तृणारण्यादिजन्यवह्निषु इव वैजात्यमस्ति । अन्यथा व्यभिचारितयोः व्रीहियवयोः अव्यभिचारगर्भितं हेतुत्वं न स्यात् ।

Tarkatāṇḍava rejects this contention by pointing out that शक्ति i.e. the potency to generate the fire present in तृण, अरणि etc. is सजातीय. Hence, the fire produced by them is सजातीय. Similarly शक्ति i.e. potency present in व्रीहि and यव is सजातीय. Hence, याग performed with these are not विजातीय.

तन्न । शक्तिवादिनो मम मते तृणारण्यादावपि एकशक्तिकत्वेन अनुगमस्य उक्ततया व्रीह्यादावपि एकशक्तिकत्वेन अनुगमे व्यभिचाराभावात् ।

## ५०. साधनस्य उत्कर्षादिना फलेप्युत्कर्षादि

In this section it is stated that when साधन is higher, then, the result also will be higher. In case the result is equal, then, the Veda enjoining a more difficult work when a comparatively easier work will yield the same result will not be pramāṇa. Similarly

Īśvara who bestows the same result for the difficult and easier work will be partial and unsympathetic. Hence, it has to be accepted that higher साधन leads to higher फल.

लघूपाये सति गुरुपायोपदेष्टुः वेदस्य अप्रामाण्यपरिहाराय प्रयासाधिक्येपि समफलप्रदस्य ईश्वरस्य वैषम्यनैर्घृण्यपरिहाराय च फलेपि उत्पर्षापकर्षौ श्रुतार्थापत्तिसिद्धौ ।

The fact of higher means leading to higher result is stated in श्रुति and स्मृति.

उक्तं च ब्राह्मे.

साधनस्योत्तमत्वेन साध्यंचोत्तममाप्नुयुः । इति ।

However, when there is variation on the basis of resources, the वर्ण of the person concerned, or the period, then the result will be the same.

यत्र तु शक्तिव्यवस्थया वा वर्णव्यवस्थया वा कालादिव्यवस्थया वा अनुकल्पः यथा

सहस्रगुः शतं दद्यात् दशदद्याच्च गोशती ।
एकां गां दशगुः दद्यात् सर्वे तुल्यफलाः स्मृताः ।
एकमेव हि तु शूद्राणां प्रभुकर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ।
कृते यद् द्वादशाब्देन त्रेतायां हायनेन तु ।
द्वापरे तच्च मासेन अहोरात्रेण तत्कलौ इत्यादौ तत्र फले न उत्कर्षादिकमिति दिक् ।

## ५१. गयाश्राद्धदिजन्यापूर्वस्य पित्रादिगतत्वनियमभङ्गः

In this section an interesting question is raised viz. whether the अपूर्व generated by गयाश्राद्ध is located in the son or the deceased father. Gangeśa in Tattvachintāmaṇi argues, ordinarily the अपूर्व is located in the same person who performs the rite concerned. However, in the present case it has to be considered as located in the person who derives the benefit of the rite concerned. Though the son performs गयाश्राद्ध, the अपूर्व generated by it has to be considered as located in the father who enjoys the benefit. Otherwise, even after the father is liberated, the गयाश्राद्धाफल will have to continue since the अपूर्व to generate it continues as it is located in the son.

यत्तु मणौ गयाश्राद्धादावपूर्वस्य औत्सर्गिकं कृतिसामानाधिकरण्यं वैधेन पित्राद्युद्देशेन प्राप्तव्यभोग-सामानाधिकरण्येन अपोद्यते । यदि तु तत्रापि कृतिसामानाधिकरण्यं तर्हि मुक्ते पितरि गया श्राद्धादि फलं स्यात् ।

Similar is the case with अनृतभाषण by the son. This leads to the नरक not only the son but even the father. सविष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति.

Here also दुरितापूर्व has to be located in the father, otherwise its result will have to continue even after the father is liberated, since, दुरितापूर्व located in the son continues.

पुत्रानृतभाषणादिना पितुरपि नरकस्मरणेन पुत्रसमवेतानृतजन्यभाषणदुरितेन मुक्तस्यापि पितुः नरकं स्यात् ।

Tarkatandava rejects this contention by pointing out that there is no adverse effect on the liberated father of the दुरितापूर्व located in the son, since after the liberation he gets rid of the effect of earlier encumbrances.

पितृभोजकस्य पुत्रगतगयाश्राद्धानृतभाषणादिजन्यापूर्वस्य पितृगतब्रह्मसाक्षात्कारेणैव नाशस्य ''एवं है वास्य सर्वेपाप्मानः प्रदूयन्ते'' इत्यादिश्रुतिसिद्धत्वात् ।

There are instances, where in अपूर्व is in the performer of the rite and the result goes to some one else. For instance, the अपूर्व generated is by कारीरि इष्टि in the performer but the result i.e. rain, benefits all living beings. The अपूर्व generated by ग्रामकामेष्टि is located in the performer but result of it goes to the entire village.

तस्मात् कारीर्यादिजन्यापूर्वस्य कृतिसामानाधिकरण्येपि सर्वजीवेषु पुष्टिरूपफलवत् गयाश्राद्धादि-जन्यापूर्वस्य पुत्रगतत्वेपि पित्रादौ तृप्त्यादिकं युक्तम् । ग्रामकामेष्ट्यादौ ग्रामादेरिव अन्यसमवेतस्यापि पितृतृप्त्यादेः पुत्रेण उद्दिष्टतया पुत्रफलत्वात् । एवं जातेष्ट्यादावपि द्रष्टव्यम् ।

# आख्यातवादः

## ५२. आख्यातस्य उदयनोक्तकृत्यर्थत्वभङ्गः

In this section the import of आख्यात i.e. verbal suffix, is discussed. उदयन holds the view that कृति i.e. initiative or effort to act is the import of the verbal suffix. He illustrates by the examples that the verb पचति is explained as पाकं करोति. Here, the करोति conveys कृति, conversely if a question is asked किं करोति it is answered as पाकं करोति. This also confirms that the verbal suffix conveys कृति.

अत्राह उदयनः कृतिरेव आख्यातार्थः । पचति पाकं करोति इति विवरणात् । किं करोति इति प्रश्नस्य पचतीत्याख्यातेन प्रतिवचनाच्च ।

Tarkatāṇḍava rejects this contention. According to Tarkatāṇḍava the व्यापार i.e. the process of the act that is conducive to implement the act conveyed by the root of the verb is the import of the verbal termination. This is a common import both in respect of the acts of sentient beings and non-sentient while कृति i.e. initiative or effort is possible only in the case of the acts of sentient beings.

आख्यातार्थस्तु अधःसन्तापनादिरूपधात्वर्थानुकूल व्यापार एव । न तु यत्नरूपा कृतिरेव इति नियमः । चैत्रः पचति रथः गच्छति इत्यादौ चेतनाचेतनसाधारण्येन आख्यातस्य प्रयोगात् । आख्यातेन धात्वर्थानुकूलव्यापारस्यैव प्रतीतेः ।

Neither कृताकृतव्यवहार nor कर्तृपदस्य यौगिकत्व help to establish कृति as आख्यातार्थ. In the instances इच्छां करोति निद्रां करोति बीजम् अङ्कुरं करोति etc there is no reference to efforts.

कृताकृतव्यवहारदर्शनात् तृजन्तकृधातुनिष्पन्नस्य कर्तृपदस्य यौगिकस्य कृत्याश्रयवाचकत्वात् कृञः यत्नार्थकत्वम् । तदुक्तम् ।

**कृताकृतविभागेन कर्तृरूपव्यवस्थया ।**
**यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥** इति चेन्न ।

इच्छां करोति निद्रां करोति इत्यादौ यत्नजन्यत्वाभावेपि कृतव्यवहारात् कर्तृपदं क्रियाश्रये रूढम् । न तु यौगिकम् ।

## ५३. आख्यातस्य मण्युक्तयत्नार्थकत्वभङ्गः

In Tattvachintāmaṇi Gangeśa also argues that कृति or यत्न is the import of आख्यात i.e. verbal suffix. The verb पचति conveys पाकानुकूलयत्न only. If व्यापार is taken as the meaning and यत्न is conveyed by आक्षेप, then, it amounts to two meanings for one expression.

मणौतु आख्यातस्य कृतिरेव अर्थो न तु व्यापारः । पचतीत्यत्र पाकानुकूलयत्नस्यैव प्रतीतेः । व्यापारेण यत्नाक्षेपे तु प्रतीतिद्वयापत्तिः ।

Tarkatāṇḍava rejects this contention by pointing out that यत्न or कृति also is a part of its आक्षेप. वस्तुतस्तुपचतीत्यादौ यत्नोपि धात्वर्थानुकूलव्यापारत्वेन प्रतीयते न तु यत्नत्वेन इति न यत्नस्य आक्षेपः ।

## ५४. आख्यातस्य रत्नकोश कारोक्तोत्पत्त्याद्यर्थत्वभङ्गः

रत्नकोशकार holds the view that उत्पत्तिः i.e. generation, is the import of the verbal suffix. This gets connected as आधेय i.e. located, with the meaning of the root of the verb and as कार्य i.e. effect, with प्रातिपदिक i.e. the agent. The statement चैत्रः पचति conveys that the Chaitra generates the action of cooking.

रत्नकोशकारस्तु धात्वर्थः अधःसन्तापनादिव्यापारः । आख्यातार्थस्तु उत्पत्तिरेव सा च धात्वर्थेन आधेयतया समानाधिकरणप्रातिपदिकार्थेन तु कार्यतया अन्वेति । अत एव चैत्रः पचति पाकमुत्पादयतीति विवरणम् ।

Takatāṇḍava rejects this contention by pointing out that if उत्पत्ति i.e. generating is the meaning of verbal termination, then, the statement चैत्रः पचति will have to convey that चैत्रः पाकोत्पत्तिमुत्पादयति. This is redudendant.

Further, since the Indriya, liṅga and Śabda the means of cognition generate cognition, it leads to the contingency that the verb जानाति could be used with reference to these also.

i) तदपि न । उत्पत्तेः आख्यातार्थत्वे तया सह चैत्रस्य जनकत्वरूपो अन्वयः इति चैत्रः पचति इत्यनेन चैत्रः पाकोत्पत्त्युत्पादकः इति धीः स्यात् ।

ii) अचेतने ज्ञानोत्पादके इन्द्रियलिङ्गशब्दादौ जानातीति प्रयोगश्च स्यात् ।

## ५५. आख्यातस्य प्राभाकरोक्तसङ्ख्यामात्रवाचित्वभङ्गः

Prābhākaras state that आख्यात conveys सङ्ख्या i.e. number alone. Tarkatāṇḍava points out that this leaves the question of अन्वय of वर्तमानत्व etc. time. If धात्वर्थानुकूल-व्यापार is conveyed by आख्यात, then, वर्तमानत्व etc can get connected with that.

i) प्राभाकरास्तु – आख्यातवाच्या सङ्ख्यैव ।

ii) यदि सङ्ख्यामात्रं आख्यातार्थः लडाद्युक्तं वर्तमानत्वादिकं केन अन्वेतु । तस्मात्प्रतीत्यनुरोधात् धात्वर्थानुकूलव्यापार एव आख्यातार्थः । तद्गतमेव वर्तमानत्वादिकमाख्यातेनोच्यते ।

## ५६. सङ्ख्यायाः वाच्यगमित्वनियमः

कर्ता i.e. the agent कर्म i.e. object, are also conveyed by आख्यात. The number conveyed by आख्यात get connected with these.

एवं कर्तृकर्मणी आपे लकारवाच्ये चैत्रः तण्डुलान् पचति चैत्रेण तण्डुलाः पच्यन्ते इत्यादौ चैत्रतण्डुलयोः आख्यातोक्तसङ्ख्यान्वयनियमदर्शनात् ।

It is argued that सङ्ख्या is conveyed by सुप् i.e. nominal suffixes only but not by verbal suffixes. Hence, the question of the agent and the object being conveyed by आख्यात to accommodate the number conveyed by the same does not arise.

This is not a valid argument. Tarkatāṇḍava quotes an example wherein a number of agents are stated in singular and their plurality is conveyed by आख्यात only.

i) ननु आख्यातस्य सङ्ख्यावाचित्वमेव नास्ति यद् बलाद् कर्तृकर्मवाचित्वं कल्प्येत प्रथमान्तकर्तृकर्म-वाचकं पदं विना आख्यातप्रयोगाभावेन चैत्रः पचतीत्यादौ सुब् विभक्त्यैव सङ्ख्याप्रतीतेः उपपत्तेः ।

न चैवं विनिगमनाविरहात् सुब्विभक्तेरेव सङ्ख्यावाचित्वं त्यज्यतामिति वाच्यम् । चैत्रो दण्डी इत्यादौ आख्याताभावेपि सुब्विभक्त्यैव सङ्ख्याप्रतीतेः इति चेत् । मैवम्

ii) चन्द्रे कलङ्कः सुजने दरिद्रता ।
विकासलक्ष्मीः कमलेषु चञ्चला ।
मुखाप्रसादः सधनेषु सर्वदा ।
यशोविधातुः कथयन्ति खण्डितम् ॥

इत्यादौ बहुत्ववाचकसुब्विभक्तेः अभावेपि कथयन्तीति तिङ् विभक्त्यैव बहुत्वप्रतीतेः ।

As stated above कर्ता i.e. the agent, is also conveyed by the verbal suffix. This facilitates its अभेदान्वय with प्रातिपदिकार्थ i.e. चैत्र etc. viz. चैत्राभिन्नः कर्ता. If कर्ता is not conveyed, then, the सङ्ख्या has to be taken as getting connected with प्रातिपदिकार्थ. This is not possible. प्रातिपदिकार्थ is already connected with the सङ्ख्या conveyed by its nominal suffix i.e. सुब् विभक्ति. It cannot be argued the सङ्ख्या conveyed by सुब् विभक्ति is the same. Hence, the सङ्ख्या conveyed by सुब्विभक्ति gets connected with प्रातिपदिकार्थ. In this case conveying सङ्ख्या by तिङ्विभक्ति becomes purposeless. Between the two viz. सुब्विभक्ति and तिङ्विभक्ति the former gets connected earlier than तिङ्विभक्ति. Hence the latter getting connected with प्रातिपदिकार्थ is purposeless. In view of the above, it has to be accepted that कर्ता is conveyed by आख्यात i.e. verbal suffix. He is the locus of the सङ्ख्या. This कर्ता conveyed by आख्यात gets connected with प्रातिपदिकार्थ by अभेद. This results in the position चैत्राभिन्नः कर्ता.

किञ्च कर्तुः आख्यातवाच्यत्वे तस्य प्रातिपदिकार्थेन चैत्रेण सह अभेदान्वयः सम्भवति । कर्तुः अवाच्यत्वे तु आख्यातोक्ता केवलैव सङ्ख्या प्रातिपदिकार्थेन चैत्रेणान्वेतीति वाच्यम् । न च तद्युक्तम् चैत्रस्य आदावेव अन्तरङ्गसुब्विभक्त्यैव सङ्ख्यान्वितत्वेनोक्ततया इतरानाकाङ्क्षितत्वेन आख्यातोक्त सङ्ख्यानन्वयापातात् ।

न च सुब्विभक्त्यख्याताभ्याम् एकैव प्रतीयते । एकस्याः सङ्ख्यायाः शीघ्रया सुबविभक्त्यैवाभिहितत्वेन मन्थरायाः तिङ् विभक्तेः वैयर्थ्यप्रसङ्गात् ।

**यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।**
**तेन तेनान्वितः स्वार्थः पदैरेवभिधीयते ॥**

इति न्यायेन सुब्विभक्तिप्रातिपदिकार्थयोः प्रथममन्वयात् ।

तस्मादाख्यातादाश्रयत्वेन कर्तुः उपस्थितौ तस्य सङ्ख्यान्वये सति समानाधिकरणप्रातिपदिकार्थेन अभेदान्वयः इति युक्तम् ।

## ५७. कर्तृकर्मणोः आख्यार्थत्वसमर्थनम्

In this section it is stated that कर्ता and कर्म are conveyed by आख्यात but not कर्तृत्व and कर्मत्व.

एतेन कर्तृकर्मत्वे एव आख्यातस्य शक्ये न तु तद्धर्मिणौ इति निरस्तम् ।

## ५८. धातोर्मण्डनोक्तफलवाचित्वभङ्गः

Tarkatāṇḍava briefly puts its view in respect of the meaning of verbal root and the verbal termination, as i) the act of the application of heat resulting in the baking of the rice corn is the meaning of the verbal root पच्. The bodily activity of the coock leading to the accomplishment of the root meaning is the meaning of verbal termination.

एवं विक्लृत्यादिरूपफलजनकोऽधःसन्तपनादिव्यापार एव पच्यादिधात्वर्थः । उक्तधात्वर्थानुकूलशरीरस्पन्दादिराख्यातार्थः ।

However, Maṇḍanamiśra holds the view that baking itself is the meaning of the verbal root पच् while the act of application of heat etc., is the meaning of the verbal termination.

मण्डनस्तु विक्लृत्तिरेव धात्वर्थः । तज्जनकोऽधःसन्तपनादिरेवाख्यातार्थः । तथाहि व्यापारमात्रस्य पच्यादिधात्वर्थत्वे गमनादावपि पच्यादिप्रयोगः स्यात् । विक्लृत्यादिफलोपहितस्य तु धात्वर्थत्वे फलमुप-

लक्षणं चेदुपलक्ष्यतावच्छेदकानतिप्रसक्तरूपाभावात् स एवातिप्रसङ्गः । विशेषणं चेन्नागृहीतविशेषण-न्यायेन प्रथमोपस्थित्वाल्लाघवाच्च फलमेव धात्वर्थः ।

He notices an objection that in this case after the withdrawal of the act of heating when the result only remains, it will have to be stated as पचति but not as अपाक्षीत् since the root meaning viz. baking is present at that time. He answers that though the root meaning is present since the act of the application of heat is over the expression of अपाक्षीत् is proper.

न च व्यापारविगमे फलदशायां पचतीति स्यान्नत्वपाक्षीदिति तदापिधात्वर्थ फलस्य सत्वादिति वाच्यम् ।

तदा धात्वर्थस्य सत्वेऽप्याख्यातार्थस्य धात्वर्थानुकूलव्यापारस्य अतीतत्वेन तदा पचतीत्यादि-व्यापारवर्तमानत्ववाचकाख्यातप्रयोगस्य अनुचितत्वात् । प्रत्युत व्यापारस्य अतीतत्वादपाक्षी-दित्यतीताख्यातप्रयोग एवोचितः ।

Tarkatāṇḍava rejects Mandana Miśra's views by pointing out that if the result viz. baking, is the meaning of the root पच् then, that would be इष्टसाधन. However, the result is never इष्टसाधन. It is actual इष्ट. No result could be obtained without utilizing the means. Therefore, the means of इष्ट that is baking viz. the act of application of heat has to be considered as the meaning of the root पच्.

तन्न–फलस्य धात्वर्थत्वे हि ओदनकामः पचेतेत्यत्र विधिप्रत्ययेन विक्लित्तिरूपधात्वर्थ एवेष्टसाधनत्वं बोधनीयम् । न च तद्युक्तम् । फलस्य स्वयमिष्टत्वेन तत्साधनत्वायोगात् । प्रवृत्यविषयत्वाच्च । नह्युपाय-मकृत्वा फलं साक्षात् साधयितुं शक्यम् ।

तस्मात् फलसाधने प्रवृत्तिविषयेऽधःसन्तापनादिव्यापार एव विधिप्रत्ययेनेष्टसाधनत्वं बोध्यमिति फलानुकूलव्यापार एव धात्वर्थः ।

Further if the result viz. baking itself is the root meaning, then before baking fully takes place the statement पाको वर्तते cannot be made when the process of baking is on.

किञ्च यदि च फलस्य धातुवाच्यत्वं, फलाभावे व्यापारकाले पाको वर्तते इति न स्यात् ।

## ५९. उपसर्गाणां वाचकत्वसमर्थनम्

Tarkatāṇḍava holds the view that उपसर्ग i.e. prepositions प्र etc convey the meaning प्रकर्ष i.e. higher, etc by their own denotative power i.e. शक्ति. In this respect the position

taken by Gangeśa in Tatvachintāmaṇi that उपसर्ग has no denotative power of its own. It is only द्योतक is not acceptable to Tarkatāṇḍava.

एवं प्रजयतीत्यादौ प्रतिनोपसर्गेण प्रकर्षादिरूपार्थविशेषप्रतीतेः प्रादेः प्रकर्षादौ शक्तिरेव । न मण्याद्युक्तं धातुगतशक्त्यवच्छेदकत्वरूपमुपसन्दानत्वापरपर्यायं द्योतकत्वम् ।

The contention that the उपसर्गs do not convey their meanings independently. These convey their meanings only when these are associated with a root, hence, these are only द्योतक is not a valid contention. If on the ground that these do not independently convey their meaning, their denotative power is not accepted, then, the expressions 'च' 'इव' and 'एव' will have to be considered as not conveying any meaning. Similarly प्रकृति and प्रत्यय which do not convey their meaning separately and independently will also have to be considered as meaningless.

अस्वातन्त्र्यमात्रेण निरर्थकत्वे च शब्दैवशब्देवशब्दादीनां प्रकृतिप्रत्ययादीनां च नैरर्थक्यप्रसङ्गात् ।

The objection that if the उपसर्गs have their own denotative power, then, these should be able to convey the same without the association of the roots is not a valid objection. Just as प्रकृति and प्रत्यय need प्रत्यय and प्रकृति respectively to convey their respective meaning. उपसर्गs also need the association of the verbal roots.

However this does not mean that these do not have their own separate meanings. On the contrary the root meaning needs the association of उपसर्ग to convey a special meaning.

नचोपसर्गस्यापि शक्तत्वे धात्वपेक्षा न स्यादिति वाच्यम् । प्रकृतिप्रत्ययाभ्यां प्रत्ययप्रकृत्योरिवोपसर्गेण साधुत्वार्थमेव धातोरपेक्षणेनार्थबोधनार्थमनपेक्षणात् । धातुस्त्वर्थविशेषबोधनार्थमेवोपसर्ग सापेक्षः ।

There is an interesting discussion about the verb प्रतिष्ठते. The verb तिष्ठति means गतिनिवृत्ति i.e. withdrawal of the movement. With the addition of the preposition प्र it should mean more or higher withdrawal if प्र has its own separate meaning as more or higher. This is absurd. Actually the word प्रतिष्टते means moves.

This difficulty is a common difficulty both for वाचकत्ववादिन् and द्योतकत्ववादिन्. Therefore, it has to be solved by taking these in different senses. When the preposition प्र is prefixed to it and when it is not prefixed. When It is not fixed with प्र it means stopping or not moving. When it is prefixed by प्र it means moving.

किञ्चैवं धातोः प्रोत्तरजित्वेन प्रकृष्टजये शक्तिश्चेत् प्रतिष्ठते इत्यत्र प्रकृष्टगतिनिवृत्तिधीरेव स्यात्, न तु गतिधीरिति चोद्यं तूभाभ्यां समाधेयम् । यदि तव ष्ठाधातुः प्रोत्तरोगत्यर्थस्तदनुत्तरस्तु गतिनिवृत्त्यर्थ इति नानार्थस्तर्हि ममापि प्रशब्दः ष्ठाधातुपूर्वो गत्यर्थस्तदपूर्वस्तु प्रकर्षार्थ इति नानार्थोऽस्तु ।

This discussion is concluded with the remark that उपसर्गs i.e. prepositions convey their meaning by their own denotative power. The observation of वैय्याकणs that the उपसर्गs don't have meaning is intended to convey that these do not convey their meaning in isolation with the verb.

तस्मादुपसर्गाः स्वार्थे शक्ता एव । वैय्याकरणानामुपसर्गे निरर्थकत्वप्रसिद्धिस्तु स्वातन्त्र्येणार्थानवबोधकत्वमात्रेण । एतदेवाभिप्रेत्योक्तं भगवत्पादैः–

समिति ह्युपसर्गेण परमुख्यार्थतोच्यते ।

# वृत्तित्रयवादः

## ६०. रूढ्यादिवृत्तित्रयलक्षणम्

The words have three denotative powers viz. (i) अभिधा i.e. primary denotative power, (ii) लक्षणा i.e. secondary denotative power, (iii) गौणी i.e. the denotative power based on similarity. The first one is मुख्यवृत्ति or the primary. The second and the third or अमुख्यवृत्ति i.e secondary. वृत्ति or denotative power is of the nature of conveying the intended meaning of the words.

अस्य च शब्दस्य वृत्तिस्त्रिविधा । अभिधा, लक्षणा, गौणी चेति । तदुक्तमनुव्याख्याने–

**तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता ।**
**उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः ।। इति ।**

तत्राद्या मुख्यवृत्तिरित्युच्यते । द्वितीयतृतीयेत्वमुख्यवृत्ती इति । वृत्तिश्च शब्दस्य तात्पर्यरूपमर्थप्रतिपादकत्वम् ।

Gangeśa in his Tatvachintāmaṇi explains its nature as a relation between the word and the meaning that presents the meaning to the mind suitable for verbal communication. This is not correct. The words in a sentence do not present the meaning by reminding the same. The position that this word conveys this meaning by this relation is the means of conveying denotative power. But it is not a denotative power by itself.

न तु मण्युक्तरीत्या शाब्दबोधानुकूलपदार्थोपस्थितिहेतुः पदार्थसम्बन्धः । वाक्यस्थं पदं न स्मारकमित्युक्तत्वेन शाब्दान्वयबोधानुकूलायाः स्मृतिरूपायाः पदार्थोपस्थितेरभावात् । अयं शब्दोऽनेन संबन्धेनात्र वर्तते इति सम्बन्धस्य वृत्तिहेतुत्वव्यवहाराच्च ।

The अभिधा i.e. primary denotative power is of three kinds. (i) रूढि i.e. usage. (ii) योग etymological (iii) योगरूढि i.e. a combination of usage and etymology. The meaning of the expression रूढि is explained as that which is conveyed by अखण्ड शक्ति i.e. the denotative power conveyed by the word as a whole without taking into the account the etymological meaning. For instance, the word घट conveys the meaning jar without going into its etymological structure. (ii) The meaning of the expression योग is explained as the denotative power that takes into account the etymological structure of the word. The objection that since the sentence meaning also consists of its constituent word meanings that also will have to be considered as conveyed by योगवृत्ति is not a valid objection as the constituents referred to here are the constituents of the word, but not of the sentence.

The meaning of the expression योगरूढि is explained as the denotative power that conveys the meaning of the word by समुदायशक्ति taking into account अवयवशक्ति. For instance the word पङ्कज conveys पद्म i.e. lotus by समुदायशक्ति, taking into account its अवयवशक्ति. It should be noted here that it is not a separate category of denotative power but it is only a combination of the earlier two denotative powers.

अभिधाऽपि त्रेधा । रूढिर्योगो योगरूढिश्चेति । तत्राखण्डशक्त्या प्रतिपादकत्वं रूढिः । यथा घटादिशब्देषु । अवयवशक्तिसापेक्षा वृत्तिर्योगः । यथा कुम्भकारौपगवराजपुरुषादिशब्देषु । न च वाक्यस्यापि स्वार्थबोधने स्वावयवभूतपदशक्तिसापेक्षत्वात् योगवृत्तिः स्यादिति वाच्यम् । अवयवशब्देन पदावयवस्य विवक्षितत्वात् ।

अवयवशक्तिसापेक्षसमुदायशक्त्या अर्थान्तरप्रतिपादकत्वं योगरूढिः । यथा पङ्कजादिशब्देषु । अयं ह्यवयवशक्त्या पङ्कजनिकर्तृत्वं, समुदायशक्त्या पद्मत्वं च बोधयति ।

## ५१. योगरूढि समर्थनम्

Some state that the word पङ्कज is also रूढ in पद्म. In fact the word पङ्कज is stated as a synonym of पद्म in lexicons. If we go by its etymological meaning it may have to be applied to कुमुद type of lotus also. Therefore it is better, that it is taken as रूढ in पद्म only.

अत्र केचित् पङ्कजादिशब्दास्तामरसे पद्मशब्दवद्रूढा: एव । कोशेषु पद्मपर्यायत्वेन पाठात् । योगस्य कुमुदादावतिप्रसक्तत्वेनानतिप्रसङ्गाय रूढेरपि स्वीकारे आवश्यकत्वात् रूढ्यैवोपपत्तेश्च ।

तन्न । पङ्कजपदेनैवोपगवादिपदैरिवावयवार्थस्य पङ्कजनिकर्तृत्वस्यापि प्रतीते: ।

Prābhākaras take the stand that the word पङ्कज conveys the meaning पद्म by taking into account its etymological structure only. Therefore it is यौगिक only. In support of this the Prābhākaras state a number of arguments. Tarkatāṇḍava summarises these, rejects, and establishes योगरूढि nature of denotative power that conveys the meaning of the word पङ्कज.

प्राभाकरास्त्वाहु:– "न पद्मत्वे रूढि: । पङ्कजपदं पद्मे यौगिकमेव" इति ।

In this context an objection is raised that योग is based on the constituents of the word while रूढि is based on the entire word. Therefore how can in respect of one and the same word, two denotative powers could be assigned. This objection is answered by pointing out that though one is based on पङ्कजनिकर्तृत्व, the other is based on पद्मत्व, these two attributes belong to one and the same viz. पद्म. Hence there is no difficulty in conveying the same object, both by योग and रूढि.

The word पङ्कज conveying the meaning both by योग and रूढि is made more clear by the following observation in सन्न्यायरत्नावली.

(I) नन्ववयववृत्तिर्योगो रूढिस्त्वखण्डवृत्ति:, ते चैकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धे इत्यसमाहाररूपं वृत्त्यन्तरमेवेदमस्त्विति चेन्न ।

योगरूढ्यो: यथाक्रमं कर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोरपि तद्द्वारैकस्मिन् धर्मिणि सैन्धवशब्द-वृत्त्योरिव समाहारसम्भवात् ।

(II) सन्न्यायरत्नावल्यामपि न चावयववृत्त्यखण्डवृत्त्योरेकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धत्वाद्योग-रूढिर्नामवृत्ति: नास्तीति वाच्यम् । तस्या: पङ्कजादिशब्देषु दृष्टत्वादिति समाहार एवोक्त: ।

## ६२. मण्युक्तयोगरूढिसमर्थनमभङ्ग:

In Tatvachintāmaṇi, Gangeśa states that the word reminds the word meaning. This reminding cannot be without appropriate relation. The word पङ्कज has to remind पद्म.

For this purpose रूढि of the word पङ्कज in पद्म has to be accepted. योग is already there. Therefore it is a case of योगरूढि.

This explanation is not acceptable to Tarkatāṇḍava. According to Tarkatāṇḍava, the word leads to the अनुभव of word meaning, but not reminding of it. This is made clear in the discussion of अन्विताभिधान. Further the reminding of the word meaning by the word is brought about by other means such as सादृश्य and अदृष्ट. Therefore रूढि only as a relation need not be envisaged.

(I) मणौ तु पदमेव पदार्थस्मारकम् । पदं च नासम्बद्धं स्मारकम् । तथा च गवादिपदानां गवादिष्विव पङ्कजपदस्यापि पद्मत्वस्मृत्यर्थमेव सम्बन्धत्वेन रूढिरावश्यकीति योगरूढिः साधिता ।

तन्न । वाक्यस्थात् पदात् पदार्थस्यानुभूतिरेव न स्मृतिरपीत्यन्विताभिधानप्रस्तावे उक्तत्वात् ।

किञ्च न पदार्थस्मृतिमात्रं शक्तिसाध्यम् । सादृश्यादृष्टादिनापि तत्स्मृतेः ।

## ६३. पङ्कजादिशब्दानां कुमुदादौ लक्षणाभङ्गः

In Tatvachintāmaṇi, Gangeśa takes the stand that in the statement पङ्कजकुमुदमानय the word पङ्कज conveys कुमुद by लक्षणा.

This is not correct. Though the word पङ्कज initially conveys पद्म by रूढि. Later, in order to convey कुमुद, रूढि is ignored. Therefore without लक्षणा the word पङ्कज can convey कुमुद.

(I) यत्तूक्तं मण्यादौ पङ्कजकुमुदमानयेत्यत्र पङ्कजसमुदायस्य स्वार्थपद्मत्वसम्बन्धिनि कर्तृत्वे लक्षणा ।

(II) तन्न । रूढ्या पूर्वं स्वार्थोपस्थानेऽपि पश्चात् कुमुदान्वयार्थं रूढेर्मूकीभावे सति योगेनैव स्वतन्त्रस्य कर्तृत्वोपस्थित्या आकाङ्क्षासम्भवेन लक्षणानपेक्षणात् ।

## ६४. लक्षणागौण्योः लक्षणम्

(I) The nature of लक्षणा is explained as the denotative power that communicates a meaning that is related to the primary meaning.

(II) The nature of गौणी is explained as the denotative power that conveys the meaning on the basis of the similarity. Both these are of two kinds viz. रूढ and अरूढ. The following examples are given for these.

(i) रूढलक्षणा – मञ्चाः क्रोशन्ति The persons seated on the benches are crying. Here the word मञ्च i.e. bench, is taken in the secondary sense of persons sitting on the bench, since this secondary sense is in frequent use it is an instance of रूढलक्षणा.

(ii) अरूढलक्षणा – गङ्गायां घोषः There is a fisherman's village on the river Gangā. Here the word Gangā means river Ganga. However, it is taken in the sense of the bank of the river in the secondary meaning.

Since such usage is occasional it is a अरूढलक्षणा.

(iii) रूढगौणी. The use of the word cow with reference to a cow made of clay is an instance of रूढगौणी.

(iv) अरूढगौणी – सिंहो देवदत्तः Devadatta is a lion. Here the word सिंह is used in the sense of similar to the lion in valour. This is an instance of secondary usage on the basis of similarity.

(I) मुख्यार्थसम्बन्धो वा तं निमित्तीकृत्य वृत्तिर्वा लक्षणा । तत्सादृश्यं वा तन्निमित्तीकृत्य वृत्तिर्वा गौणी । द्वे अपि रूढारूढभेदेन प्रत्येकं द्विविधे ।

तत्र रूढलक्षणा यथा, मञ्चाः क्रोशन्तीति । अरूढलक्षणा यथा गङ्गायां घोष इति । रूढगौणी यथा मृद्गवादौ गवादिशब्दस्य । अरूढगौणी यथा– सिंहो देवदत्त इति ।

Tatvachintāmaṇi explains the relation between primary and secondary meaning in four other ways. Tarkatāṇḍava rejects all these. Tarkatāṇḍava also rejects the explanation of लक्षणा as that meaning which is invariably associated with the primary meaning. The explanation that the intention of the speaker that this word conveys a meaning that is related with the primary meaning" is also rejected.

2. (i) न तु मण्युक्तरीत्या अशक्योपस्थितिर्वा, शक्यसम्बन्धादशक्य सदृशान्वयपरोपस्थितिर्वा लक्षणा ।

(ii) आद्ययोरात्मनिष्ठाया उपस्थितेः शब्दनिष्ठलक्षणात्वायोगाच्च ।

(iii) अत एव–

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।

इति निरस्तम् । अविनाभूते सादृश्यविवक्षयया गौणी तस्यां अतिव्याप्तेः ।

(iv) नापि स्वार्थसम्बन्धेनेदं पदममुमर्थं बोधयिष्यतीति वक्तुरभिप्रायो लक्षणा । वेदे तदभावात् ।

## ६५. लक्षणादिहेतूक्तिः

Tarkatāndava quotes the three grounds stated for लक्षणा in काव्यप्रकाश of Mammata. These are :

(i) मुख्यार्थबाध i.e. unsuitability of primary meaning.

(ii) तद्योग Related with the primary meaning

(iii) Either conveyed by रूढि or conveyed for a purpose are the grounds for assigning the secondary meaning.

Tarkatāṇḍava reviews these grounds and rejects the same. The unsuitability of the primary meaning only results in the rejection of the primary meaning. It does not lead to secondary meaning by itself. The purpose to be served is also not required. The comprehension of the purpose to develop the secondary meaning is also not a ground, since शब्द is अचेतन. The purpose is the result of the comprehension but not the ground for comprehension.

i) अन्येतु—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ।।

इति लक्षणादौ हेतुत्रयमाहुः ।

ii) तन्न । गङ्गाशब्दो ह्यशक्यतीरबोधनेऽतिप्रसङ्गान्नियामकं शक्तिस्थानीयं शक्यसम्बन्धमेव अपेक्षते । वक्ताप्यनेन सम्बन्धेन गङ्गापदं तीरं बोधयिष्यतीत्यभिप्रेत्यैव प्रयुंक्ते । न तु मुख्यार्थानुपपत्तिः । अनुपपत्तिदर्शनस्य बोधकशब्दप्रयोगोत्तरकालीनत्वात् । तस्य प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुत्वेन तीरबोधनेऽनपेक्षितत्वाच्च ।

iii) प्रयोजनमपि न शब्देनापेक्ष्यते । अचेतनत्वात् ।

अन्वयानुपपत्ति i.e. Unsuitability of syntactical connection, only makes the person aware of the unsuitability. By itself it does not lead to the secondary meaning. तात्पर्यानुपपत्ति which is proposed as a ground for developing the secondary meaning in the instances like छत्रिणः यान्ति, यष्टीः प्रवेशय etc is also not a proper ground as we have to understand the meaning of the expression तात्पर्य in tune with the अपौरुषेयत्व of veda.

अन्वयानुपपत्तिस्तु तज्ज्ञप्ताविति विवेकः । केचित्तु– छात्रिणो यान्ति, यष्टीः प्रवेशय, इत्यादौ अन्वयानुपपत्तेरभावात्तात्पर्यानुपपत्तिरेव हेतुरित्याहुः ।

तन्न । अन्वयानुपपत्तिमज्ञात्वा तात्पर्यानुपपत्तेः दुर्बोधत्वेन अन्वयस्य विषयतया तात्पर्यनिरूपकत्वेन चान्वयानुपपत्तेः प्रथमोपस्थितत्वाच्च ॥

## ६६. लक्षणादेः अभिधातः भेदसमर्थनम्

Some argue that 'Let the word Gangā convey तीर also by शक्ति i.e. primary denotative power only. This is not correct. To convey तीर by शक्ति there is no प्रमाण such as वृद्ध व्यवहार. Hence it is conveyed by लक्षणा i.e. by secondary denotative power only.

ननु गङ्गाशब्दस्य पूर इव तीरेऽपि शब्दान्तरे क्लृप्ता शक्तिरस्तु । किं लक्षणाकल्पनेनेत्यक्षादिशब्द-वन्नानार्थतैवेति चेन्न । तीरादिशक्तौ प्रमाणस्य वृद्धव्यवहारदर्शनादेरभावात् ।

It cannot be argued that the समभिव्याहार i.e. nearby occurrence of the word घोष itself is प्रमाण. When तीर can be conveyed by लक्षणा, there is no reason to think of शक्ति in तीर on the ground of समभिव्याहार.

न च घोषादिपदसमभिव्याहार एव तत्र प्रमाणमिति वाच्यम् । गङ्गाशब्दस्य तीरेण क्लृप्तात् परम्परा-सम्बन्धादेव बोधकत्वोपपत्तौ समभिव्याहारस्य साक्षात् सम्बन्धरूपशक्त्यकल्पकत्वात् ।

Further, conveying mere तीर by शक्ति is not sufficient. It has to be conveyed as गङ्गातीर. This means that शक्ति to convey पूर is also necessary. This amounts to envisaging two शक्तिs one of पूर and another for तीर. This is not desirable. If both these are taken as the meanings, अनुपपत्ति of the meaning पूर cannot be shown.

किञ्च तीरमात्रशक्तावतिप्रसङ्गेन गङ्गातीरे शक्तेर्वक्तव्यतया तीरार्थे प्रयोगेऽपि पूरशक्तिरावश्यकी । अपि च गङ्गाशब्दस्यानेकार्थत्वे अनुपपत्तिपुरःसरं तीरधीर्नस्यात् ।

It cannot also be contended that 'Let तीर be taken by way of अध्याहार, because, there is no आकाङ्क्षा. For instance the statement द्वारम् has the आकाङ्क्षा for पिधेहि. Hear there is no आकाङ्क्षा. तीर cannot be taken by अर्थापत्ति also. The ground for अर्थापत्ति is that the speaker is आप्त. However a speaker who makes unintelligible statement cannot be considered as आप्त.

न च तीरशब्दाध्याहार एव तर्ह्यस्त्विति वाच्यम् । निराकाङ्क्षत्वात् । ननु तथाप्यर्थापत्त्यैव तीरधीरस्तु वक्तुराप्तेः प्रतीतार्थानुपपत्तेश्च विरोधेनार्थान्तरकल्पनादिति चेन्न ।

लक्षणाद्यकल्पनेऽबोधकं पदं प्रयुञ्जानस्याप्तत्वानिश्चयेनाप्तत्वरक्षणार्थं तत्कल्पनात् ।

## ६७. लाक्षणिकादेः अनुभावकत्वसमर्थनम्

In Tatvachintāmaṇi Gangeśa states that the statement made by utilizing the primary denotative power is अनुभावक. However a statement made by utilizing the secondary denotative power is स्मारक only. This is not correct. It is already stated earlier that the words are not स्मारक. These are only अनुभावक.

यत्तु मणावुक्तम् – वाचकमेवानुभावकम् । लाक्षणिकादिकं तु स्मारकमेव । शक्तत्वस्यैवानुभावकत्वे तन्त्रत्वात् । तन्न । पदं न स्मारकमित्युक्तत्वेन गङ्गापदस्याननुभावकतायामबोधकत्वापातात् ।

## ६८. लाक्षणिकादेः शक्यसंबन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम्

In Tatvachintāmaṇi Gangeśa takes stand that by the word गङ्गा, तीर is only conveyed. The गङ्गा सम्बन्धित्व is not conveyed though it is actually there. If both are to be conveyed. Then it results in वृत्तिद्वय ।

यच्चोक्तं मणौ – गङ्गाशब्देन वस्तुगत्या यद्गङ्गासम्बन्धितीरं तदेव तीरत्वेनोपस्थाप्यते । न तु गङ्गासम्बन्धित्वेन । युगपद् वृत्तिद्वयविरोधात् । गङ्गासम्बन्धे गङ्गासम्बन्धाभावाच्च ।

This is not correct. Both गङ्गा सम्बन्ध and तीर are conveyed by लक्षणा only. The अनुभव is not merely as तीर but it is as गङ्गातीर. Otherwise पावित्र्य etc प्रयोजनs intended by the speaker will not be comprehended.

तन्न । गङ्गायां घोषो मत्स्यश्चेत्यादौ युगपत् वृत्तिद्वयदर्शनात् । गङ्गासम्बन्धितीरस्य लक्षणयैवोपस्थितेश्च । अनुभवश्च न तीरत्वेनैव । किन्तु गङ्गासम्बन्धितीरत्वेन । अन्यथा वक्त्रभिप्रेतस्य पावित्र्यदेरसिद्धेः । श्रोतुश्च गङ्गातीरे एव प्रवृत्याद्यनुपपत्तेश्च ।

Here an important point has to be noted. Advaitins talk of लक्षणा in respect अखण्ड ब्रह्मन्. This stands rejected, because, it is shown above that the लक्षक word is presented as शक्यसन्बन्धि only.

एतेनाखण्डे ब्रह्मणि वेदान्तानां लक्षणेत्यद्वैतिमतं निरस्तम् । लक्षकस्य शक्यसम्बन्धित्वेनैवोपस्थापकत्वात् ।

## ६९. स्वमते गौण्या लक्षणातो भेदप्रकारः

Some argue that गौणी is not a distinct category from लक्षणा. A word instead of conveying its meaning conveys another meaning is common both to गौणी and लक्षणा.

It cannot be argued that while गौणी is based on सादृश्य, लक्षणा is based on सम्बन्ध, because, सादृश्य is also a सम्बन्ध.

अथ परशब्दस्य परत्र वृत्तित्वाविशेषात्कथं गौणी लक्षणातो भिन्ना । सादृश्यस्यापि सम्बन्धत्वात् ।

This is not correct. सादृश्य is quite distinct from सम्बन्ध. We state that इमौ सदृशौ but not इमौ सम्बद्धौ. मुख्यार्थ सम्बन्ध is the ground for लक्षणा and सादृश्य is the ground for गौणी. Therefore these are distinct.

तन्न । इमौ सम्बुद्धौ सदृशौ चेति प्रतीत्योर्विषयकृत वैलक्षण्यं सर्वसाक्षिकम् ।

## ७०. परोक्तस्य गौण्याः लक्षणातः भेदस्य भङ्गः

Some state that the attributes valour etc present in the lion are also present in माणवक. This is the ground for गौणीवृत्ति. This distinguishes गौणी from लक्षणा. This is not correct. The attributes of lion cannot be present in माणवक. One and the same attribute cannot be present in two objects.

अन्येतु – सिंहनिष्ठशौर्यादिगुणा लक्ष्यमाणा सिंहशब्दस्य माणवके वृत्तौ निमित्तमित्याहुः । तन्न । व्यधिकरणानां गुणानां माणवके वृत्तौ निमित्तत्वायोगात् ।

Some others state that सादृश्य is a special kind of relation. However, when it is utilized as a relation in general, then, it is the case of लक्षणा. But when it is utilized as सादृश्य, then, it is गौणी. This is also not correct. It is already stated above that सादृश्य is not a सम्बन्ध.

के चित्तु सादृश्यस्य सम्बन्धविशेषत्वेऽपि यत्र सम्बन्धत्वेन हेतुता सा लक्षणा । यत्र तु सादृश्यत्वेन हेतुता सा गौणीत्याहुः ।

तन्न । सादृश्यं सम्बन्धविशेषो नेत्युक्तत्वेन क्लिष्टकल्पनायोगात् ।

## ७१. रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः

Among the three kinds of मुख्यवृत्तिs i.e. primary denotative powers. योगरूढि is superior to the other two viz. रूढि and योग. For instance, the रूढ meaning of the word पङ्कज is conveyed by the word of पद्म also. It's यौगिक meaning is conveyed by the word कर्दमजात. However to obtain the meaning of पङ्कज as पद्म both अवयव and समुदाय have to be taken into account. Therefore योगरूढि is superior to mere रूढि and mere योग.

अत्र मुख्यवृत्तित्रये पङ्कजादिशब्देषु रूढेर्योगाच्च योगरूढिः प्रबला । रूढार्थस्य पद्मशब्देनापि, यौगिकार्थस्य थ कर्दमजातशब्देनापि प्रतीतिसम्भवेनाप्तप्रयुक्तानामवयवानां समुदायस्यार्थसार्थक्यायोभयानुग्राहकस्यौचित्यात् ।

Keeping this in mind the word ब्रह्मन् is not to be taken is the sense of जीव by mere रूढि. The word नारायण is not to be taken in the sense of some one who is in the water by mere योग. These two words have to be taken in the sense of गुणपूर्णब्रह्मन् by योगरूढि.

एवं वेदेऽपि ब्रह्मादिशब्दैर्न रूढिमात्राज्जीवादेर्धीः । नारायणादिशब्दैरपि न योगमात्रादबयनवस्तुमात्रस्य ।

Between रूढि and योग, रूढि is Superior. For instance, in the statement रथकारोऽग्नीनादधीत the word रथकार has to be taken in the sense of a person of रथकार caste. Which is सङ्कर जाति but not in the योग sense of a person who prepares रथ.

रूढियोगयोस्तु योगाद्रूढिः प्रबलेति तया योगस्य अपहारः । यथा वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्दो सङ्करजातौ रूढ्या रथकर्तरि ।

## ७२. लक्षणातः गौण्याः प्राबल्यनिर्णयः

Among the two secondary denotative powers गौणी is Superior to लक्षणा. This position is explained with reference to the statement तत्त्वमसि. According to dvaita interpretation, the two words तत् and त्वम् are taken in their primary sense ब्रह्मन् and जीव and the सामानधिकरण्य is taken in the sense of सादृश्य that is गौण. According to Advaita interpretation, तत् and त्वम् are taken in the secondary sense i.e. लक्षणा. The सामानाधिकरण्य is taken in the primary sense. Here, it is found that in the case of प्रधान words primary meaning is given up and in the case of अप्रधान i.e. सामानाधिकरण्य, the

primary meaning is accepted. From this it is clear the लक्षणा adopted by them has resulted in प्रधानबाध and अनेकबाध. This indicates that लक्षणा is inferior to गौणी.

तत्वमसीत्यत्र गौणी चेत् प्रधानं पदद्वयं मुख्यार्थम् । अप्रधानं सामानाधिकरण्यमात्रं सादृश्ये गौणम् । पररीत्या लक्षणा चेत्पदद्वयममुख्यार्थं, सामानाधिकरण्यमात्रं मुख्यमिति प्रधानबाधादनेकबाधाच्च लक्षणा जघन्येति ।

# समासार्थवादः

## ७३. तत्पुरुषे लक्षणादिभङ्गः

In tatvachintāmaṇi Gangeśa states that in the तत्पुरुष compound such as राजपुरुषः, लक्षणा has to be made for the word राजन् in the sense of राजसम्बन्ध. This is not acceptable to Tarkatandava. In the कर्मधारय compound such as नीलोत्पलम् अभेदान्वय is accepted by Gangeśa. Similarly in तत्पुरुष, सम्बधान्वय can be comprehended without लक्षणा.

यदुक्तं मणौ राजपुरुष इत्यादितत्पुरुषे राजपदस्य सम्बन्धे सम्बन्धिनि वा लक्षणेति ।

तन्न । त्वन्मते नीलोत्पलमिति कर्मधारये नीलोत्पलयोरभेदस्येवेहापि राजपुरुषयोः सम्बन्धस्य वृत्तिं विनैव अन्वयतया भानोपपत्तेः ।

It cannot be argued that अभेदान्वय is permitted only in such cases where in विरुद्ध विभक्तिs are not found. This rule is not tenable, because, even in such instances where in विरुद्ध विभक्तिs are not present अभेदान्वय is not accepted. For instance, in the statements घटो न पटः and चन्द्र इव, मुखम्. There are no विरुद्धविभक्तिs still अभेदान्वय is not accepted.

न च विरुद्धविभक्त्यनवरुद्धनामार्थयोरभेदेनैवान्वयनियमान्न सम्बन्धोऽन्वयतया भातीति वाच्यम् । घटो न पटः, चन्द्र इव मुखमित्यादौ, पटनञ्पदार्थयोः पटाभावयोः, चन्द्रेवशब्दार्थयोः चन्द्रसादृश्ययोः चाभेदाभावात् ।

In view of this तार्किकs contention that in the compound words such as राजपुरुष there is लक्षणा of the word राजन् in the sense राजसम्बधिन् is not accepted.

The वैय्याकरणs state that by the word राजपुरुष the meaning राजसम्बन्धिपुरुष is conveyed by अखण्डशक्ति. This is not correct, because, in the compound words the

meaning of the constituent words is comprehended. In view of this the meaning of the word राजपुरुष is conveyed by अभिधावृत्ति i.e. primary denotative power.

नापि राजसम्बन्धिपुरुषेऽखण्डशक्तिरिति वैयाकरणमतं युक्तम् । अवयवार्थानुभवात् । उक्तरीत्याऽन्य-लभ्यतयाऽखण्डशक्तिकल्पकाभावाच्च ।

Tarkatāṇḍava illustrates this by quoting the words वामदेव and नारायण from श्रुति and स्मृति. Both these words are in तत्पुरुष compound. However these convey the respective meanings i.e. sage वामदेव and the Supreme God नारायण without any लक्षणा for the first word of the compound वाम and नार.

अत एव श्रुतौ– "तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षते । एतमेव सन्तं" इति षष्ठीतत्पुरुषे वामदेवशब्दे,

अनुव्याख्याने च–

दोषारच्छिन्द्रशब्दानां पर्यायत्वं यतस्ततः ।
गुणा नारा इति ज्ञेयास्तस्मान्नारायणः स्मृतः ॥

इति नारायणशब्दे च अभिधैवोक्ता ।

In Nyāyasudhā the compound word ब्रह्मजिज्ञासा is considered as षष्टी तत्पुरुष word. There is no लक्षणा of the word ब्रह्मन् here.

सुधायां च ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठीत्युक्तम् ।
न तु ब्रह्मकर्मत्वे ब्रह्मपदं लाक्षणिकमित्युक्तमित्यर्थः । (न्या.दी.)

## ७४. बहुव्रीहौ लक्षणाभङ्गः

In Tatvachintāmaṇi Gaṅgeśa states that in the बहुव्रीहि compound such as चित्रगुः, after the comprehension of the syntactical connection of the two words चित्राः and गावः. The word conveys the owner of the cows by लक्षणा. The word चित्राः conveys its meaning by the primary denotative power only. There is no लक्षणा in the two words. Thus there is अन्यपदार्थ लक्षणा in the case of बहुव्रीहि compound words.

यच्चोक्तं मणौ– चित्रगुमानयेत्यादिबहुव्रीहौ चित्रगोपदार्थयोरन्वयबोधानन्तरं गोपदं स्वज्ञाप्यचित्र-गोसम्बन्धिनस्तत्स्वामिनो लक्षकम् । चित्रपदं तु गवान्वितस्वार्थबोधकतया मुख्यार्थमेव । न तु पदद्वये एका अनेका वा लक्षणा ।

This is not correct. समुदायशक्ति has to be accepted in अन्यपदार्थ.

In the instance of चित्रगुः चित्रगोस्वामिन् is conveyed by समुदाय शक्ति but not by लक्षणा.

तन्न । अन्यपदार्थे समुदायशक्त्यभावे हि केशाकेशीत्यादिबहुव्रीहौ केशग्रहणप्रहरणकर्मव्यतिहारपूर्वक-युद्धरूपस्यान्यपदार्थस्यैकेनैव केशशब्देन लक्षणासम्भवेन इतरवैयर्थ्यं स्यात् ।

It should be noted here that in the case of बहुव्रीहि compound अन्यपदार्थ is conveyed through the conveying of अवयवार्थ i.e. constituent words meanings. It is a case of योगरूढि. It is योग because the meaning of the constituent words is taken into account and it is रूढि because, the अन्यार्थ emerging from this is conveyed by रूढि. This is clear from the explanation offered to the word विश्वामित्र taking it as a word of बहुव्रीहि compound. The word नारायण is also explained as an instance of बहुव्रीहि compound also.

I) वस्तुतस्तु बहुव्रीहौ चित्रायां गवि योगोऽन्यपदार्थे रूढिरिति पङ्कजादिवद्योगरूढिः । चित्रगुसमुदायस्य अन्यपदार्थे उत्सर्गतस्तन्नियमात् ।

II) अत एव श्रुतौ ''तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किं च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षते । एतमेव सन्तं'' इति बहुव्रीहौ विश्वामित्रशब्दे, स्मृतौ च ''अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः'' इति नारायणपदे मुख्यतैवोक्ता ।

## ७८. कर्मधारयतत्पुरुषयोः मण्युक्तवैषम्यभङ्गः

In Tatvachintāmaṇi Gangeśa states that in कर्मधारय compound words such as नीलोत्पलम् there is अभेदान्वय. There is no लक्षणा. He also states that two नामार्थs are the ground for अभेदान्वय.

यच्चोक्तं मणौ– नीलोत्पलमिति कर्मधारये व्यास इव विशेषणविभक्तेरभावेन सामानाधिकरण्या-भावेऽपि नामार्थयोरभेदान्वयव्युत्पत्तेरभेदान्वयतया भातीति न लक्षणेति ।

This is not acceptable to Tarkatāṇḍava. For अभेदान्वय नामार्थत्व alone is not the ground. The real ground for अभेदान्वय is एकविभक्तितत्व while भिन्नविभक्तिकत्व is the ground for सम्बन्धान्वय. Hence there is no लक्षणा either in the case of कर्मधारय nor in the case of तत्पुरुष.

लाघवात्समासे व्युत्पत्यन्तरे मानाभावाच्चैकविभक्तिकत्वं अभेदस्य अन्वयत्वे तन्त्रम् । भिन्न-विभक्तिकत्वं च सम्बन्धस्यान्वयत्वे तन्त्रम् । तच्च कर्मधारये तत्पुरुषे च लुप्तं स्मर्यत इति नोभयत्रापि लक्षणेत्येव युक्तम् ।

## ७६. नञर्थ निर्णयः

In Tatvachintāmaṇi, Gangeśa states प्रतिषेध i.e. negation, is the meaning of नञ्, but it is not अन्योन्याभाव i.e. reciprocal negation.

भूतले न घटः न पचतीत्यादौ नञः केवलप्रतिषेध इव केवलान्योन्याभावे क्वाप्यप्रयोगात् ।

However, Tarkatāṇḍava does not agree with this. And assigns three meanings to नञ् namely अभाव, भिन्न and विरोधि. Tarkatāṇḍava quotes Aitareya Bhāṣya in support of this point.

तन्न । त्रिष्वपि नञः शक्तिरेव । उक्तं चैतरेयभाष्ये अइत्ययं शब्दः प्रस्तुतस्याभावं विरोधिनमन्यं च वदतीति । कर्मनिर्णये चासद्विलक्षणमित्यत्र अभावान्यविरोधिनां मध्ये नञः कोऽर्थ इति ।

## ७७. द्वन्द्वे साहित्यलक्षणा भङ्गः

As a preliminary to the discussion whether there is लक्षणा in the case of द्वन्द्व compound or not, Tarkatāṇḍava explains the meanings of the particle च. Apart from being the basis of द्वन्द्व compound, च also means समुच्चय and अन्वाचय. For instance धवम् छिन्दि खदिरम् च is an instance of समुच्चय. Here two words धव and खधिर get connected with the verb छिन्दि without depending upon each other. Here it is a case of समुच्चय but not that of द्वन्द्व compound. व्यपेक्षा i.e. needing each other is the ground for compounding.

The instance of अन्वाचय is भिक्षाम् अट, गांश्च पश्यसि चेत् आनय. Go around for भिक्षा and if you happen to see the cow bring it. Here च means अन्वाचय. Here also there is no द्वन्द्व compound since the two acts do not depend upon each other.

एवं द्वन्द्वेऽपि न लक्षणा । तथाहि– यद्यपि चार्थमात्रे द्वन्द्व उक्तः । तथापि धवं छिन्धि, खदिरं चेति समुच्चये, भिक्षामट गां पश्यसि चेदानयेत्यन्वाचये, च न समासः । तत्र द्वयोः कर्मकारकयोरन्योन्य-निरपेक्षयोरेव क्रियान्वयेन व्यपेक्षालक्षणसामर्थ्याभावात् । तत्रोभयत्र क्रियान्वयस्योद्देश्यत्वे समुच्चयः । एक गतस्यैवोद्देश्यत्वे चान्वाचयः ।

द्वन्द्व compounds is of two kinds viz. (१) इतरेतरयोग (२) समाहार. The example for इतरेतरयोग is धवखधिरौ छिन्दि. Cut the two trees, namely धव and खधिर. The example for समाद्रद्वन्द्व is पाणिपादम्, i.e. hands and feet. In both these cases the objects gets connected with the verb needing each other.

When the object is important, it is a case of इतरेतरयोग and when the attribute साहित्य is important, then, it is the case of समाहर in the case of इतरेतरयोग there is no need of लक्षणा.

धवरवदिरौ छिन्धीति इतरेतरयोगे, पाणिपादमित्यादिसमाहारे चान्योन्यसापेक्षयोरेव क्रियान्वयात् समासः । तत्र धर्मिप्राधान्ये इतरेतरयोगः, साहित्यरूपधर्मप्राधान्ये तु समाहारः ।

तत्र न तावदितरेतरयोगद्वन्द्वे लक्षणा । शक्ययोर्धवरवदिरयोरेव क्रियान्वयात् ।

However मीमांसकs take the position that लक्षणा is necessary in इतरेतरयोगद्वन्द्व. They argue that the words धव and खधिर are not capable of separately getting connected with the dual number conveyed by case suffix, because, the dual number is not present separately in them. If it is said that they can be connected, then, it amounts to saying that there are two धव trees and two खदिर trees. In view of this, the two together have to be connected with the dual number. This means that these two have to be comprehended together. This can be managed only by considering that the first word धव conveys the two together. This need not result in two denotative powers, (1) to denote धव (2) to denote धव सहित खधिर. धव is also included in the लक्ष्यार्थ just as काक is also included in the लक्ष्यार्थ viz. दध्युपघातक, in the instance of काकेभ्यो दधि रक्ष्यताम् This does not make the word खधिर Superfluous, because, without it the सहित्य of the two cannot be conveyed.

In view of this मीमांसक feels लक्षणा is necessary in the case of इतरेतरयोग compound.

अत्र मीमांसकाः–

i) इतरेतरयोगद्वन्द्वे धवखदिरौ प्रत्येकं न विभक्त्यर्थद्वित्वान्वययोग्यौ । न वा तत्र साकांक्षौ । एकत्र द्वित्वाभावात् ।

यद्यपि द्वित्वस्य व्यासज्यवृत्तित्वेनैकाश्रितत्वमपि, तथापि नैकत्र विश्रान्तिः । यत्र च विश्रान्तिस्तत्रैवाकांक्षादि । अन्यथैकत्रापि द्वौ बहवः इति स्यात् । अतो द्वन्द्वे पदशक्यस्य धवत्वादिनोपस्थितस्य धवादेर्न प्रत्येकं द्वित्वान्वयबोधः ।

बोधे वा धवद्वयस्य खदिरद्वयस्य च धीः स्यात् । तस्मात्सहितावस्थमुभयं द्वित्वान्वययोग्यं तत्साकांक्षं चेति सहितयोर्धवखदिरयोरुपस्थितये धवपदे लक्षणा प्राथम्यात् ।

ii) न चैवं वृत्तिद्वयापत्तिः । दध्युपधातकत्वेन रूपेण काकस्येव सहितत्वेन रूपेण धवस्यापि लक्ष्यत्वात् । न चैवं खदिरपदवैयर्थ्यम् । तेन विना साहित्याश्रयस्य खदिररूपस्य द्वितीयविशेषस्यासिद्धेः । खदिरपदाभावे हि लक्षणाविरहेण धवद्वयधीः स्यात् । तस्मात् द्वन्द्वे साहित्ये लक्षणेति ।

Tarkatāṇḍava does not agree with this approach. The meaning of प्रकृति part of the word gets connected with the प्रत्यय part viz. विभक्ति, in the same way in which it is conveyed by प्रकृति. In the case of तत्पुरुष, उत्तरपदार्थ is conveyed prominently and hence the same is connected with विभक्ति. In the case of द्वन्द्व the meanings of both धव and खधिर are conveyed prominently. Hence both these get connected with the विभक्ति. It cannot be argued that without the लक्षणा of साहित्य if these get separately connected, it results in two separate sentences, because, द्वित्व i.e. the dual number remains in both. Hence these two do not separately get connected. Therefore there is no need of लक्षणा.

i) एवं येन रूपेण प्रकृत्या स्वार्थ उपस्थापितस्तेनैव रूपेण तस्य विभक्त्यर्थाद्यन्वयो व्युत्पन्नः तथा च तत्पुरुषे उत्तरपदार्थः प्राधान्येनोपस्थापित इति तत्र तस्यैव तथैव विभक्त्यर्थान्वयः । द्वन्द्वे तु उभावपि प्राधान्येनोपस्थापिताविति तत्र द्वयोरपि विभक्त्यर्थान्वयो युक्तः ।

ii) न च साहित्यं विना धवखदिरयोः प्रत्येकमन्वये धवं खदिरं च छिन्धीत्यत्रेव वाक्यभेदः स्यादिति वाच्यम् । द्वित्वस्य व्यासज्यवृत्तित्वेन तयोस्तेन सह प्रत्येकमनन्वयात् । क्रियायास्त्वव्यासज्यवृत्तित्वेन साहित्यलक्षणापक्षेऽपि प्रत्येकमन्वयात् ।

In समाहर द्वन्द्व also there is no need of लक्षणा in साहित्य. The समाहर is conveyed by the समुदाय शक्ति of the compound word. Similarly there is no need of लक्षणा in the case of सरुपैकशेष as घटौ. समानार्थ विरुपैकशेष as वक्रदन्तौ and भिन्नार्थविरुपैकशेष as पिता च माता च पितरौ there is no need of लक्षणा.

समाहारद्वन्द्वे यद्यपि समाहाररूपं साहित्यं पदार्थः । अत एव तत्रैकवचनम् । तथापि तत्पुरुष-प्रस्तावोक्तरीत्या विग्रहस्थसमाहारपदेन वा समासगतसमुदायशक्त्या वा तद्धीरिति न तत्रापि लक्षणा ।

घटाविति सरूपैकशेषे वक्रदन्तश्च कुटिलदन्तश्च वक्रदन्तौ इति समानार्थविरूपैकशेषे च लक्षणा-प्रसक्तिरेव न श्रुता । श्रुतस्य घटपदस्यैव घटान्तरेऽपि, वक्रदन्तपदस्य च कुटिलदन्तान्तरेऽपि शक्तत्वात् ।

पिता च माता च पितराविति भिन्नार्थविरूपैकशेषेतु विग्रहस्थमातृ शब्देनैव मातृधीरिति न तत्रापि लक्षणा ।

# अध्याहारवाद

## ७८. शब्दाध्याहारसमर्थनम्

Tarkatāṇḍava states that when the statement द्वारम् i.e. door, is made there is the need of a verb to make it a complete sentence. Hence the verb पिधेहि i.e. close has to be taken by way of अध्याहार. In this respect there is a controversy whether the word पिधेहि itself has to be taken by अध्याहार or bringing its meaning to the mind is sufficient. Tarkatāṇḍava states that the word itself has to be taken. However, Prābhākaras take the stand that it is the meaning that has to be presented to the mind in the case of अध्याहार. In other words it is not शब्दाध्याहार that is required but it is अर्थाध्याहार that is necessary. This is not acceptable to Tarkatāṇḍava. Tarkatāṇḍava insists that it is शब्दाध्याहार but not अर्थाध्याहार.

द्वारमित्यादौ तु पिधेहि पदस्यैवाध्याहारः । नत्वर्थस्य । प्राभाकरास्तु– अन्वयप्रतियोग्यलाभात् अन्वयानुपपत्तिरिति अन्वयप्रतियोगिनोऽर्थस्यैवाध्याहारः । न तु पदस्य ।

Gangeśa also takes the view that शब्दाध्याहार is necessary. He gives a reason for it. क्रिया and कारक words need each other presented by the words only. Hence शब्दाध्याहार is necessary.

Further he argues that if the word पिधेहि is not brought by अध्याहार, द्वितीयाविभक्ति for the word द्वार cannot be justified. Though Tatvachintāmaṇi accepts शब्दाध्याहार, the arguments given by Tatvachintāmaṇi to establish it are not adequate. This is pointed out by Tarkatāṇḍava in detail.

यत्तूक्तं मणौ– क्रियाकारके हि क्रियाकारकोपदोस्थापिते एव परस्परमाकाङ्क्षतः । न तूपस्थिति-मात्रेण । तस्मादाकांक्षानुरोधेन पदविशेषजन्यपदार्थोपस्थितत्वेन कारणतेति शब्दाध्याहारसिद्धिः ।

किञ्च द्वारमित्यादौ सकर्मकक्रियापदानध्याहारे द्वितीया न स्यात् ।

Tarkatāṇḍava gives a number of पूर्वमीमांसा examples to justify शब्दाध्याहार.

(1) In सौर्य याग in the मन्त्र, अग्नये जुष्टं निर्वपामि brought by Atideśa, the substitution of the word अग्नि by the word सूर्य is made by अध्याहार.

(2) For the statement इषे त्वा, छिनत्ति is added by अध्याहार

(3) For the statement स्रुवेण अवद्यति the word द्रवद्रव्यम् is added by अध्याहार.

किञ्चार्थाध्याहारे सौर्ययागेऽतिदिष्टेऽग्नये जुष्टं निर्वपामि इति मन्त्रेऽग्निपदस्थाने सूर्यपदप्रक्षेपरूपाध्याहारोक्तिः, छेदने विनियुक्ते इषेत्वेत्यादिमन्त्रे छिनत्तीत्यादिशब्दाध्याहारोक्तिः, स्रुवेणावद्यतीत्यादावर्थाद्धा कल्पनैकदेशत्वादित्यादि जैमिनिसूत्रभाष्यादौ द्रवद्रव्यमित्यादिशब्दाध्याहारोक्तिश्च न स्यात् । न ह्यर्थः शब्दस्यैकदेशः ।

From all these instances it is clear that शब्दाध्याहार is necessary. That's why in the sūtra अथातो ब्रह्मजिज्ञासा the word कर्तव्या is introduced by अध्याहार.

एतदेवाभिप्रेत्य जिज्ञासासूत्रे भाष्यकारादिभिः कर्तव्यपदाध्याहारः ।

## ७९. मीमांसकोक्तस्य उपसंहारात् उपक्रमप्राबल्यभङ्गः

Tarkatāṇḍava quotes from समन्वयाधिकरण of Brahmasūtra Bhāṣya, the verse that mentions उपक्रम, उपसंहार etc तात्पर्यलिङ्गs. From Anuvyākhyāna the verse that states the fact that among these the criterion mentioned later is superior to that which is mentioned earlier is quoted. From this it can be gathered that उपसंहार is superior to उपक्रम. This is because उपसंहार is a kind of commentary on उपक्रम.

अत्र स्वार्थे शब्दात्मकानामप्युपक्रमादीनां समन्वयसूत्रे–

**उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ।।**

इति भाष्ये तात्पर्यलिङ्गत्वमुक्तम् । अनुव्याख्याने च–

**उपक्रमादिलिङ्गानां बलीयो ह्युत्युत्तरोत्तरम् ।**
**श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात् ।**

इत्युपक्रमादीनां परबलीयस्त्वमुक्तम् ।

However, मीमांसकs take the view that उपक्रम is superior to उपसंहार. This is not correct. Tarkatāṇḍava mentions a number of पूर्वमीमांसा examples wherein उपसंहार is stated to be superior to उपक्रम.

(1) In अक्ताधिकरण the statement अक्ता: शर्करा: उपदधाति is found at the उपक्रम. Here the word अक्ता: means anointed. But it is not clear by what kind of oil or any other oily substance the anointment be made. However the statement तेजौ वैधृतम् is found at उपसंहार. Taking this as an explanation or commentary of अक्ता: the मीमांसकs apply it as anointed by ghee. Here they accept the superiority of उपसंहार to उपक्रम.

मीमांसकास्तु– उपसंहारादुपक्रमो बलीयानित्याहुः । तन्न । तथात्वे अक्ताधिकरणादिबहुबाधप्रसङ्गात् ।

अक्ताधिकरणे ''अक्ता: शर्करा उपदधाति'' इत्युपक्रमेण व्याख्यानरूपस्य तेजो वै घृतमित्युपसंहारस्य–

(ii) In another context the statement वास: परिधत्ते occurs at the उपक्रम. However it is not clear what kind of वास: i.e. cloth, is meant. But at उपसंहार the statement सर्वंदैवत्यं क्षौमम् occurs. Taking this as an explanation or commentary of वास: the मीमांसकs interpret वास: i.e. as silk cloth.

''वास: परिधत्ते'' इत्युक्रमेण च ''एतद्वैसर्वंदैवत्यं यत्क्षौमम्'' इत्युपसंहारस्यानुसरणात् ।

(iii) तद्व्यपदेशधिकरणे the statement श्येनेन अभिचरन् व्यजेत is found. Here it is not clear whether the word श्येन refers to the bird to be offered at the sacrifice or it is the name of the sacrifice. At उपसंहार the statement यथा वै श्येन occurs. Here the bird श्येन is compared with this याग. Therefore this word cannot be taken in the sense of श्येन bird but it has to be taken as the name of the sacrifice. Here again उपसंहार statement is found to be an explanation or commentary of उपक्रम statement. From these statements it is clear that उपसंहार is superior to उपक्रम.

तद्व्यपदेशाधिकरणे च– ''श्येनेनाभिचरन् यजेत'' इत्युपक्रमस्थश्येनशब्दस्य ''यथा वै श्येन'' इत्युपसंहारेण गौणार्थस्वीकारात् ।

(iv) In the context of अग्निषोमयाग the statement अग्निषोमीयम् पशुमालभेत is found at उपक्रम. Here, it is not clear which kind of पशु is to be offered but at उपसंहार the statement छागस्य: वपाया: occurs. This is a kind of explanation or commentary of उपक्रम statement explaining that the पशु meant is छाग.

किञ्च पशुमालभेतेति पशुशब्दश्च ''छागस्य वपाया मेदसोऽनुब्रूहि'' इति मन्त्रस्थ छागशब्दाद्विशेषपर इति षष्ठान्ते छागो वा मन्त्रवर्णादित्युक्तम् ।

Tarkatāṇḍava discusses the implications of all these अधिकरणs in detail, and concludes that उपसंहार is superior to उपक्रम.

## ८०. परोक्तश्रुत्यादिलक्षणभङ्गः

In this section Tarkatāṇḍava gives the definitions of श्रुति, लिङ्ग etc. according to Pūrvamīmāmsā and Dvaita Vedānta. Reviews the Pūrvamīmāmsa definitions and points out that the Dvaita Vedanta definitions are more clear and superior.

**Pūrvamīmāmsa definitions**

श्रुति– A vedic word that conveys the main and subsidiary relation without requiring लिङ्ग etc other प्रमाण.

लिङ्ग– The capacity of a word to convey the main and subsidiary relation.

वाक्य– Two words or two sentences occurring side by side that convey the main and subordinate relation without any case suffix etc indication.

प्रकरण– The statements that need each other to get connected as main and subsidiary.

स्थान– Common place

समाख्या– The name that enables the main and subsidiary to get connected.

In all these cases, these प्रमाणs are utilised to convey the main and subsidiary relation. These are designated as अङ्गत्व बोधकप्रमाणs. However, Dvaita Vedānta widens the scope of these and utilises these to determine the meaning of Vedic words and Vedic statements.

**Dvaita Vedānta definitions of श्रुति, लिङ्ग etc.**

श्रुति– A vedic word that has रूढ or योगरूढ meaning.

लिङ्ग– A vedic word or expression that conveys an exclusive characteristic of an object or a person.

वाक्य– A statement that is complete by itself and does not require any more clause or statement.

प्रकरण– A group of sentences that deal with only one topic.

स्थान– A statement that states many points that serve a common purpose.

समाख्या– Similar statement that affirms the present statement.

From these very definitions it is clear that these are अर्थनिर्णायक.

**मीमांसकमतानुसारेण श्रुत्यादीनां लक्षणानि–**

श्रुतिः– निरपेक्षः (लिङ्गादिप्रमाणान्तरनिरपेक्षः) रवः श्रुतिः ।

लिङ्गम्– शब्दसामर्थ्यं लिङ्गम् ।

वाक्यम्– समभिव्याहारो वाक्यम् । (शेषशेषिवाक्ययोः सहोच्चारणं)

प्रकरणम्– उभयाकांक्षा प्रकरणम् ।

स्थानम्– देशसादेश्यम् स्थानम् । (पाठसादेश्यम्, अनुष्ठानसादेश्यम्)

समाख्या– यौगिकः शब्दः । (वैदिकी–लौकिकी)

**द्वैतमतानुसारेण श्रुत्यादीनां लक्षणानि–**

श्रुतिः– नाममात्रेण निर्देशः श्रुतिः । (त.प्र.)

वाचकः (रूढः) शब्दः श्रुतिः । "नाममात्रेणेति" टीकायां मात्रशब्देन शुद्धो योगो व्यावर्त्यः । न तु रूढिसहितः । (ता.चं.)

लिङ्गम्– आसाधारणो धर्मः लिङ्गम् । (त.प्र.)

असाधारणधर्मार्पकः शब्दो वा तदर्पितोऽसाधारणधर्मो वा इह लिङ्गम् । (ता.चं.)

वाक्यम्– निराकांक्षपदानि वाक्यम् । (त.प्र.)

स्वस्मिन्नेव पूर्णाकांक्षात्वेनान्यत्र निराकाङ्क्षपदसंदर्भरूपवाक्यस्य तु स्वार्थे शब्दप्रमाणत्वम् । (ता.चं.)

प्रकरणम् – एकप्रमेयप्रतिपादकानेकवाक्यानि प्रकरणम् । (त.प्र.)

एकार्थतात्पर्ययुक्तानेकवाक्यसंदर्भः प्रकरणम् (ता.चं)

स्थानम्– अनेकप्रमेयप्रतिपादकमेकार्थे तात्पर्ययुक्तं स्थानम् । (त.प्र.)

एकार्थपरानेकप्रकरणसन्दर्भः स्थानम् । (ता.चं.)

समाख्या– समानोक्तिः समाख्या । (त.प्र.)

निर्णीतस्थले समानोक्तिः समाख्या । (ता.चं.)

Tarkatāṇḍava gives the details of श्रुति given in Pūrvamīmāmsa before reviewing it.

Śruti is of three types viz.

i) Injunctive ii) mention of the names of the deity etc

iii) conveying the main and subordinate relation. The third is of three types viz.

i) एकपद ii) एकप्रत्यय iii) विभक्ति

तत्र लिङादिश्रुतिर्विधात्री । इन्द्रादिश्रुतिरभिधात्री । विनियोक्त्र्यपि एक पदरूपा एकप्रत्ययरूपा विभक्तिरूपाचेति त्रिविधा । तत्राद्या यजेतेति पदम् । तेन हि प्रत्ययोक्तां भावनां प्रति प्रकृत्युक्तयागस्य शेषता भाति । द्वितीयातु पशुना यजेतेत्यत्र नेति तृतीया । तया हि स्वोक्तकरणत्वं प्रति स्वोक्तैकत्वस्य शेषतोक्ता । तृतीयापि शेषित्वबोधिका यथा व्रीहिन् प्रोक्षतीत्यादौ द्वितीयादिः । शेषत्वबोधका यथा अरुणया क्रीणातीत्यादौ तृतीयादिः ।

Tarkatāṇḍava points out that these are अभिधात्री type of words only i) The injunctive word conveys the injunction by रूढि ii) इन्द्र etc श्रुतिs convey इन्द्र etc deities iii) the suffixes convey कर्तृत्व, करणत्व etc. In this way all these are vedic expressions that convey their meaning by रूढि or योगरूढि. Hence, Dvaita definition of श्रुति applies to all these. There is no justification to classify them as i) injunction ii) Mere mention of name (iii) conveying the relation between the main and subordinate.

तत्र विधात्र्यां विधौ, अभिधात्र्याश्चेन्द्रादौ विनियोक्त्र्या अपि विभक्तिरूपायाः कर्मत्वकरणत्वादौ रूढत्वात् तत्राप्यस्मदुक्तं नामत्वरूपं श्रुतिलक्षणमस्त्येव ।

यच्च श्रुतेस्त्रित्वमुक्तं तदपि न । सर्वाऽपि श्रुतिरभिधात्र्येव । ज्ञापक एव हि शब्दो न तु कारकः । परं त्विन्द्रदिश्रुतिरिन्द्रमभिधत्ते । लिङादिश्रुतिस्तु विधिमित्यर्थभेदमात्रम् । न तु श्रुतेः स्वतो भेदः । यजेतेत्यत्रापि इष्टसाधनत्वरूपविधौ लिङो रूढत्वात् ।

After disposing of श्रुति Tarkatāṇḍava takes up लिङ्ग. लिङ्ग according to Mīmāmsa is सामर्थ्य i.e. the capacity of a word to convey the relation between the main and the

subordinate. However, in the instance given by Pūrvamīmāmsā, it is not सामर्थ्य that is the ground but it is अनुपपद्यमानत्व that is the ground for working out the relation between the main and the subordinate. Further, जैमिनि and शबर have used the word लिङ्ग in the sense of असाधारणधर्म and अनुमापक in several places.

i) बर्हिर्देवसदनं दामीत्यादिमन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गात् लवनशेषता ।

ii) सामर्थ्यरूपं लिङ्गमपि न स्वरूपेण शेषत्वे मानम् । किं तु वक्ष्यमाणरीत्याऽनुपपद्यमानतयेति । तत्राप्यस्मदुक्तं व्याप्यत्वरूपं लिङ्गत्वमस्त्येव । परोक्तलक्षणमेव जैमिनिनापि लिङ्गदर्शनाच्च इत्यादि बहुसूत्रैः शबरस्वामिनाच लिङ्गं च दृश्यते चतुर्दशपौर्णमास्यामाहुतयो हूयन्ते इत्यादि बहुभाष्यैर्लिङ्गतया व्यवहृतेषु तत्तदर्थज्ञापकेषु वैदिकलिङ्गेषु चाव्याप्तम् । किञ्च सामर्थ्यस्य लिङ्गत्वे ऐन्द्र्यादौ तस्य वाक्येन बाधो न स्यात् ।

The definition of वाक्य given by Mīmāmsā also needs supplementing the clause आकाङ्क्षायुक्त. Mere समभिव्याहार is not sufficient. The addition of आकाङ्क्षामत् results in Mīmāmsā adopting our definition.

यजेत स्वर्गकाम इति पदद्वयसमभिव्याहाररूपाद्वाक्यात् यागस्य स्वर्गशेषता । न ह्यत्र यागेनेति तृतीया स्वर्गमिति द्वितीया वा अस्ति । किन्तु समभिव्याहारादेव साध्यसाधनताधीः ।

परोक्तं वाक्यलक्षणमप्यस्मदुक्तेनाकाङ्क्षादिमत्वेन विशेषणीयम् ।

Mīmāmsā definition of प्रकरण as उभयाकाङ्क्षा is also incomplete. It is आकाङ्क्षायुक्तवाक्यसन्दर्भ that is प्रकरण but not mere आकाङ्क्षा. Just as for the अन्योन्यान्वय of पदार्थ, आकाङ्क्षादिमत् पदसंघात is required, for the अन्योन्यान्वय of वाक्यार्थ आकाङ्क्षादिमत् वाक्यसंघात is necessary.

प्रकरणम्– परोक्तं प्रकरणलक्षणमप्ययुक्तम् ।

साकाङ्क्षवाक्यसंदर्भ इव आकाङ्क्षायां प्रकरणशब्दाप्रयोगात् ।

यथा च– पदार्थयोरन्यान्यान्वये आकाङ्क्षादिमत्पदसङ्घातरूपं वाक्यं तथा प्रकरणमपि, नाकाङ्क्षामात्रम् । तथा च प्रकरणाधिकरणव्युत्पादिते वाक्यार्थयोः प्रकरणतदुपकारकयोः अन्योन्यान्वयेऽकाङ्क्षादिमद्वाक्य-सङ्घातरूपमस्मदुक्तं प्रकरणमेव प्रमाणम् । नत्वाकाङ्क्षामात्रम् । तस्य योग्यतादिवदन्वयबोधक-शब्दविशेषणमात्रत्वेन स्वयमन्वयाबोधकत्वात् ।

Mīmāmāsā explanation of स्थान is also not proper. There is no अनुगतधर्म for two types of स्थान and its sub-divisions.

स्थानम्– समानदेशत्वादिकमपि शेषशेषित्वे स्थानतया न प्रमाणम् । स्थानत्वेन त्वदभिप्रेते द्विविधपाठसादेश्येऽनुष्ठानसादेश्ये चानुगतस्य एकस्य स्थानत्वस्याभावात् ।

The definition समाख्या given by Dvaita is also followed by Mīmāmsa, for instance, they have stated that a तैत्तिरीय statement is confirmed by a मैत्रायणीशाखा statement.

समाख्या– अस्मदुक्ता समाख्याऽपि परेषामपि तावत्प्रमाणमेव । अन्यथा मैत्रायणीय शाखास्थ-निर्णीत वाक्यान्तरेण सन्दिग्धतैत्तिरीयशाखास्थाश्वप्रतिग्रहेष्ट्यादिवाक्यार्थनिर्णयोक्त्ययोगात् ।

## ८१. भट्टोक्तश्रुत्यादिबलाबलबीजभङ्गः

Tarkatāṇḍava quotes the Jaimini sūtra and Kumārila's Vārtika that state that among the śruti, liṅga etc the eạrlier is Superior to later, and particularly mentions that लिङ्ग is inferior to श्रुति as it is श्रुति सापेक्ष while श्रुति is लिङ्गादिनिरपेक्ष.

i) यच्चोक्तं वार्तिके– श्रुत्यादिषूत्तरोत्तरस्य पूर्वपूर्वानुमापकत्वेनैव प्रामाण्यम् । न स्वतः ।

एवं च श्रुतेर्निरपेक्षत्वात्साक्षादेव प्रमाण्यम् । लिङ्गस्यतु श्रुतिमात्रकल्पनापेक्षत्वात् एकान्तरितम् । एवं वाक्यादीनां विप्रकर्षात् परदौर्बल्यम् ।

ii) तथाहि जैमिनिसूत्रम्– ''श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यम्, अर्थविप्रकर्षात्'' इति ।

Tarkatāṇḍava points out that लिङ्ग does not require envisaging of श्रुति to play its role. It can directly convey the relation between the main and particular subsidiary on the ground of अनुपपद्यमानत्व i.e. the very statement unworkable.

It does not require the basis of श्रुति as in the case of स्मृति as it is वैदिकलिङ्ग and has sanctify on its own.

Śrī Jayatīrtha has made the position of लिङ्ग very clear in the Tīkā.

i) न तावल्लिङ्गस्याशब्दत्वेनाज्ञापकत्वाज्ज्ञापकतया श्रुतिकल्पनम् । लिङ्गस्य स्वरूपेणाज्ञापकत्वेऽप्य-न्यथानुपपद्यमानतया प्रमाणभूतां श्रुतिं प्रतीव प्रमेयभूतं विनियोगं प्रत्यपि ज्ञापकत्वसम्भवात् ।

ii) नापि स्मृतेरिव लिङ्गस्य प्रमाण्याय मूलत्वेन श्रुतिकल्पनम् । स्मरणपौरुषेयवाक्ययोर्गृहणमूलप्रमाण सापेक्षत्वेऽपि वैदिकस्य लिङ्गस्य विनियोजकश्रुताविव विनियोगेऽनन्यापेक्षमेव प्रमापकत्वात् ।

iii) नापि– धर्मस्य शब्दमूलत्वादेव बोधककल्पनेति वार्तिकोक्तं युक्तम् । शाब्दलिङ्गगम्यत्वेऽपि शब्दमूलत्वाहानेः । अन्यथा लिङ्गान्तरेणेव वैदिकलिङ्गेनापि गम्ये धर्मे शब्दः कल्प्येत ।

iv) अत एव टीकायां लिङ्गस्यानुमापकतयार्थबोधकत्वादित्यर्थ कल्पकत्वमेवोक्तम् ।

The contention that the सामर्थ्य of लवन प्रकाशन has to be first envisaged by वाक्य and then śruti has to be envisaged to utilise लिङ्ग is an unnecessary exercise. The लिङ्ग can be utilised directly to convey विनियोग.

यच्चोक्तं– बर्हिर्देवसदनं दामीत्यादौ समभिव्याहाररूपाद्वाक्यात् लवनप्रकाशनसामर्थ्यं कल्पयित्वा श्रुतिः कल्पनीयेति ।

तन्न । यथाहि लवनप्रकाशकपदसमभिव्याहारात् सामर्थ्यं कल्प्यते । तथा लाघवाय लवने विनियुक्त पदसमभिव्याहारात् लवने विनियोग एव किं न कल्प्यते ।

The claim that the प्रकरण has to envisage the वाक्य and then it has to envisage लिङ्ग is also not correct. Just as अर्थ भावना gets connected with the injunction and प्राशस्त्य conveyed by अर्थवाद gets connected with the injunction, प्रकरण also can play its role without envisaging वाक्य.

यच्चोक्तं स्वार्थे परिपूर्णानामङ्गाङ्गिवाक्यानामुपकार्योपकारकाकाङ्क्षयैकवाक्यत्वं कल्प्यमिति प्रकरणं वाक्यं कल्पयित्वा लिङ्गकल्पकमिति ।

तन्न । अर्थभावनाया एकप्रत्ययोपात्तविध्यन्विताया अपि प्रकृत्यर्थेन करणेनान्वयवत्, शब्दभावनायाः समानप्रत्ययोपात्तार्थभावनारूपभाव्यान्विताया अपि परस्परान्वितानेकपदात्मकार्थवादोपस्थापितप्राशस्त्यन्वयवच्च विनैव वाक्यकल्पनं आकाङ्क्षादिवशादन्वयोपपत्तेः ।

स्थान is of the nature of the presence in a particular place. Therefore there is no need to envisage प्रकरण for its role.

समाख्या is of the nature of श्रुति by itself, hence, it need not envisage स्थान etc.

सन्निधानलक्षणस्थानस्य आकाङ्क्षारूपप्रकरणादिकल्पकत्वमप्ययुक्तम् । समाख्यायास्तु श्रुतिरूपत्वात् स्थानकल्पकत्वमत्यन्तमयुक्तम् ।

## ८२. श्रुत्यादेः लिङ्गादिबाधे भाट्टोक्तोदाहरणदूषणम्

In this section Tarkatāṇḍava rejects the claim of Mīmāmsā that श्रुति sets aside the लिङ्ग. In the instance 'ऐन्द्रया गार्हपत्यमुपतिष्ठति' लिङ्ग conveys that ऐन्द्री hymn is an auxiliary of इन्द्र. द्वितीयाश्रुति of गार्हपत्यम् conveys that this hymn is an auxilary of गार्हपत्य. Here, श्रुति alone cannot set aside लिङ्ग. Mīmāmsaka, say वाक्य alone cannot set aside लिङ्ग. It is वाक्य सहितश्रुति that can set aside लिङ्ग. This means that श्रुति alone is not able to set aside लिङ्ग.

यच्च श्रुत्यादेर्लिङ्गादिबाधे उदाहरणमुक्तम् । तन्न । लिङ्गं हि ऐन्द्रया इन्द्रशेषत्वं बोधयति । यच्च तस्य गार्हपत्यं प्रतिशेषत्वं बोधयता बाधनीयम् ।

तन्न । मदुक्तरीत्या श्रुतिमात्रस्य त्वदुक्तरीत्या वाक्यमात्रस्य च लिङ्गाबाधकत्वेन सहितयोस्तद्बाधकत्वेऽपि वाक्यनिरपेक्षायाः श्रुतेः क्वापि लिङ्गाबाधकत्वेन तस्य लिङ्गात् प्राबल्यासिद्धेः ।

Tarkatāṇḍava also states that लिङ्ग cannot set aside वाक्य. If लिङ्ग i.e. सामर्थ्य, sets aside वाक्य, then by असन्निकृष्टफलसामर्थ्य of याग the वाक्य स्वर्गकामो यजेत should be set aside.

लिङ्गेन वाक्यबाधोदाहरणमप्यसत् । सामर्थ्येन वाक्यबाधे इन्द्रप्रकाशनसामर्थ्येन 'ऐन्द्रया गार्हपत्यमिति' वाक्यस्य, क्षणिकस्य यागस्यासन्निकृष्टफलजननसामर्थ्येन स्वर्गकामो यजेतेति वाक्यस्य च बाधापातात् ।

## ८३. प्राभाकरोक्तश्रुत्यादिबलाबलबीजभङ्गः

Prābhākaras agree with the definitions and the examples given by Bhāttas. However, in respect of the grounds of बलाबल they have their own procedure. They state as follows.

In the instance, व्रीहीन् अवहन्ति, the द्वितीयाश्रुति in order to convey the शेषित्व of व्रीहि needs the connection of व्रीहि with ग्राहक i.e. फलापूर्व.

अवधात is शेष of ग्राहक through व्रीहि. This is termed as द्वारैदमर्थ्य. In this way śruti convey द्वारैदमर्थ्य through ग्राहकान्वय only. However in the case of लिङ्ग it does not convey शेषत्व on its own. For this purpose करणैदमर्थ्य has to be envisaged. Through this द्वारैदमर्थ्य has to be managed. Hence its role is slow compared with श्रुति.

i) प्राभाकरास्तु– श्रुत्यादीनां भाट्टोक्तान्येव लक्षणान्युदाहरणानि च वदन्तो बलाबलबीजमेवाहुः– व्रीहीनित्यादौ द्वितीयाश्रुतिः शब्दरूपतया अन्यानपेक्षैव व्रीहीणां शेषित्वं बोधयितुं प्रवृत्ता शेषिणः

कार्यतालक्षणां विना बोधयितुमशक्ता सति लक्षणार्थं ग्राहकान्वयमपेक्षत इति ग्राहकान्वयमात्रपूर्विका द्वारैदमर्थ्ये प्रमाणम् ।

ii) लिङ्गं तु अशब्दात्मकत्वान्न स्वयमेव शेषत्वमाह । किन्तु करणैदमर्थ्ये कल्पिते करणं प्रति मन्त्रस्य द्वारशेषता । तस्माद् द्वारैदमर्थ्ये श्रुतितो विलंबितत्वात् दुर्बलम् ।

This explanation of Prābhākaras is not satisfactory.

Just as ग्राहकैदमर्थ्य which is comprehended earlier is managed by द्वारैदमर्थ्य comprehended later, just as साधनत्व of आरुण्य comprehended earlier is managed by द्रव्यान्वय later the विनियोग as करण comprehended earlier could be managed by लिङ्ग. Hence, लिङ्ग is not slow.

उच्यते– यथा ग्राहैकैदमर्थस्य प्रथमावगतस्य पाश्चात्येन द्वारैदमर्थ्येन निर्वाहः, यथा वा आरुण्यस्य क्रयसाधनतायाः पूर्वावगतायाः पार्ष्ठिकेन द्रव्यान्वयेन निर्वाहः, इति शब्देन मन्त्रस्य करणत्वप्रतीतिः पूर्वावगतस्य विनियोगस्य पाश्चत्येन लैङ्गिकेन निर्वाहोऽस्तु ।

The above summary of the contents of Tarkatāṇḍava is intended to help the modern scholars to get an idea of the contribution made by Tarkatāṇḍava to Indian epistemology, particularly, th epistemology of Dvaita Vedanta. Tarkatāṇḍava is a critical review of Tattvachintāmani of Gangeśa. Hence, this summary will be useful to the students of Nyāya also. It is hoped that this will enkindle the interest in young scholars to study the whole text of Tarkatāṇḍava with the help of traditional scholars and evaluate from modern point of view.

I take this opportunity to record my appreciation for the assistence given to me by two young scholars Sri Venkannachārya Katti and Nagendrachārya Deshpande. Śri Venkannachārya has studied Tarkatāṇḍava under the great scholar Śrī Keśavāchārya Katti of Bagalkot. I knew him personally and admired his scholarship and highly religious nature. Sri Nagendracharya is a good scholar both in Śāstra and Itihāsa Purāṇa. He has good knowledge of computer programme also.

I thank Śri N. Narasimha Rau, Chairman of Dvaita Vedānta Foundation for giving me the opportunity to edit this valuable work.

Mahamahopadhyaya
Rastrapati Prashasti Puraskrita
**Prof. K.T. Pandurangi**

# विषयानुक्रमणिका

## विधिवादः



## अपूर्ववादः

## आख्यातवादः



## वृत्तित्रयवादः

## समासार्थवादः



## अध्याहारवादः



## बलाबलवादः

॥ श्रीः ॥

# श्री व्यासतीर्थयतिविरचितं

# तर्कताण्डवम्

## द्वितीयपरिच्छेदः (अनुवृत्तः)

## विधिवादः

### ३२. अथ आप्ताभिप्रायस्य लिङाद्यर्थत्वे बाधकम्।

नन्विष्टसाधनत्वं न विधिः। तथात्वे करणत्वस्य विध्यर्थेन लिङाभिहितत्वेन "उद्भिदा यजेते"त्यादावनभिहिताधिकारविहिततृतीयाऽनुपपत्तेरिति चेन्न। साधनत्वे अभिहितेऽपि तद्विशेषस्य करणत्वस्यानभिधानात्। लिङाऽन्तरङ्गस्वप्रकृतियज्यर्थमात्रगतेष्टसाधनत्वेऽभिहितेऽपि यागविशेषरूपोद्भित्प्रातिपदिकार्थगतस्य तस्यानभिधानेनोद्भित्प्रातिपदिकात्परस्याः तृतीयायाः सम्भवाच्च॥

## श्रीराघवेन्द्रयतिविरचितः

## न्यायदीपः

प्रागुक्तमाक्षिपति॥ नन्विति॥ विधिनिमन्त्रणेत्यादिपाणिनिसूत्रे लिङ्गाद्यर्थत्वेनोक्तो विधिरिष्टसाधनत्वं न भवतीत्यर्थः। येन तज्ज्ञानं प्रवर्तकमिति भावः। विध्यर्थेनेति बहुव्रीहिः। अभिहितत्वेन

कथितत्वेनेत्यर्थः ॥ **अनभिहिताधिकारेति** ॥ द्वितीयस्य तृतीयपादे ''अनभिहिते'' इत्यधिकारसूत्रम्। तिङ्कृत्तद्धितसमासैरकथित इत्यर्थकानभिहिताधिकारेऽनभिहित इत्यनुवृत्तिप्रकरणे ''कर्तृकरणयोस्तृतीयेति'' सूत्रेण तिङाद्यनभिहितकर्तरि करणे च तृतीया भवतीति विहित तृतीया न स्यात्। उद्भिदा यजेत पशुकाम इति पशुरूपेष्टसाधनत्वस्य यागनिष्ठत्वेन तस्य यागान्वितस्य यजेतेति तिङाऽभिहितत्वात्। उद्भिदेत्युपपदस्य चाद्याध्यायचतुर्थपादीयोद्भिदधिकरणन्यायेन यागनामत्वेन यागनिष्ठकरणत्वस्यैवोद्भित्पदगततृतीयाऽर्थत्वादिति भावः।

॥ **तद्विशेषस्येति** ॥ ''साधकतमं करण''मिति पाणिनिस्मृत्याऽतिशयितसाधनत्व-रूपसाधनत्वविशेषस्य करणत्वात्तस्यैव च तृतीयार्थत्वादस्माभिश्चेष्टसाधनत्वस्यैव विधित्वाङ्गीकारेण इष्टकरणत्वस्य विधित्वानङ्गीकारात्। तथा चोद्भिद्यागः इष्टसाधनं करणकारकं चेति लिङ्तृतीया-विभक्तिभ्यामर्थो लभ्यत इति भावः।

ननु – कारणत्वेनोद्भिदादियागस्य लिङाऽनिभिधानेऽपि सादनत्वेनाप्यभिहितत्वात्कथं तृतीयेत्यतः साधनत्वेनाप्यभिधानमुद्भिदादेर्विशेषस्य नेत्याह ॥ **लिङेति** ॥

यद्वा लिङा करणत्वाभिधानेपि तृतीयालभ्यकरणत्वस्याभिधानं नास्त्येवेत्याह ॥ **लिङेति** ॥ उपपदान्वयात्पूर्वमेव लिङर्थान्वये हेतुरन्तरङ्गेति। तत्र हेतुः स्वप्रकृतीति। अन्विताभिधानवादेपि सामान्यत एवेतरान्वितस्वार्थबोधकत्वेन विशेष्येतरान्वितस्वार्थाभिधानस्य पदान्तरसमभिव्याहार-कृतत्वादिति भावः।

एतेन लिङैव साधनबोधना उद्भिदेति तृतीया व्यर्था शब्दसाधुत्वमात्रार्था वेति निरस्तम्। लिङनुक्तकरणत्वार्थकत्वेन वोद्भित्प्रातिपदिकार्थगतकरणत्वार्थकत्वेन वा तृतीयायाः सार्थक्य-सम्भवात्॥

यत्तु साधनत्वसामान्यमुखेन यागसाधनत्वसामान्यमुखेन वोद्भिद्रूपयागविशेषस्य करणकारकस्य अभिधानात् अनभिहिताधिकारोक्ततृतीया न युक्तेति रुचिदत्ताद्युक्तम्। तन्न। यथाकथञ्चिदभिहितत्वेन तृतीयाया अयोगे कटं कुर्यादित्यादाविष्टसाधनत्वस्य लिङर्थत्वे इष्टत्वेन कटस्याप्यभिहितत्वेन द्वितीयाऽनुपपत्त्यापत्तेः। तेन रूपेणाभिहितत्वस्यैव द्वितीयादिभञ्जकत्वे प्रकृतेऽपि साम्यात्॥

यत्तु—कर्तृकरणगतसङ्ख्यायाः तिङादिनाऽनभिधाने तृतीया भवति। अभिधाने तु न भवतीति पाणिनीयसूत्रार्थः। इह च करणगतसङ्ख्याया अभिधानाद्भवति तृतीयेति पक्षधरादिमतम्। तन्न। कर्तृकर्मणोराख्यातार्थत्वसमर्थनवादे कर्त्रादिगतसङ्ख्यामात्राभिधायित्वस्य निरसिष्यमाणत्वादिति॥

## तर्कताण्डवम्

**केचित्तु – यागगतेष्टसाधनत्वमपि संसर्गमर्यादयैव लभ्यते। न त्वभिधीयत इत्याहुः॥**

**ननु तथाऽपि -**

**नेष्टसाधनत्वं विधिः। कुत इदं कर्तव्यमिति प्रश्ने इष्टसाधनत्वादितीष्टसाधनत्वस्य कर्तव्यत्वे हेतूकरणात्।**

**"तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत"**

**इत्यर्थवादेनेष्टसाधनत्वे बुद्धेऽपि विधिप्रत्ययानुमानाच्च। इष्टसाधनत्वबोधानन्तरं कर्मकाले प्रयुक्ताभ्यां कुर्याः कुर्यामिति मध्यमोत्तमपुरुषाभ्यां सम्बोध्यकर्तृक स्वात्मकर्तृक क्रियाविषययोरभिप्राययोरेव प्रतीतेश्च।**

**इच्छाविशेषरूपामन्त्रणाद्यर्थके लिङादाविच्छावाचित्वस्य क्लृप्तत्वाच्च। इष्टसाधनत्वार्थकत्वे मानान्तरविरोधेन "न कलञ्जं भक्षयेत्" इत्यादौ तन्निषेधानुपपत्तेश्च।**

**तदुक्तं कुसुमाञ्जलौ–**

**"हेतुत्वादनुमानाच्च मध्यमादौ प्रयोगतः।**
**अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः"**

**इति। तस्मादुक्तबाधकपञ्चकेनेष्टसाधनत्वार्थकत्वस्यायोगाद् वक्त्रभिप्रायरूपविध्यर्थक एव लिङादिरिति॥**

## न्यायदीपः

यत्तु मणौ विधिवादान्त्यभागे नव्यास्त्वित्यतः पूर्वं वस्तुतस्त्वभिहितान्वयलभ्यं यागेष्ट-साधनत्वं इष्टसाधनत्वमात्रस्य लिङर्थत्वादिति समाधानमुक्तं तदाह ॥ **केचित्त्विति** ॥ इह च यागस्य धातुलभ्यत्वाद्यागेष्टसाधनत्वयोराधाराधेयभावस्य च प्रकृतिप्रत्ययस्य समभिव्याहारबलेन संसर्गमर्यादया भानोपपत्त्या तत्राभिधानवृत्तेर्गौरवेण केवलेष्टसाधनत्वस्यैव लिङाभिधानामिति भावः॥

अत्रारुचिबीजं तु प्रागेवान्विताभिधानस्यान्वयशक्यत्वेऽशाब्दत्वाद्यपत्तेरुपपादितत्वेन तत्रा-भिधावृत्तेरेव वाच्यत्वात्त्वन्मतेऽपि वाक्यार्थरूपसंसर्गस्याशक्यत्वेऽपि तत्प्रतिपादनं लिङादेरस्त्येवेति ध्येयम्। वक्त्रभिप्राय एव लिङाद्यर्थ इत्युदयनमतमाचार्यास्त्वित्यादिना विधिवादान्ते मणिकृद-नूदितमाशङ्कते॥ **नन्विति**॥

हेतुत्वादित्यादिवक्ष्यमाणश्लोकस्थपञ्चहेतून् कुसुमाञ्जलिवर्धमानाभ्यामुक्तरीत्या निष्कृष्टा-र्थोक्त्या विवृणोति॥ **कुत इदमित्यादिना**॥ लिङ्लोट्तव्यादिनैवेष्टोपायत्वावगतौ हैतूक्तिर्व्यर्थेति। आप्ताभिप्रायस्य लिङाद्यर्थत्वेनेदं कर्तव्यमित्यस्य ममैतत्करणानुकूलेच्छा वक्तुरस्तीत्यर्थः स्यात्। तत्र च कुत इत्याकाङ्क्षायां मदिष्टसाधनत्वादिति हेतुरर्थवानिति भावः।

॥ **इष्टसाधनत्व इति** ॥ अश्वमेधयागस्य ब्रह्महत्यातरणेष्टसाधनत्वेऽवगतेप्यर्थवादाधिकरणे विध्यर्थवादयोरविनाभावस्य सिद्धतयाऽत्रार्थवादेन लिङादिविधिप्रत्ययानुमानादिति वा इष्टोपायत्वस्य विधिव्याप्यत्वात्तेन तदनुमानादिति वाऽर्थः। लिङादिनेष्टसाधनत्वबोधने ब्रह्महत्यातरणकामाऽश्वमेधेन यजेतेति विध्यनुमानं व्यर्थं स्यात्। आप्ताभिप्रायत्वे त्वश्वमेधादेर्मदिष्टसाधनत्वान्मत्प्रवृत्त्यनुकूलेच्छा आप्तस्यास्तीत्यनुमानभेदाददोष इति भावः।

मध्यमेत्यादितृतीयहेतुं व्यनक्ति॥ **इष्टेति**॥ तवेदमिष्टसाधनमतः कुर्याः ममेदमिष्टसाधनमतः कुर्यामिति मध्यमोत्तमपुरुषसञ्ज्ञिकाभ्यां लिङादेशप्रत्ययाभ्यां कर्तृद्वयनिष्ठक्रियाविषययोः सङ्कल्पापरपर्यायाभिप्राययोरवगमे तत्रेष्टसाधनत्वार्थकत्वविरहादन्यत्रापि लिङ्लोडादेराप्ताभिप्राय

एवार्थो वाच्य इति भावः ॥

अन्यत्र क्लृप्तसामर्थ्यादिति हेतुं व्यनक्ति ॥ **इच्छेति** ॥ ''विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्, लोट्च, आशिषि लिङ्गलोटाविति'' पाणिनिसूत्रोक्तदिशा इच्छाविशेषरूपो य आमन्त्रणाध्येषणादिस्तदर्थवाचित्वस्य क्लृप्तत्वात्। तदन्यत्रापि वक्त्रभिप्राय एव लिङाद्यर्थो नेष्टसाधनत्वमिति भावः। अपौनरुक्त्यायेच्छाविशेषेत्युक्तम्। विध्यादेः सर्वत्रेच्छारूपत्वेऽपि अवान्तरभेदः कुसुमाञ्जलावेव व्यक्तः।

अन्तिमहेतुं व्यनक्ति ॥ **इष्टेति** ॥ लिङादेरिति योज्यम् ॥ **मानान्तरेति** ॥ कलञ्जनामकमूलविशेषभक्षणमिष्टसाधनं नेत्यर्थः। आप्ताभिप्रायार्थत्वे तु मम कलञ्जभक्षणकरणेच्छाप्तस्य नास्तीत्यर्थकत्वाददोषः। स चाप्तो वेदे भगवानीश्वर एवेति भावः।

॥ **तदुक्तमिति** ॥ पञ्चमस्तबकान्त्य-भागे हेतुत्वात् कर्तव्यत्वेऽनुमानाच्चेति। विधेरिति शेषः ॥ **मध्यमेति** ॥ मध्यमोत्तमपुरुषलिङः इष्टसाधनतावियोगादित्यर्थः ॥ **अन्यत्रेति** ॥ इच्छाविशेषरूपे आमन्त्रणाध्येषणादौ लिङः क्लृप्तशक्तित्वादित्यर्थः। ''न कलञ्जं भक्षये''दित्यादौ निषेधानुपपत्तित इत्यर्थः।

## तर्कताण्डवम्

**उच्यते– अभिप्रायो हीच्छा। एवं च तस्या विधित्वे सविषमन्नं कलञ्जं वा भक्षयत्वितीश्वरेच्छाया अभावे तद् भक्षणे प्रवृत्त्ययोगेन तस्यास्तत्रापि सत्त्वेन विषभक्षणादिकमपि विधेयं स्यात् ॥**

**किं च बालस्याद्यस्तन्यपानादिस्वप्रवृत्तौ हेतुत्वेनेष्टसाधनत्वज्ञानमेव क्लृप्तम्। न हि बालस्याद्यप्रवृत्तौ जातिबधिरप्रवृत्तौ वा वक्ताऽस्ति। येन तत्रापि वक्त्रभिप्रायज्ञानमेव हेतुः स्यात्। एवं च मध्यमवृद्धप्रवृत्तिदर्शनेन बालेन कल्प्य-**

**माना लिङादेः शक्तिः तत्प्रवृत्तौ क्लृप्तेष्टसाधनत्वविषयैव कल्प्या। तस्याक्लृप्तत्वात्॥**

## न्यायदीपः

परोक्तबाधकपञ्चकं पश्चादुद्धरिष्यन् आदौ तावदिष्टसाधनत्वस्य लिङर्थत्वे साधकत्रयमभिप्रायस्य लिङर्थत्वे बाधकरूपं क्रमेणाह॥ **अभिप्रायो हीत्यादिना**॥ वक्तुरेवेच्छा अभिधीयत इत्यादितदुक्तप्रसिद्धिद्योतको हि शब्दः। इच्छाविषयसाधनत्वापेक्षया इच्छामात्रस्य लिङर्थत्वे लाघवयुक्तिसूचको वा॥ **प्रवृत्त्ययोगेनेति**॥ इश्वरेच्छायाः कार्यमात्रहेतुत्वादिति भावः।

किं वक्त्रभिप्राये ज्ञानं प्रवर्तकमित्युपेत्य तस्य लिङाद्यर्थत्वमुच्यते, अथ तदभावेऽपि। आद्ये दोषमाह॥ **किं चेति**॥ यद्वा परपक्षे बाधकं सिद्धान्तसाधकान्तरमाह॥ **किं चेति**॥ **आद्यस्तन्यपानेति**॥ प्राथमिकस्तन्यपानेत्यर्थः। तत्रापि सन्दिहानं प्रत्याह॥ **न हीति**॥ **हेतुरिति**॥ प्रवृत्तावित्यनुषङ्गः॥

नन्वस्तु बालबधिरयोः शब्दज्ञानशून्ययोरेवम्। तदन्यप्रवृत्तिरभिप्रायज्ञानपूर्विकाऽस्तु। तत्राभिप्रायज्ञानसम्भवादित्यत आह॥ **एवं चेति**॥ चैत्र जलमाहरस्त्वेत्युत्तमवृद्धवाक्याज्जायमाना प्रयोज्यभूतमध्यमवृद्धप्रवृत्तिर्या तद्दर्शनेनैतत्प्रवृत्तिः ज्ञानपूर्विका स्वतन्त्रप्रवृत्तित्वात् मदीयस्तन्यपानादिप्रवृत्तिवदिति ज्ञानपूर्वकत्वानुमानान्तरं मत्प्रवृत्तिहेतुज्ञानं यथेष्टोपायत्वविषयमेवमस्यापि प्रवृत्तिहेतुज्ञानं तद्विषयमेवेति निश्चित्य तज्ज्ञानं च लिङादियुक्तोत्तमवृद्धवाक्येनास्योत्पन्नं तदनुविधानादिति निर्णीयावापोद्वापाभ्यां लिङादेरिष्टसाधनत्वविषयामेव शक्तिं मन्यते बाल इत्येव युक्तमित्यर्थः।

॥ **तस्या इति**॥ इष्टसाधनत्वविषयायाः शक्तेः क्लृप्तत्वात् लिङाद्यर्थज्ञानस्य प्रवर्तकत्वात्तस्य चेष्टोपायविषयकत्वस्य स्वस्मिन्नवधृतत्वादिति भावः। तस्य अक्लृप्तत्वादिति पाठे तु वक्त्रभिप्रायज्ञानस्य प्रवर्तकत्वेन स्वस्मिन्ननिर्णीतत्वादित्यर्थः॥

## तर्कताण्डवम्

किं च वक्त्रभिप्राये ज्ञातेऽपि चेतनस्येच्छां विना कथं प्रवृत्तिः। कथं चेष्टसाधनत्वज्ञानं विनेच्छा।

न चेदमिष्टसाधनं मत्कृतिसाध्यत्वेनाप्ताभिप्रेतत्वात् मद्भोजनवदित्याप्ताभिप्रायेणेष्टसाधनत्वानुमानात्प्रवृत्तिरिति वाच्यम्। तथात्वे लिङादिशक्तेरावश्यकेष्टसाधनत्वविषय-त्वेनैव कल्प्यत्वात्। अर्थापत्तिर्हि साक्षादुपपादकविषया। न तूपपादकव्याप्यविषया।

अनुमानं चायुक्तम्। उक्तरीत्या विषभक्षणादौ व्यभि-चारात्। कळञ्जभक्षण ममानिष्टं मत्कृतिसाध्यत्वेनाप्तेन आनिष्यमाणत्वादित्यस्यासिद्धेश्च।

तस्मान्निषिद्धेऽपि सत्त्वाद् बालबधिरादिप्रवृत्तावस-त्त्वात् पराभिप्राये ज्ञातेऽपि चेतनस्येष्टसाधनत्वाज्ञाने प्रवृत्त्ययोगाच्च। नाभिप्रायो विधिः। किन्त्विष्टसाधनत्वमेव।

आप्ताभिप्रायस्य लिङाद्यर्थत्वे बाधकम् ॥ ३२॥

## न्यायदीपः

आप्ताभिप्रायज्ञानमपि वायुस्तृणमिव बलात्प्रवर्तयति उत पितापुत्रादिकमिवेच्छामुत्पाद्य। नाद्यः अनुभवविरोधात्। चेतनप्रवृत्तेरिच्छापूर्वकत्वानुभवात्। द्वितीये त्विष्टोपायत्वज्ञानमावश्यकमित्याह ॥ **किञ्चेति कथं प्रवृत्तिरिति** ॥ वक्त्रभिप्रायं जानतोऽप्यनिच्छतः प्रवृत्त्यभावस्यैव लोके दर्शनादिति भावः ॥ **कथं चेति** ॥ प्रवृत्तिहेत्विच्छाजनकेष्टोपायत्वज्ञानार्थं लिङादेरिष्टोपायत्वा-र्थकत्वमेव वाच्यमिति भावः ॥

आप्ताभिप्रायस्योक्तविधया स्वयं साक्षादप्रवर्तकत्वेनेष्टोपायत्वज्ञानस्यैवेच्छाद्वारा प्रवर्तकत्वेऽपि तज्ज्ञानार्थं न तस्य लिङाद्यर्थत्वं कल्प्यम्। इष्टोपायत्वज्ञानस्यान्यथाऽपि सम्भवादिति भावेनाचार्यास्त्वित्यादिग्रन्थे मण्युक्तानुमानानुवादपूर्वं प्रागुक्तद्वितीयपक्षमाशङ्क्य निराह **।। न चेदमिति ।।** तृप्तिकामेनान्येन क्रियमाणविषभक्षणादावव्यभिचाराय मत्कृतिसाध्यत्वेनेति हेतुविशेषणम्।

इष्टसाधनत्वविषयकत्वेनैवाप्ताभिप्रायविषयत्वेनेत्यत्रावश्यकत्वहेतुरेक उक्तः। कल्पकाभावं चाह **।। अर्थापत्तिर्हीति ।।** इच्छापूर्वकप्रवृत्तेरनुपपद्यमानार्थस्य दर्शनरूपार्थापत्तिः स्वोपपादकमिष्टोपायत्वज्ञानमेव स्वीकरोति। न तु इष्टोपायत्वव्याप्यं पुरुषाभिप्रायमपीत्यर्थः **।। अनुमानं चेति ।।** इदं मदिष्टसाधनमित्युक्तानुमानं चेत्यर्थः **।। उक्तेति ।।** अयं सविषयमन्नमित्यादिनोक्तरीत्येत्यर्थः।

ननु तत्रापि तात्कालिकेष्टसाधनत्वमस्त्येव तृप्तिजनकत्वादतो न व्यभिचार इति चेन्न। त्वन्मते बलवदनिष्टाननुबन्धीष्टोपायत्वज्ञानस्यैव तत्र साध्यार्थत्वादन्यथा निवृत्तिस्थळे कलञ्जभक्षणादावनिष्टसाधनताज्ञानं न स्यात्। न च तत्राव्यभिचाराय बलवदनिष्टजनकत्वे सतीति हेतुर्विशेष्यत इति वाच्यम्। तस्याऽनुमानिकत्वोपगमेन विधिवाक्यादनुपस्थितेः। उपस्थितस्यैव विशेषणत्वात्।

न च मानान्तरेणेपस्थितस्य लिङ्गविशेषणत्वमिति शङ्क्यम्। कृतिसाध्यत्वस्याप्येवं सम्भवेन तस्यापि लिङादिशक्यत्वापत्तेः। तथाऽपि जलताडनादौ व्यभिचारापरिहाराच्च। तत्राप्युक्तविशिष्टहेतोराकरोक्तदिशा सूपपादितत्वात्। अत एव विषभक्षणादावित्यादिपदोक्तिरिति भावः।।

उदयनमतानुवादप्रस्तावे मण्युक्तं निवृत्तिस्थळीयमनिष्टोपायतानुमानमप्ययुक्तमित्याह **।। कळञ्जेति ।।** अनिष्टं अनिष्टसाधनमित्यर्थः। यद्वा तत्रेष्टसाधनत्वे सत्यपि बलवदनिष्टाननुबन्धित्वं नेति भावेनानिष्टमित्येव साध्यनिर्देशः कृतः। विषसम्पृक्तान्नभोजनवदिति दृष्टान्तो ध्येयः।

**।। असिद्धेश्चेति ।।** उक्तरीत्येत्यनुषङ्गः। उक्तसाधकानि त्रीण्यप्यनुवदन्नुपसंहरति **।। तस्मादिति ।। सत्त्वादिति ।।** आप्ताभिप्रायस्येति योज्यम्।।

आप्ताभिप्रायस्य लिङाद्यर्थत्वे बाधकम्।। ३२।।

***

## ३३. अथ उदयनोक्तवक्त्रभिप्रायविधित्वभङ्गः ।

### तर्कताण्डवम्

**बाधकपञ्चकेऽप्याद्यं तावन्न युक्तम्। त्वन्मते इदं कर्तव्य-माप्ताभिप्रेतत्वादिति हेतूकरणवदुपपत्तेः।**

**नापि द्वितीयम्। अर्थवादादेवेष्टसाधनत्वे बुद्धे विधि-प्रत्ययस्य वा तदर्थस्य वाऽनुमित्यनभ्युपगमात्। त्वत्पक्षेऽपि तत्र विधिप्रत्ययाद्यनुमानं व्यर्थमेव। तद्बोध्यस्य प्रवर्तकस्य इष्टसाधनत्वस्यार्थवादादेव सिद्धेः। असिद्धौ च कल्पका-भावात्। व्यापकानुपलब्धिरूपबाधकनिरासेन सार्थक्यं तु मन्मतेऽपि समम्॥**

### न्यायदीपः

इष्टोपायस्य लिङाद्यर्थत्वे प्रागुक्तपञ्चबाधकानि क्रमेण निराह ॥ **बाधकेत्यादिना** ॥ **इति हेतूकरणवदिति** ॥ इदं त्वया कर्तव्यमित्युक्तेन कुत इति प्रत्युक्तो ब्रूते आप्ताभिप्रेतत्वादिति। तत्र त्वन्मते इदं त्वया कर्तव्यमित्यस्य त्वत्कृतिविषयत्वेनाप्ताभिप्रेतमित्यर्थः। तत्र कुत इत्याकाङ्क्षाया-माप्ताभिप्रेतत्वादिति हेतुरयुक्तः स्यात्। तत्र यदि कर्तव्यमित्यस्य कृतिविषय इत्येतावन्मात्रं विवक्षित्वा हेतोरुपपत्तिं मन्यसे तर्हि ममापि तथैवास्त्विति भावः॥

विध्यनुमानाच्चेति बाधकं निराह ॥ **नापि द्वितीयमिति** ॥ **इष्टसाधनत्वे इति** ॥ तथाचानु-मानाच्चेति हेतोरसिद्धिरिति भावः।

अस्तूदयनमतेऽयं दोष इत्यत आह ॥ **त्वत्पक्षेऽपीति** ॥ **असिद्धौ चेति** ॥ इष्टसाधनत्वस्यार्थ-वादादसिद्धौ विध्यनुमापकाभावादित्यर्थः। अश्वमेधादेरिष्टसाधनत्वादिति हेतुना ह्यश्वमेधादिकं कृतिविषयतयाऽप्ताभिप्रेतमित्यर्थको "श्वमेधेन यजेत ब्रह्महत्यातरणकाम" इति विधिरनुमातव्यः। इष्टसाधनत्वस्यैवाज्ञाने विध्यनुमितिरेव नोदीयादिति भावः।

नन्वर्थवादान्निश्चितमपष्टिसाधनत्वं कर्तव्यत्वरूपविधिव्याप्तत्वादिह च तस्यानुपलम्भेन कुण्ठितशक्तिकं न प्रवर्तयितुमीष्टे इति विधिकल्पनमित्य आह ।। **व्यापकेति** ।।

## तर्कताण्डवम्

**नापि तृतीयम्। उक्तरीत्येष्टसाधनत्ववाचिनो लिङ एकदेशभूतायामिच्छायां लक्षणासम्भवात्। कुर्याः कुर्यामित्यत्रापि सम्बोध्यं स्वात्मानं च प्रतीष्टसाधनत्वस्यैव लिङर्थत्वे बाधकाभावाच्च ।।**

**नापि चतुर्थम्। त्वन्मते क्लृप्तेच्छांशात्यागे नाप्तत्वांश इव मन्मतेऽपि तदत्यागेन साधनत्वांशे शक्तिकल्पनात्। कथं च लिङन्तरेऽन्योर्थ इति विध्यर्थ लिङोपि स एवार्थः ।।**

## न्यायदीपः

मध्यमपुरुषादिप्रयोगे इष्टसाधनतारूपार्थवियोगादिति बाधकं निराह ।। **नापि तृतीयमिति** ।। **उक्तेति** ।। अभिप्रायो हीच्छेत्यादिनोक्तरीत्येत्यर्थः ।। **एकदेशेति** ।। इष्टसाधनेत्यत्र साध्यविषयकत्वेनानुप्रविष्टेच्छाया एकदेशत्वात्। तद्विशिष्टार्थानुपपत्तावेकदेशस्य लक्षणया ग्रहणसम्भवादित्यर्थः। लक्षणैव दोष इत्यनुशयादाह ।। **कुर्या इति** ।। तवेष्टसाधनं ममेष्टसाधनमित्यर्थकत्वोपपत्तेरित्यर्थः।

अन्यत्र क्लृप्तसामर्थ्यादित्युक्तबाधकं निराह ।। **नापि चतुर्थमिति** ।। **क्लृप्तेति** ।। इच्छाविशेषरूपामन्त्रणादौ लिङ्शक्तेः क्लृप्तत्वेनामन्त्रणाद्यर्थकलिङादौ क्लृप्तेच्छार्थकत्वांशात्यागेन आप्तत्वांशमधिकमपि निवेश्याप्तेष्टत्वं विधिलिङोर्थ इति कल्प्यते। तथा मन्मतेपि क्लृप्तेच्छार्थकत्वात्यागेनेच्छाविषयसाधनत्वांशेपि लिङादेः शक्तिः कल्प्यते। अतोऽधिकांशे शक्तिकल्पनस्य तुल्यत्वान्नेदं बाधकमिति भावः। आप्तत्वांश इत्युपकक्षणं। कृतिसाध्यत्वांश इत्यपि ध्येयम्। मन्मते तु न तदंशेपि लिङादेः शक्तिरित्यग्रे व्यक्तम्।

नन्वामन्त्रणादावाप्तत्वांशेऽपि शक्तिः क्लृप्तेति वादिनं प्रत्याह ।। **कथं चेति** ।। नियामका-

भावादिति भावः। एकत्र निर्णीतार्थोऽन्यत्रापीति न्यायस्त्वसति बाधके। प्रकृते चाप्तेच्छाया विध्यर्थत्वे बाधकत्रयस्य प्रागेवोक्तत्वादिति भावः।

## तर्कताण्डवम्

**नापि पञ्चमम्। नञोऽसुरा इत्यादाविव त्वद्रीत्या लक्षणया मद्रीत्याऽभिधयेष्टसाधनत्वविरुद्धानिष्टसाधनत्वार्थकत्वात्। दृष्टं च नञः क्रियायोगेऽपि नानुयाजेषु एयजामहं करोतीत्यादौ पर्युदासार्थकत्वम्॥**

## न्यायदीपः

निषेधानुपपत्तित इति बाधकं निराह ॥ **नापि पञ्चममिति** ॥ त्वद्रीत्यामद्रीत्येत्येतन्नञर्थनिर्णयवादेऽग्रे व्यक्तम्॥ **अनिष्टसाधनत्वार्थकत्वादिति** ॥ तथा च तत्र मानान्तरविरोधाभावान्निषेधानुपपत्तिर्नेष्टसाधनत्वस्य लिङाद्यर्थत्वे बाधकमिति भावः॥

नन्वसुरादिपदे पर्युदासेऽपि क्रियायोगे नञः पर्युदासार्थत्वमदृष्टचरम्। तथा च न भक्षयेदिति प्रसज्यप्रतिषेध एवेत्यत आह॥ **दृष्टं चेति** ॥ **नानु याजेष्विति** ॥ नञः क्रियान्वयो न तूत्तरपदेन समासेन निर्देशः। अनुयाजानाम त्रयोनुयाजा इत्युक्तेः त्रयो यागविशेषाः। अनूयाजनामकयागभिन्नेषु ए यजामह इति पञ्चाक्षरं मन्त्रं करोति उच्चारयतीत्यर्थः।

प्रतिषेधः प्रदेशेऽनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यादिति दशमाष्टमपादीयाद्याधिकरणे ''यजतिषु ए यजामहं करोति नानुयाजेषु ये यजामहं करोती''ति वाक्यद्वयमुदाहृत्य नञत्र प्रसज्यप्रतिषेधार्थ उत पर्युदासार्थ इति सन्दिह्य आद्ये अनारभ्याधीतेन यजतिष्विति मन्त्रेणानुयाजेष्वपि यजतित्वात्प्राप्तो ये यजामह इति मन्त्रो न करोतीति प्रतिषिध्यत इति नञोऽनुयाज इति शब्दस्य च मुख्यार्थलाभः। पर्युदासपक्षे तु नञनुयाजशब्दाभ्यां तदन्ययागान्तरग्रहणमिति पदद्वयलक्षणादोषः। नञोनुयाजपदेनान्वयेऽनश्व इत्यादाविव नित्यसमासेनाननुयाजेष्विति प्राप्त्याऽत्र प्रतीयमानक्रियान्वयायोगतोऽविहितप्रतिषिद्धत्वाद् वचनद्वयप्रामाण्यात् सामान्यविशेषभावे सत्यपि निषेधस्य स्वापेक्षित-

निषेध्यप्रापकतया सामान्यवचसोपेक्ष्यत्वेन तुल्यबलत्वाच्च विकल्प इति पूर्वपक्षयित्वा विकल्पस्याष्ट-दोषदुष्टत्वेन नित्यवच्छ्रवणविरोधेन चायुक्तत्वान्नञोनुयाजसम्बन्धे व्याकरणेऽपि द्वितीयाध्यायप्रथमपादे विभाषेति महाविभाषाधिकारेणासमासोपपत्तेः क्रियान्वितनञोऽपि पर्युदासार्थत्वमेवेति अनुयाजान्ययागेषु ये यजामहं करोतीत्येवार्थ इति सिद्धान्तित्वादिति भावः।

एतेन विरोधिपरत्वं समस्तस्यैव नञो न तु व्यस्तस्येति रुचिदत्तोक्तं निरस्तम्। पर्युदासाश्रयणे मीमांसान्यायसिद्धे सति यथायोगं विरोधित्वस्य वाऽन्यत्वस्य वार्थस्य ग्रहणे बाधकाभावात्।

मणौ तु – इष्टसाधनत्वस्य लिङर्थत्वे न कळञ्जं भक्षयेदित्यत्र विध्यर्थनिषेधानुपपत्तिः। तद्भक्षणस्य तृप्तिरूपेष्टसाधनत्वात्। नचासुराइत्यादिवत्पर्युदासलक्षणया विरोध्यनिष्टसाधनत्वबोधनं नञोसमस्तत्वात्क्रियासङ्गतत्वेन प्रतिषेधवाचकत्वव्यत्पत्तेश्चेति चेन्न। विशेष्यवति विशिष्टनिषेधस्य सविशेषणेहीति न्यायेन विशेषणनिषेधपर्यवसायितया कळञ्जभक्षणमिष्टोत्पत्तिनान्तरीयकदुःखा-धिकदुःखसाधनमिति न कळञ्जं भक्षयेदित्येव बोधितत्वादिति ग्रन्थेन नञः प्रतिषेधार्थत्वमुपेत्यैव निषेधानुपपत्तिसमाधानमुक्तम्। तदुत्तरभङ्गे निरसिष्यत इति भावः। आदिपदेन नार्षेयं वृणीते, नेक्षेतोद्यन्तमादित्यमित्यादेर्ग्रहः। नेक्षेतेत्यस्यापि तचुर्थाद्यपादे तृतीयाधिकरणे पर्युदासत्वोक्तेः।

## तर्कताण्डवम्

**यद्वा प्रथमं नञर्थधात्वर्थयोरन्वयोऽनन्तरं तदन्वितेन लिङा मानान्तराविरुद्धकळञ्जभक्षणाभावस्येष्टसाधनत्व-मेवोच्यते॥**

**न च प्रकृतिभूतधात्वर्थस्य प्रथममन्तरङ्गेण प्रत्ययार्थेनैव अन्वयो न तु नञर्थेनेति वाच्यम्। तण्डुलान् पचतीत्यत्र तण्डुलविषयकपाकानुकूलकृतिमानित्यर्थप्रतीत्या तण्डुला-न्वितपाकस्याख्यातार्थभूतया कृत्यान्वयस्य गम्भीरायां नद्यां घोष इत्यादौ गम्भीरान्वितायाः एव नद्याः सप्तम्यर्थेनाधि-करणत्वेनान्वयस्य दर्शनात्॥**

**किं च नञर्थस्य प्रतियोगिन्याकाङ्क्षोत्थितेति तस्यैव प्रथमं धात्वर्थेनान्वयः। सन्निधानादप्याकाङ्क्षाया एव बलवत्त्वात्॥**

**एतदेव परिहारद्वयमभिप्रेत्य विष्णुतत्त्वनिर्णये ''ज्ञात्वैव हीष्टसाधनतां प्रवर्तते निवर्तते च विपर्ययेण'' इति विपर्ययशब्दः प्रयुक्तः। कलञ्जभक्षणस्यानिष्टसाधनत्वं कलञ्जभक्षणाभावस्येष्टसाधनत्वं चेति द्वयमपि हि कलञ्जभक्षणेष्टसाधनत्वस्य विपर्यय एव॥**

### न्यायदीपः

अस्तु तत्र नित्यवच्छ्रवणविरोधादिबाधकेन लक्षणयाऽपि पर्युदासाश्रयणम्। प्रकृते च बाधकाभावान्मुख्यार्थ एव प्रसज्यप्रतिषेधोस्त्विवति वादिनं प्रत्याह ॥ **यद्वेति** ॥ भक्षणरूपधात्वर्थेत्यर्थः।

न च मीमांसकवन्नञर्थमादायाख्यातान्वयः, तेन कळञ्जभक्षणाभाव इष्टसाधनमित्यन्वय इति वाच्यमित्यादिना पक्षधराद्युक्तमाशङ्क्य निराह ॥ **नचेति** ॥ **न तु नञर्थेनेति** ॥ तस्य भिन्नपदोपात्तत्वेन बहिरङ्गत्वादिति भावः। सुबन्तेप्याह ॥ **गम्भीरायामिति** ॥

ननु—तत्राप्यरुणैकहायनीन्यायेन खलेकपोतन्यायेन चापपदार्थप्रकृत्यर्थयोः युगपदेव क्रियान्वये पश्चात्पार्ष्टिकान्वयबलेनैव तण्डुलविषयकपाकानुकूलकृतिमानित्यादिप्रतीतिरित्यस्तु। यद्वा सन्निर्धर्बलत्त्वात्पूर्वं प्रकृत्यर्थस्य प्रत्ययार्थेनैवान्वयो नोपपादार्थेनेति वदन्तं प्रत्याह ॥ **किं चेति** ॥

॥ **उत्थितेति** ॥ स्वरसा ॥ **धात्वर्थेनेति** ॥ तस्यैव प्रतियोगित्वादिति भावः। ॥ **सन्निधानादपीति** ॥ धात्वर्थस्यैकपदोपात्तत्वात्प्रत्ययार्थसन्निधानमस्ति। नञर्थेन त्वाकाङ्क्षाऽस्ति। तत्र तन्निधानात्पूर्वं प्रत्ययार्थेन धात्वर्थस्यान्वयो वाऽथाकाङ्क्षावशान्नञर्थेनेति सन्देहे द्वितीय एव युक्तः। सन्निधानं हि पाठसादेश्यरूपं स्थानप्रमाणम्। आकाङ्क्षा हि प्रकरणम्। तत्र

“श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादिति”

तृतीयाधिकरणोक्तदिशा प्रकरणस्य स्थानादपि बलवत्त्वात्।

अत एव तृतीयस्य तृतीयपादे दशमाधिकरणे राजसूयप्रकरणे श्रुताभिषेचनीययागसन्निधावाम्नातानामप्यक्षैर्दीव्यतीत्याद्युक्तविदेवनादीनां प्रकरणात् राजसूयाङ्गत्वमुक्तमिति भावः। एतदेव परिहारद्वयमित्येतद्व्यञ्जयन्मूलारूढतां स्पष्टयति।। **कळञ्जभक्षणस्येति ।।**

## तर्कताण्डवम्

**केचित् – यथा गतिनिवृत्त्यर्थस्यापि स्थाधातोः प्रतिष्ठत इत्यत्र प्रोपसन्दानेन गमनार्थता। तथेष्टसाधनत्वार्थस्यापि लिङो नञुपसन्दानेनानिष्टसाधनत्वार्थत्वमित्याहुः ।।**

**अन्ये तु – न भक्षयेदित्यादिनिषेधस्थळे भक्षयेदिति न लिङ्। विहितस्य प्रतिषेधायोगात्। किं तु बलवदनिष्टाननुबन्धित्वरूपनिषेध्यसमर्पकं लिङ् प्रतिरूपकमव्ययमेव।**

**“व्यातेने किरणावलीमुदयनः”**

**“चक्रे सुबन्धुः सुजनैकबन्धुः”**

**इत्यादौ तिङ् प्रतिरूपकाव्ययवत्। बलवदनिष्टाननुबन्धित्वाविशिष्टमिष्टसाधनत्वं लिङर्थ इति मतेऽपि हि नञा बलवदनिष्टाननुबन्धित्वरूपविशेषणे निषिद्धे द्रविडमण्डकन्यायेनानिष्टानुबन्धित्व एव पर्यवस्यतीत्याहुः ।।**

**तस्माद्विधिप्रत्ययस्य इष्टसाधनत्वार्थकत्वे न किञ्चिद् बाधकम् ।।**

## न्यायदीपः

मणिकारादिमतमाह ॥ **केचित्त्विति** ॥ **स्थाधातोरिति** ॥ यद्यपि ष्ठा गतिनिवृत्तावितिपठनात् ष्ठा धातोरितिवाच्यम्। तथाऽपि ''धात्वादेः षः स'' इति कृतसकारस्यायमनुवाद इत्यदोषः ॥ **प्रोपसन्दानेनेति** ॥ उपसन्दानं नाम धातुगतशक्ततावच्छेदकत्वापरपर्यायम् द्योतकत्वम्। तादृश प्रेत्युपसर्गसन्निधानेनेत्यर्थः ॥ **गमनार्थतेति** ॥

''अपेतयुद्धाभिनिवेशसौम्यो हरिर्हरिप्रस्थमथ प्रतस्थे'' ॥

इत्यादि माघादौ प्रयोगादिति भावः।

अत्रारुचिबीजं तूपसर्गाणां मण्यभिमतद्योतकत्वनिरासेनाग्रे वाचकत्वसमर्थनेनेदं प्रत्युक्तं भविष्यतीति। तिङ्प्रतिरूपकं तिङन्तसदृशमित्यर्थः।

अर्थानां प्रविवेचनाय जगतामन्तस्तमःशान्तये
सन्मार्गस्य विलोकनाय गतये लोकस्य यात्रार्थिनः।
तत्तत्तामसभूतभीतय इमां विद्यावतां प्रीतये
व्यातेने किरणावलीमुदयनः सत्तर्कतेजोमयीम्॥

इति किरणावळ्यां तृतीयो ग्रन्थकरणप्रतिज्ञाश्लोकः ॥ **चक्रे सुबन्धुरिति** ॥

प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम्।
सरस्वतीदत्तवरप्रसादश्चक्रे सुबन्धुः . . . .

इति वासवदत्ताख्यग्रन्थस्य श्लोकः। सुबन्धुरिति वासवदत्ताख्यग्रन्थकर्तुर्नामधेयम्।

आदिपदेन—

उज्जहार पदमञ्जरीमसौ शब्दशास्त्रसहकारपादपात्।

इति पदमञ्जर्यादिप्रयोगग्रहः। लिडन्तप्रयोगे तु ''परोक्षे लिडिति'' परोक्षे भूते च लिटोनुशासनात् स्वकृतेः परोक्षत्वभूतार्थयोरभावाद्व्यातेन इत्यादिप्रयोगोऽसाधुरेव स्यात्।

अत एव किरणावळीव्याख्याने – व्यातेने व्यातनोदित्यर्थमुक्त्वा, ''आशंसायां भूतवच्चे'' इति आशंसायां लिडिति मतमयुक्तं, तत्र भूतसामान्यप्रत्ययस्यातिदेशाद्भूतविशेषविहितयोः लङ्लिटोरनतिदेशादिति मतान्तरं दूषयित्वा, तिङन्तप्रतिरूपकोऽयं निपातः ''चक्रे सुबन्धुः सुजनैकबन्धुः'' इतिवदित्युक्तमिति भावः।

॥ द्रविडेति ॥ मण्डकाख्यभक्ष्यविशेषभक्षणाकुशलो द्रविडो द्राविडजातिमान् हस्तेन मण्डकं गृहीत्वा शिरोवेष्टनेनापि वदने निक्षिप्य यथा भक्षयति एवमेव विशिष्टनिषेधेनाप्यनिष्टानुबन्धित्वमेव प्राप्तमित्यर्थः ॥

अत्राप्यरुचिबीजं तु पूर्वोक्तदिशा द्वेधा निषेधस्थळे समाधानोपपत्तावव्ययत्वादिकल्पनाक्लेशो नानुसर्तव्य इति ॥

## तर्कताण्डवम्

**एतदप्युक्त''मिष्टसाधनता''मेवेति। न तु वक्त्रभिप्रायमित्यर्थः।**

**यद्यपि स्वाभिप्रायोऽपि स्वप्रवृत्तिहेतुः। तथाऽपि स स्वरूपसन्नेव हेतुः। न तु ज्ञातः। ज्ञातं सद् यत् प्रवर्तकं तदेव लिङ्वाच्यम्। तादृशं चेष्टसाधनत्वमेव। न तु स्वाभिप्रायः।**

**एतदप्याह ''इष्टसाधनतां ज्ञात्वै''वेति। न तु स्वाभिप्रायमिवाज्ञात्वेत्यर्थः।**

**उदयनोक्तवक्त्रभिप्रायविधित्वभङ्गः ॥ ३३ ॥**

## न्यायदीपः

टीकोक्तदिशा एवकारस्य भिन्नक्रममुपेत्य प्रतिपादितमर्थं मूलारूढं दर्शयति ॥ एतदप्युक्त-

मिति ॥ न केवलं प्राचीनपरिहारद्वयमित्यपेरर्थः। यथाश्रुतान्वयेऽप्येवकारव्यावर्त्यं दर्शयति ॥ यद्यपीत्यादिना ॥

ननु ज्ञातं सत्प्रवर्तकमिष्टसाधनत्वमेव न तु स्वाभिप्राय इत्ययुक्तम्। इष्टसाधनत्वज्ञाने तद्विशेषणेच्छाया अपि ज्ञातव्यत्वात्। अभिप्रायस्य चेच्छाविशेषत्वादित्यत आह ॥ अत्र चेति ॥

उदयनोक्तवक्त्रभिप्रायविधित्वभङ्गः ॥ ३३ ॥

***

## ३४. बलवदनिष्टाननुबन्धित्वादिविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गः ।

### तर्कताण्डवम्

**अत्रोक्तं मणौ–**

**नेष्टसाधनत्वमात्रं विधिः। अशक्ये तक्षकचूडामण्याहरणादौ तात्कालिकेष्टसाधने विषसम्पृक्तमधुभक्षणे निषिद्धकर्मणि च प्रवृत्तिप्रसङ्गात्। किं तु कृतिसाध्यत्वे सति बलवदनिष्टाननुबन्धित्वेन वा इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वेन वा इष्टोत्पत्यनान्तरीयकदुःखाजनकत्वेन वा विशिष्टमेवेष्टसाधनत्वं विधिः।**

**यद्यप्याद्ये बलवत्त्वमनुगतमेकं नास्तीति शङ्का। द्वितीयेऽप्यक्लेशरूपे रामस्मरणादौ तत्साध्येष्टोत्पत्तिनान्तरीयकं दुःखमप्रसिद्धमिति शङ्का। तथापि तृतीये न काऽपि शङ्का।**

## न्यायदीपः

**॥ अत्रेति ॥** इष्टसाधनत्वमेव लिङाद्यर्थ इति प्रमेयविषये विशिष्टमेवेष्टसाधनत्वं विधिप्रत्ययार्थ इत्युक्तमिति वक्ष्यमाणेनान्वयः। निषिद्धकर्मणि कलञ्जभक्षणादौ। तात्कालिकेष्टसाधन इत्यनुषङ्गः **॥ बलवदित्यादि ॥**

यद्यपि मणाविष्टोत्पत्तिनान्तरीयकेत्यादि द्वितीयकल्प एव कण्ठोक्तस्तथाऽपि श्येनादौ विधि-प्रवृत्तिव्युत्पादनस्थळे बलवदनिष्टाननुबन्धित्वमपि नान्वेतीत्यादिव्यवहारात्तदनुरोधेनाद्यः पक्षः। पक्ष-धरादिविवक्षानुरोधेन तृतीयः पक्ष उक्त इत्यदोषः।

कृतिसाध्यत्वे सतीत्येतदुत्तरकल्पद्वयेऽप्यन्वेति। आद्यविशेषणेन तक्षकचूडामण्याहरणादौ न प्रवृत्तिप्रसङ्गः। द्वितीयेन तु विषसम्पृक्तमधुभक्षणे निषिद्धे च न प्रवृत्तिः। भोजनादिना तृप्त्यादिरूपेष्टोत्पत्तौ सत्यां यन्नान्तरीयकं दुःखं श्रमादि तदधिकनरकादिदुःखाजनकत्वेनेति द्वितीयपक्षस्यार्थः। इष्टोत्पत्त्यनन्तरभाविदुःखाजनकत्वेनेति तृतीयपक्षस्यार्थः। आद्यपक्षे बलदनिष्टाननुबन्धित्वं च न विशेषणम्।

अनुगतस्य तस्याभावादिति मणिकृदुक्तमेव दोषं द्वितीयपक्षे पक्षधराद्युक्तं दोषमरुचिबीजं दर्शयति **॥ यद्यपीति ॥** इष्टापेक्षया अनिष्टस्याधिकत्वं बलवत्त्वमित्यादिरूपेण कथं चिदनुगतेः इष्टोत्पत्तिनान्त-रीयकदुःखाधिकदुःखजनकत्वं प्रसिद्धम्। तदन्यत्वेन विवक्षिततत्वस्य च सम्भवाच्छङ्केत्येवोक्तम् **॥ तृतीये न कापि शङ्केति ॥**

यद्यप्यजनकत्वं जनकत्वात्यन्ताभावजनकान्योन्याभावरूपतया भिन्नम्। तथा च मिळित-ज्ञानहेतुतायां गौरवमनुभवश्च। प्रत्येकज्ञानेऽपि फलसिद्धेश्च प्रत्येकहेतुतायामननुगम इति शङ्कास्ति। तथाऽपि प्रत्येकहेतुत्वेऽपि तादृशदुःखजनकत्वज्ञानविरोधित्वेनानुगमसम्भवादिति भावः॥

## तर्कताण्डवम्

**एवं च निषेधवाक्यस्थेन नञा बलवदनिष्टाननुबन्धि-त्वादिरूपं विशेषणमेव निषिध्यते। न तु विशेष्यम्। तथा च**

न मानान्तरविरोधः।

नच नञो विध्यर्थैकदेशेन विशेषणेनान्वये एकशब्दार्थस्य अपरशब्दार्थैकदेशेनान्वयव्युत्पत्तिविरोध इति वाच्यम्।

चैत्रमातेत्यादौ चैत्रस्य जनकस्त्रीवाचकमातृपदार्थैकदेशेन जनकत्वेन चैत्रस्य जनिकास्त्रीत्येवमन्वयस्य, चैत्रस्य नप्तेत्यादौ चैत्रस्य पौत्रवाचकनप्तृपदार्थैकदेशेन पुत्रेण चैत्रपुत्रस्य पुत्र इत्येवमन्वयस्य च दर्शनात्॥

किं च – कुमुदं श्वेतमेव पार्थ एव धनुर्धरो नीलं सरोजं भवेत्येवेत्यत्र विशेषणविशेष्यक्रियान्विता नामवधारणानां यथाक्रममयोगान्ययोगात्यान्तायोगव्यवच्छेदा अर्थाः।

एवं च श्वेतादीनामवधारणार्थैकदेशेनायोगादिनाऽन्वयो दृश्यते। एवमघटः पट इत्यादौ मन्मते सामानाधिकरण्याय नञः अन्योन्याभाववति लाक्षणिकत्वेन पदार्थैकदेशेनान्योन्याभावेन घटस्य प्रतियोगित्वेनान्वयो दृश्यते। तथा चैकदेशेनान्वयव्युत्पत्तिरेव सिद्धा।

अपि च – न कलञ्जं भक्षयेदित्यादौ नञर्थस्य विध्यर्थेन विशिष्टेनान्वयेपि शाब्देन विशिष्टाभावेन विशेष्यसत्त्वज्ञानसहकृतेन विशेषणाभावस्यानुमानात्। विध्यर्थैकदेशेन विशेषेण नञर्थस्यान्वय एव नास्ति॥

## न्यायदीपः

निषेधस्थळोक्तनिर्वाहमनुवदति॥ एवं चेति॥ विशिष्टस्य विध्यर्थत्व इत्यर्थः॥ न माना-

**न्तरेति ॥** तात्कालिकेष्टसाधनत्वग्राहिमानान्तरेत्यर्थः। पक्षधराद्युक्तशङ्कोत्तरे व्यनक्ति ॥ **न च नञ इति ॥ अवधारणार्थैकदेशेनेति ॥** अयोगव्यवच्छेदादित्रयस्याप्यवधारणार्थत्वेनैकैकप्रक्रमात् स्थितायोगान्ययोगात्यन्तायोगानां व्यवच्छेदप्रतियोगिनामवधारणार्थैकदेशत्वादिति भावः। मन्मते न्यायमते।

**॥ लक्षणिकत्वेनेति ॥** व्यक्तमेतदग्रे नञर्थनिर्णयवादे। अतिरिक्तविशिष्टाभावानभ्युपगमपक्षे समाधिं दृष्टान्तैरुपपाद्यातिरिक्ताभावमतेनाह ॥ **अपि चेति ॥**

**॥ विध्यर्थेनेति ॥** विधिप्रत्ययरूपलिङाद्यर्थेनेत्यर्थः ॥ **विशिष्टेनेति ॥** कृतिसाध्यत्वे सतीत्यादिविशेषणविशिष्टसाधनत्वेनेत्यर्थः। विशिष्टाभावेन विशिष्टाभावज्ञानेन ॥

## तर्कताण्डवम्

**केचित्तु – कृतिसाध्यत्वेष्टसाधनत्वानिष्टासाधनत्वानि प्रत्येकं विधिप्रत्ययार्थाः। तथा च निषेधस्य न विध्यर्थैकदेशेन अन्वय इत्याहुः।**

**तन्न। त्रयाणां प्रत्येकमर्थत्वेऽक्षादिशब्देष्विव एकैकस्मिन् प्रयोगे एकैकस्यैव प्रतीतिप्रसङ्गात्। सति गत्यन्तरे शक्तित्रयकल्पनस्यान्याय्यत्वाच्च। तस्माद्विशिष्टमेवेष्टसाधनत्वं विधिप्रत्ययार्थ इति।**

**उच्यते–**

**विशिष्टार्थकत्वकल्पनं हि न तावद्यागादौ प्रवृत्त्यर्थम्। इष्टसाधनत्वज्ञानेनैव तदुपपत्तेः। न हि यागे बलवदनिष्टानुबन्धित्वं प्रसक्तम्। येन तदभावो यजेतेत्यनेन बोध्येत।**

**नापि कलञ्जं न भक्षयेदित्यादिनिषेधोपपत्त्यर्थम्।**

अन्यथाऽपि तदुपपत्तेरुक्तत्वात्।

नापि सञ्जातबाधस्य विषसम्पृक्तमधुभक्षणादौ निषिद्धे कलञ्जभक्षणादौ चाप्रवृत्यर्थम्। प्रवर्तकत्वेनाभिमतमिष्ट-साधनत्वज्ञानं हि नेष्टसाधनमिति ज्ञानम्। परेष्टसाधनमिति ज्ञानेप्यप्रवृत्तेः।।

नापि स्वेष्टसाधनज्ञानम्। इष्टसामान्यसाधनत्वज्ञानेन इष्टविशेषस्वर्गादिसाधनयागादावप्रवृत्तेः। इच्छायाः स्वरूपसत्या एव प्रवर्तकत्वेन तज्ज्ञानानपेक्षणाच्च।।

किं तु स्वर्गो मेऽस्त्वितीच्छाप्रकारीभूतस्वर्गत्वविशिष्टं प्रति साधनत्वेन ज्ञानम्। न चैवं प्रवर्तकज्ञानस्याननुगमः। स्वरूपसदिच्छाविषयसाधनत्वज्ञानत्वेनानुगमात्।

एतदपि न फलेच्छारहितं प्रवृत्तिं जनयति। किं तु कृत्या स्वर्गं साधयिष्यामीति फलेच्छासहितमेव। उक्तायामिच्छायां स्वरूपेण सत्यामिदं स्वर्गसाधनमिति ज्ञानेनैव प्रवृत्तिदर्शनात्। न हि फलरागे इदं फलसाधनमिति ज्ञाने च सति अनिष्टाननुबन्धित्वाज्ञानेन प्रवृत्तिविलम्बः। क्रियां फलसाधनतया अवगम्य फलरागे सति तां चिकीर्षत्यनन्तरं करोतीति हि स्थितिः।

न चैवं यत्प्रवर्तकमिष्टविशेषसाधनत्वेन ज्ञानं तन्न विधिप्रत्ययजन्यम्। यच्च विधिप्रत्ययजन्यमिष्टसामान्य-साधनत्वेन ज्ञानं तन्न प्रवर्तकमितिकथं विधिप्रत्ययस्य प्रवृत्तिपरत्वमिति वाच्यम्।

**विधिप्रत्ययेनेष्टसाधनमित्येव बोधितेऽपि स्वर्गकामो यजेतेति वाक्यजन्यस्य स्वर्गसाधनमिति ज्ञानस्य प्रवर्तकत्वेन विधिप्रत्ययस्य प्रवृत्तिपरत्वाहानेः ॥**

## न्यायदीपः

एकदेशिमतं पूर्वपक्षिमुखेनैवानूद्य पक्षधराद्युक्तदोषेण निराह ॥ **केचित्त्विति** ॥ विशिष्टस्य लिङाद्यर्थत्वकल्पनं किं यागादौ प्रवृत्यर्थमुत निषेधोपपत्त्यर्थं यद्वा बाधकदशायामपि विषसम्पृक्तमधु-भक्षणादावप्रवृत्त्यर्थम्। आद्यं निराह ॥ **न तावदिति** ॥ द्वितीयं निराह ॥ **नापीति** ॥ **चतुर्धेति** ॥ स्वमतेन परिहारद्वयस्य ''केचित्तु अन्ये त्वि''त्याभ्यां च परिहारद्वयस्योक्तेरिति भावः।

तृतीयं निराह ॥ **नापि सञ्जातबाधस्येति** ॥ बहुव्रीहिः। विषसम्पृक्तमधुभक्षणादिक-मनर्थहेतुरिति जानतोपि पुरुषस्येत्यर्थः। इष्टोपायत्वमात्रस्य प्रवर्तकत्वेपि तस्य तत्रापि सत्त्वेन प्रवृत्त्यापत्तेरिति भावः।

प्रवर्तकत्वेनाभिमतमिष्टोपायत्वं तत्र नास्तीति वक्तुं प्रसक्तकल्पद्वयनिरासपूर्वमुपोद्धातमाह ॥ **प्रवर्तकत्वेनेत्यादिना प्रवृत्तिपरत्वाहानेरित्यन्तेन** ॥

पूर्वोक्तपक्षद्वयेऽपि दोषमाह ॥ **इच्छाया इति** ॥ इष्टसाधनमिति ज्ञानं स्वेष्टसाधनमिति ज्ञानमिति पक्षद्वयेऽपीच्छाया ज्ञानविषयतयानुप्रवेशात्। तस्याश्च स्वरूपसत्या एव प्रवर्तकत्वान्न कल्पद्वयमपि युक्तमिति भावः ॥ **इच्छेति** ॥ स्वरूपसदिच्छायाः प्रकारीभूतं स्वर्गविशेषणतया विषयीभूतं यत्स्वर्गत्वं तद्विशिष्टं प्रतीत्यर्थः।

अस्मिन् पक्षे बाधकमाशङ्क्य निराह ॥ **न चैवमिति** ॥ स्वर्गपशुपुत्रादिरूपेणेष्टविशेषाणा-मनेकत्वात्तत्तदिच्छाप्रकारीभूतविशिष्टं प्रति साधनत्वस्याप्यनेकत्वेन तज्ज्ञानानामपि तथात्वादननुगम इत्यर्थः।

॥ **स्वरूपसदिच्छेति** ॥ सुखादिवदिच्छायाः ज्ञातैकसत्त्वेऽपि तज्ज्ञानमवर्जनीयसन्निध्येव। न तु प्रवर्तककोटिप्रविष्टमिति भावः।

नन्वेवं फलेच्छाहीनस्यापि प्रवृत्त्यापत्तिरित्यत आह ॥ **एतदपीति** ॥ स्वर्गोमेऽस्त्वितीत्यादिनोक्तमपीत्यर्थः। अस्यैव प्रवर्तकत्वे प्रमाणमाह ॥ **उक्तायामिति** ॥

नन्वेवं मण्युक्तविशेषणज्ञानमप्यस्तु प्रवर्तकमित्यत आह ॥ **न हीति** ॥ कथमेतदुभयमित्यतो व्यनक्ति ॥ **क्रियामिति** ॥ यजनभोजनादिक्रियामित्यर्थः। "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलिक्ङिति, वाल्यपी" इत्युक्तत्वादवगम्येति साधु।

॥ **इति हीति** ॥ हिशब्देन सर्वानुभवसिद्धत्वं सूचयति ॥ **विधिप्रत्ययेनेति** ॥ सामान्यान्विताभिधानवादे सामान्यान्वयबोधकोऽपि शब्दः पदान्तरसमभिव्याहारेण विशेषान्वयबोधक एव भवतीत्यन्विताभिधाने व्युत्पादितत्वाल्लिङादिविधिप्रत्ययस्य चेष्टसाधनत्वसामान्यबोधकस्यापि स्वर्गयागादिशब्दान्तरसमभिव्याहारेण विशेष एव पर्यवसानान्न प्रवृत्तिपरत्वभङ्ग इत्यर्थः॥

## तर्कताण्डवम्

**एवं च विषसम्पृक्तमधुभोजनादिफले दुःखे उत्कटद्वेषदशायां तत्फले सुखे इच्छैव नेति न तत्र प्रवृत्तिः। सुखत्वप्रयुक्ताया अपि औत्सर्गिकफलेच्छाया दुःखविषयकोत्कटद्वेषेणापोदितत्वात्। अन्यथा साधने बलवदनिष्टानुबन्धित्वेन ज्ञातेपि सुखसाधनत्वप्रयुक्तेच्छा स्यात्।**

**एवं च बलवद-निष्टाननुबन्धित्वादिविशेषणफलस्य अतिप्रसङ्गनिवारणस्य इष्टसाधनताघटकत्वेन प्रवृत्ताववश्यापेक्षितायाः फलेच्छाया अभावेनैव सिद्धेरिष्टसाधनत्वं त्रेधा न विशेषणीयम्। उक्तायां फलेच्छायामसत्यां त्वदुक्तविशेषणविशिष्टस्वर्गसाधनत्वज्ञाने सत्यप्यलसस्यान्यत्र आसक्तस्य च पुरुषस्य यागादौ प्रवृत्त्यदर्शनेनान्वयव्यभिचारात्॥**

**नच तत्र साधनविषयकचिकीर्षाभावादेवाप्रवृत्तिरिति वाच्यम्। सामग्रीसत्त्वेन चिकीर्षाया एवापाद्यमानत्वात्। बलवदनिष्टानुबन्धित्वादिज्ञाने सत्यपि निषिद्धकर्मजन्ये दुःखे उत्कटद्वेषरूपापवादकाभावदशायां तज्जन्यसुख-विषयकरागौत्कट्येन निषिद्धकर्मणि प्रवृत्तिदर्शनेन व्यतिरेक व्यभिचाराच्च। नच साधनचिकीर्षया तत्र प्रवृत्तिः। सामग्र्य-भावेन चिकीर्षाभावस्यैवापाद्यमानत्वात्।**

**किञ्च विशिष्टमिष्टसाधनत्वं विध्यर्थश्चेच्छयेनेना-भिचरन्यजेतेत्यत्र विधिप्रत्ययस्य विशेष्यमात्रे लाक्षणिकत्वं स्यात्॥**

## न्यायदीपः

एवमुपोद्घातमुक्त्वा कलञ्जभक्षणादावप्रवृत्त्यर्थं विधिप्रत्ययस्य विशिष्टार्थत्वकल्पनमपि नेत्येतदुपपादयति ॥ **एवं चेति** ॥ **इच्छैव नेति** ॥ तथाच तत्रेष्टसाधनत्वज्ञानमेव नेति काराणाभावान्न प्रवृत्तिरित्यर्थः।

नन्वैवं विषसम्पृक्तमधुभोजनादिफले सुखत्वस्यापि भावात् सुखत्वप्रयुक्तेच्छया प्रवृत्तिरपि स्यादित्यत आह ॥ **सुखत्वेति** ॥ विषसम्पृक्तमधुभोजनादिजन्ये तात्कालिकतृप्तिसुखरूप इति योज्यम् ॥ **उत्कटेति** ॥ उत्कटत्वं च जातिर्वा कश्चिद्धर्मो वेति भावः ॥ **अन्यथेति** ॥ प्रबलबाधकेन रागस्यानपवादे तात्कालिकेष्टसाधने बलवदनिष्टानुबन्धित्वादिनाज्ञातेऽपीत्यर्थः।

॥ **इच्छास्यादिति** ॥ तथा च तत्प्रयुक्तेष्टसाधनत्वज्ञाननिमित्ता प्रवृत्तिरपि स्यादिति भावः। उक्तार्थस्य सङ्ग्रहेणानुवादपूर्वकं फलितमाह ॥ **एवं चेति** ॥ स्वरूपसदिच्छाविषयसाधनत्वज्ञानस्य फलेच्छासहितस्य प्रवृत्तिहेतुत्वे सतीत्यर्थः।

॥ **अतिप्रसङ्गेति** ॥ सञ्जातबाधस्यापीत्यादिनोक्तातिप्रसङ्गनिवरणस्येत्यर्थः ॥ **घटकत्वेनेति** ॥

इच्छाया अभावे इष्टसाधनतोक्त्यसम्भवादिति भावः।

ननु फलेच्छाविरहेणेवोक्तविशेषणत्रयान्यतमज्ञानविरहेणापि प्रवृत्त्यभावात्तदप्यावश्यक-मित्यतोऽन्वयव्यतिरेकव्यभिचारान्न प्रवृत्तिहेतुत्वं तस्येति भावेनाह ॥ **उक्तायामिति** ॥ व्यभिचारस्य अन्यप्रयुक्तत्वमाशङ्क्यनिराह ॥ **न चेति** ॥ **सामग्रीति** ॥ उक्तविशेषणविशिष्टेष्टसाधनत्वज्ञानस्यैव सामग्रीत्वादिति भावः।

अत्राप्यन्यप्रयुक्तत्वं व्यभिचारस्याशङ्क्य निराह ॥ **न च साधन इति** ॥ परोक्तविशेषण-विशिष्टेष्टसाधनत्वं लिङाद्यर्थ इत्यत्र कल्पकं नास्तीत्युपपाद्य बाधकं चास्तीत्याह ॥ **किं च विशिष्टमिति** ॥ श्येनेनाभिचरन्यजेतेत्यस्य श्येननामको यागः शत्रुवधसाधनमित्यर्थः।

अभिचरन्नित्यस्य ''लक्षणहेत्वोः क्रियाय''मिति हेतौ शत्रन्ततयाभिचरितुं शत्रुं हन्तुमित्यर्थात् फलभूतः शत्रुवधश्च ''न हिंस्यादिति'' वचनेन निषिद्ध इति निषिद्धफलकत्वात् तात्कालिकेष्टोपायोपि श्येनयागो बलवदनिष्टानुबन्धीष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकादिश्च भवतीति तत्र विशेषणत्रयस्य बाधाद्विशेष्यमात्रपरत्वं वाच्यम्। लिङादेर्विशिष्टार्थशक्तस्य विशेष्यमात्रे लाक्षणिकत्वमिति दोषः स्यात्। इष्टसाधनत्वस्यैव विधिप्रत्ययार्थत्वे तु न दोष इति भावः॥

ननु—गौर्द्रव्यं घटोऽनित्य इत्यादौ विशेष्यमात्रेप्यन्वयदर्शनेन विशेष्यमात्रोपस्थितौ न लक्षणा। विशेष्यबाधेन विशेषणमात्रान्वयस्थळ एव विशेष्यान्वितविशेषणस्य स्वातन्त्र्येणोपस्थित्यर्थमेव लक्षणाश्रयणमिति चेन्न। विशेषणविशेष्ययोरन्योन्यान्वितत्वेऽविशिष्टेप्येकत्रैव लक्षणेत्यत्र नियामकाभावात्॥

## तर्कताण्डवम्

**किं चैवं निवर्तकमनिष्टसाधनत्वमपि बलवदिष्टाननु-बन्धित्वेन विशेषणीयं स्यात्।**

**इमामेव प्रतिबन्दीं दर्शयितुं विष्णुतत्त्वनिर्णये ''निवर्तते च विपर्ययेण'' इत्युक्तम्।**

**ननु तत्र बलबदिष्टानुबन्धित्वज्ञानं प्रतिबन्धकमिति बलवदिष्टानुबन्धित्वाज्ञानमेव निवृत्तिहेतुर्न तु बलवदिष्टाननुबन्धित्वेन ज्ञानमपि, अननुभवादिति चेदिहापि बलवदनिष्टानुबन्धित्वज्ञानं प्रतिबन्धकमिति बलवदनिष्टानुबन्धित्वाज्ञानमेव प्रवृत्तिहेतुः न तु बलवदनिष्टाननुबन्धित्वेन ज्ञानमपि अननुभवादिति समम्॥**

**न चैवं जनकीभूतज्ञानं विघटयत एव प्रतिबन्धकत्वात् तद्विघटनीयमननुबन्धित्वेन ज्ञानं हेतुः स्यादिति वाच्यम्। प्रवृत्तिजनकीभूतफलेच्छाविघटनेनापि तदुपपत्तेः। इष्टानुबन्धित्वानिष्टानुबन्धित्वज्ञानयोः प्रवृत्तिनिवृत्तिरूपविरुद्धकार्यसामग्रीत्वेन सत्प्रतिपक्षवत्साक्षादेव प्रतिबन्धकत्वाच्च॥**

## न्यायदीपः

तुष्यतु दुर्जन इति दोषान्तरमाह॥ **किं चैवमिति**॥ ''न कलञ्जं भक्षयेदित्यादौ निषेधान्वितलिङादिना बोध्यमानमनिष्टसाधनत्वन्निवर्तकमनुभवसिद्धम्। तत्रापि विधिस्थळ इव तावन्मात्रं न निवर्तकम्। किं तु बलवदिष्टाननुबन्धित्वादिविशिष्टानिष्टोपायत्वज्ञानमेवनिवृत्तिहेतुरिति निषेधान्वितविधिप्रत्ययस्याप्युक्तरूपविशेषणविशिष्टानिष्टोपायत्वमेवार्थो भवेत्। तथा च निषेधवाक्यस्थेन न चेत्यादिपूर्वोक्तविरोध इति भावः॥

प्रतिपादितं मूलारूढं दर्शयति ॥ **इमामिति**॥ विपर्ययेण, इष्टसाधनत्वविपर्ययानिष्टसाधनत्वज्ञानेनेत्यर्थः। प्रतिबन्दीकथनस्य विशेषणत्याग एव फलमिति भावेन परमुखेन समाधिं वाचयित्वा सममित्याह॥ **नन्विति**॥ तत्र निवृत्तिस्थळे। प्रतिबन्धकं निवृत्तेरिति योज्यम्।

॥ **सममिति**॥ प्रवृत्तिस्थळेपि बलवदनिष्टानुबन्धित्वज्ञानं प्रवृत्तिप्रतिबन्जधकमिति बलवदनिष्टानुबन्धित्वाज्ञानमेव प्रवृत्तिहेतुर्न तु बलवदनिष्टाननुबन्धित्वज्ञानमप्यननुभवादिति सममित्यर्थः।

क्वचित्तु एवमेव मूले पाठः।

मणौ पूर्वपक्षे कृतिसाध्यत्वज्ञानस्य हेतुत्वे कथितयुक्ति तुल्यन्यायतयाऽत्राप्याशङ्क्य निराह ॥ **न चैवमिति** ॥ बलवदनिष्टानुबन्धित्वज्ञानस्य प्रवृत्तिप्रतिबन्धकत्व इत्यर्थः।

॥ **जनकज्ञानमिति** ॥ साक्षादविरोधिनो ज्ञानस्य यत्किञ्चिज्जनकज्ञानं विघटयत एव कार्यप्रतिबन्धकत्वम्। व्यभिचारज्ञानस्य व्याप्तिज्ञानं विघटयत एवानुमितिप्रतिबन्धकत्वदर्शनात्प्रकृते च बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकत्वान्यथाऽनुपपत्त्यैव तदननुबन्धित्वादिज्ञानं कारणमित्यायातमिति न च वाच्यमित्यर्थः।

साक्षादविरोधिो ज्ञानस्य यत्किञ्चिज्जनकविघटकत्वेनैव प्रतिबन्धकत्वोपपत्तौ किं जनकज्ञान-विघटकत्वेनेति ज्ञानविशेषणेनेति भावेनाह ॥ **प्रवृत्तीति** ॥ अस्तु वा तवायं नियमस्तथाऽपि न प्रकृते तज्ज्ञानस्य हेतुत्वमायाति साक्षादेव विरोधत्वसम्भवादित्याह ॥ **इष्टानुबन्धित्वेति** ॥ **सत्प्रति-पक्षवदिति** ॥ अन्यथा तत्राप्यसत्प्रतिपक्षत्वज्ञानस्यानुमितिहेतुताऽऽपत्तेरिति भावः।

## तर्कताण्डवम्

**ननु तर्हि बलवद्द्वेषविषयदुःखाजनकत्वं विशेषणमस्तु, एवं च नोक्तव्यभिचारः, निषिद्धकर्मजन्ये सुख उत्कटरागवतो निषिद्धकर्मणि बलवदनिष्टानुबन्धित्वज्ञाने सत्यपि तज्जन्ये दुःखे बलवद्द्वेषाभावेन बलद्द्वेषविषयदुःखाजनकत्व-ज्ञानस्य सत्त्वादिति चेन्न।**

**कस्यचिदलसादेर्यागाद्यनुष्ठानजन्यदुःखेपि बलवद्-द्वेषस्य सत्त्वेन बलवद्द्वेषविषयदुःखाननुबन्धित्वेनविशिष्टस्य विधिप्रत्ययार्थस्य बाधित-तया विधानानुपपत्तेः।**

**नच प्रवर्तमानस्य बलवद्द्वेषो विवक्षित इति वाच्यम्। निषिद्धेपि कर्मण्युत्कटरागेण प्रवर्तमानस्य तज्जन्यदुःखे**

**बलवद्द्वेषाभावेन निषिद्धस्यापि विधेयत्वापातात्। तस्मात् शुद्धमेवेष्टसाधनत्वं प्रवर्तकम्।**

**एतदप्युक्तम् ''इष्टसाधनतामेव'' इति। शुद्धामिष्टसाधनतामेव न तु बलवदनिष्टाननुबन्धित्वादिविशिष्टामित्यर्थः।**

## न्यायदीपः

स्वरूपसद् बलवद्द्वेषविषयदुःखाजनकत्वे सति तादृशेच्छाविषयसाधनमिति ज्ञानं प्रवर्तकमिति निर्गळितोर्थ इति पक्षधरोक्तमाशङ्कते ॥ **ननु तर्हीति** ॥ बलवदनिष्टाननुबन्धित्वादेर्विशेषणस्य व्यभिचारितया दुष्टत्व इत्यर्थः ॥ **व्यभिचार इति** ॥ व्यतिरेकव्यभिचार इत्यर्थः ॥ **विधानानुपपत्तेरिरिति** ॥

ननु – तं प्रति विध्ययोगेऽपि पुरुषान्तरं प्रति कालान्तरे तं प्रत्येव वा विधानोपपत्तिरिति चेन्न। विधेः सर्वदा सर्वपुरुषसाधारण्यस्य वाच्यत्वादिति भावः। विधेयत्वापातादित्युपलक्षणम्। बलवद्द्वेषेत्यत्र बलवत्त्वस्यानुगतस्याभावादिति मणावेव निरासात्। न च बलवत्त्वमुत्कटत्वं तच्च जातिविशेष इति युक्तम्। उत्कटानुत्कटनानादुःखविषयकसमूहालम्बनाद्यत्र तदुभयगोचरो द्वेष एकांशे उत्कटः अपरांशे अनुत्कटः कथं तत्र जातिः। अव्याप्यवृत्तित्वात्। न च तत्र द्वेषद्वयम्। ज्ञानादेरपि तथापातेन समूहालम्बनोच्छेदापत्तेः। सामग्रीयौगपद्यात्। क्रमे विनिगमनाभावाच्च। ज्ञानस्यैकत्वे द्वेषेऽपि साम्यम्॥

यदि च तस्य तत्रोपाधित्वं तर्ह्यननुगम एव। तद्वदेवान्यत्रापि तस्योपाधिताऽऽपत्तिश्च। अत एवोत्कटकोटिकसन्देहे उत्कटत्वं न जातिरित्येव न्यायमतम्। अस्तु वा जातिरुत्कटत्वम्। तथाऽपि शब्दवद्देवदत्तादिकारणविशेषप्रयोज्यद्वेषवैजात्यमावश्यकमिति तत्सङ्करापत्त्या द्वेषानिष्ठमुत्कटत्वमनेकमिति वाच्यम्। तदननुगमेन ज्ञानाननुगमात्। प्रवृत्त्यननुगम एव लिङादिपदशक्तिग्रहानुपपत्तिश्चेत्याद्यपि ध्येयम्॥

उक्तदोषान् सङ्क्षिप्यानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ तच्छब्दपरामृष्टमेव हेतुचतुष्टयं क्रमेण

व्यनक्ति ।। **अवश्यकेत्यादिना ।।**

।। **अति प्रसङ्गेति ।।** सञ्जातबाधस्यापीत्यादिनोक्तातिप्रसङ्गेत्यर्थः ।। **उभयत इति ।।** उक्तायां फलेच्छायामित्यादिनोक्तादन्वयतो व्यतिरेकतो व्यभिचारादित्यर्थः।

किं च विशिष्टमित्यादिनोक्तमाह ।। **श्येनेति ।।** किञ्चैवमित्यादिनोक्तमाह ।। **निवर्तक इति ।।** चतुर्धेत्युक्तिघटनायोक्तं मण्यादी-त्यादिपदम्। तेन तद्व्याख्यानाभिमतं ननु तर्हि बलवदित्यादिनोक्तं चतुर्थविशेषणं ध्येयम्।।

## तर्कताण्डवम्

**ननु तर्हि साधनत्वमेव विध्यर्थोस्तु। प्रवर्तकस्य स्वर्गसाधनत्वज्ञानस्य फलपदसमभिव्याहारादेव सिद्धेः। त्वयाऽपि विधिप्रत्ययार्थत्वेन स्वीकृतस्येष्टसामान्यसाधनत्वज्ञानस्य चाप्रवर्तकत्वादिति चेन्न। फलपदसमभिव्याहारात्प्रागेव विधिप्रत्ययेनैवेष्टसामान्यसाधनत्वस्य प्रतीतेः। अन्यथा साधनत्वमप्यर्थो न स्यात्। आख्यातान्तरवत्कृत्यादिरेवार्थः स्यात्। विश्वजिदादाविष्टविशेषकल्पनं च न स्यात्। तस्मात् साधनमिष्टत्वेन विशेषणीयमेव।**

**एतदप्युक्तमिष्टसाधनतामेवेति। न तु साधनत्वमात्रमित्यर्थः।**

## बलवदनिष्टाननुबन्धित्वादिविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गः ।। ३४ ।।

## न्यायदीपः

यत्तु – निषिद्धकर्मादावप्रवृत्त्यर्थमुक्तमिष्टसाधनत्वज्ञानमात्रं न प्रवर्तकम्। किं तु स्वर्गोमेस्त्वि-

त्येवमादिरूपतत्तदिच्छाप्रकारीभूतस्वर्गत्वादिविशिष्टं प्रति साधनत्वेन ज्ञानमेव। स्वरूपसदिच्छा-विषयसाधनत्वज्ञानत्वं त्वनुगमकमात्रमिति। तत्र मण्याद्युक्तविशेषणचतुष्टयवदिष्टेतिविशेषणमपि व्यर्थमिति शङ्कते ॥ **ननु तर्हीति** ॥ तत्तद्विशेषसाधनत्वज्ञानस्यैव प्रवर्तकत्व इत्यर्थः। विध्यर्थः लिङादिविधिप्रत्ययार्थः।

प्रवर्तकज्ञानलाभः केनेत्यत आह ॥ **प्रवर्तकस्येति** ॥ स्वर्गपश्वादितत्तत्फलविशेषसाधनत्व-ज्ञानस्य स्वर्गपश्वादिफलसमर्पकस्वर्गकामपशुकामादिपदसहोच्चारणेनैव सिद्धेरित्यर्थः ॥ **त्वयेति** ॥ सिद्धान्तिना। येन तस्यापि लिङाद्यर्थता कल्प्येतेति भावः।

सत्यमेवं तथाऽपि प्रयोगप्रत्ययाभ्यामेव शब्दार्थव्यवस्था वाच्या। प्रकृते चेष्टसाधनत्वस्य लिङादिना प्रतीयमानत्वात्तदर्थकत्वकल्पनमेव तस्य युक्तमितिभावेनाह ॥ **फलपदेति** ॥ **अन्यथेति** ॥ प्रतीतस्यापि त्याग इत्यर्थः। तर्हि नैरर्थक्यमेव लिङादेः स्यादित्यत आह ॥ **आख्यातेति** ॥

बाधकान्तरमाह ॥ **विश्वजिदिति** ॥ अन्यथेत्यनुषङ्गः। इष्टसामान्यस्य लिङादिना प्रतीत्यभाव इति तस्यार्थः। चतुर्थे तृतीयपादे "चोदनायां फलाश्रुतेः कर्ममात्रं प्रतीयेत न ह्यशब्दं प्रतीयते" इति पञ्चमेधिकरणे विश्वजिता यजेतेत्यादि विश्वजिदादिनामकयागेषु अश्रुतफलेषु फलमस्त्युत नेति सन्देहे स्वर्गादिरूपादृष्टफलस्य शब्दप्रमाणकत्वादिह च स्वर्गादिबोधकशब्दाभावात् यागं कुर्यादित्यन्वयेन यजेतेत्यस्य निराकाङ्क्षतयाऽऽकाङ्क्षामूलकस्य स्वर्गादिफलपदाध्याहारस्य चायोगान्नास्त्येव फलमिति प्राप्ते लिङादिविधिप्रत्ययनिष्ठप्रवर्तनापरपर्यायशब्दभावनाशब्दितपुरुषप्रवर्तकरूपविधिविषयभूता प्रयत्नात्मिकार्थभावना स्वस्य भाव्यमाकाङ्क्षली यागं क्लेशरूपतया भाव्यत्वेन न स्वीकरोतीति तदाकाङ्क्षापूरणाय फलपदाध्याहारस्यावश्यकत्वादस्ति फलवत्त्वमिति सिद्धान्तयित्वा तत्किं सर्वफलार्थत्वमुतैकफलार्थत्वमिति पुनः संशये विशेषाभावात्सर्वफलार्थत्वे प्राप्ते एकफलेनैव भाव्याकाङ्क्षापूर्तेर्नानेककल्पना युक्तेति "तत्सार्वार्थमानादेशादि"ति षष्ठाधिकरणे विचार्य "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादिति" सप्तमनये तदेकं फलमेवं रूपमिति विशिष्यानिर्णयात् पुनः सर्वार्थत्वमेवेति प्राप्त स्वर्गस्य दुःखासम्भिन्नसुखरूपतया सर्वाभिलषितत्वात् स्वर्ग एवाध्याहारेण कल्प्य इति सिद्धान्तितं पूर्वतन्त्रे। तथा च तत्र भाव्यतयेष्टसामान्याकाङ्क्षायां सत्यामेव स्वर्गरूपेष्टविशेषकल्पनं यत्कृतं तच्च न स्यादित्यर्थः ॥ **इष्टत्वेनेति** ॥ इष्टेतिविशेषणेनेष्टसाधनत्वमित्येवंरूपेण विशेषणीय-मित्यर्थः।

बलवदिष्टाननुबन्धित्वादिविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गः ॥ ३४ ॥

***

## ३५. कृतिसाध्यत्वादिविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गः ।

### तर्कताण्डवम्

ननु तथाऽपीष्टसाधनत्वं तक्षकचूडामण्याहरणादावप्रवृत्त्यर्थं कृतिसाध्यत्वेनावश्यं विशेषणीयमिति चेन्न। कृतिसाध्यत्वज्ञानदशायां प्रवृत्त्यापादने इष्टापत्तेः। तदसाध्यत्वज्ञानदशायां तु कृत्या फलं साधयिष्यामीति कृतिसाध्यत्वप्रकारिकायाः फलेच्छाया अभावादेवाप्रवृत्तेः। न हि साधने कृत्यसाध्यत्वेन ज्ञाते फले कृतिसाध्यत्वं ज्ञातुं शक्यम्।

न च फलस्य कृतिसाध्यत्वाज्ञाने फले तत्प्रकारिकेच्छा युक्ता। कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानं वा कार्यताज्ञानं वा प्रवर्तकमिति मतेऽपि हि उक्ता फलेच्छाऽऽवश्यकी। उक्ते ज्ञानद्वये सत्यप्युक्तफलेच्छारहितस्य चेतनस्याप्रवृत्तेः। दृश्यते हि फलं दैवादन्यकृतितोऽपि वा मम सिध्यत्वितीच्छायां त्वदुक्तविशिष्टेष्टसाधनत्वज्ञाने कृतिसाध्यत्वज्ञाने च सत्यपि फलं कृत्यासाधयिष्यामीतीच्छाऽभावेन प्रवृत्त्यभावः।

### न्यायदीपः

॥ तथाऽपीति ॥ मण्याद्युक्तदिशा चतुर्धाविशेषणीयत्वाभावेपीत्यर्थः ॥ कृतिसाध्यत्वेन

**अवश्यं विशेषणीयमिति ॥** कृतिसाध्यं यदिष्टसाधनं तत्त्वज्ञानं प्रवर्तकमिति वाच्यमित्यर्थः। तक्षकचूडामण्या हरणादिकं च तक्षकदंशनभीत्या कृत्यसाध्यमिति भावः। असाध्यत्वाज्ञानदशायां विशेषणीयं उत तत्त्वेन ज्ञानकाले। आद्य आह **॥ कृतीति ॥** अन्त्ये त्वन्यथैवाप्रवृत्त्युपपत्तौ किं विशेषणेनेत्याह **॥ तदसाध्यत्वेति ॥**

साधनस्य कृत्यसाध्यत्वज्ञानकाले फलेच्छाया अभाव एव कुत इति चेत्। कृतिसाध्यत्व-प्रकारकफलगोचरेच्छायाः कृतिसाध्यत्वप्रकारकफलविशेष्यकज्ञानजन्यत्वात् तादृशज्ञानस्य च कृतिसाध्यत्वप्रकारकसाधनगोचरज्ञानजन्यत्वात्कारणाभावादेव फलेच्छारूपकार्याभाव इत्येत-द्व्यतिरेकमुखेनोपपादयति **॥ न हीति ॥**

अस्त्वेवं तथाऽपि फलेच्छाया आवश्यकत्वमेव कुत इत्यतः प्रतिज्ञापूर्वं हेतुमाह **॥ कृति साध्यत्वेति ॥** आद्यं तार्किकरीत्योक्तम्। अन्त्यं प्राभाकररीत्या। कुत इत्यत आह **॥ उक्त इति ॥ ज्ञानद्वये ॥** कार्यत्वज्ञानंवेत्यन्तेनोक्तज्ञानद्वये इत्यर्थः।

**॥ उक्तफलेच्छेति ॥** कृत्या फलं साधयिष्यामीत्युक्तकृतिसाध्यत्वप्रकारकेच्छेत्यर्थः **॥ चेतनस्येति ॥** स्पष्टार्थं ज्ञानद्वये सतीत्यस्य घटनार्थं वेति ध्येयम्। कथमेतदित्यतो व्यनक्ति **॥ दृश्यते हीति ॥** प्रवृत्त्यभाव इत्यन्वयः।

**॥ उक्तविशिष्टेति ॥** कृतिसाध्यत्वविशिष्टेत्यर्थः। कार्यत्वज्ञानं वेत्यस्य विवरणेन निर्देशः **॥ कृतिसाध्यत्वज्ञानेचेति ॥ इच्छाभावेनेति ॥** इच्छाया अभावेनेत्यर्थः ॥

## तर्कताण्डवम्

**नन्वेवं क्रियायाः कृतिसाध्यत्वज्ञानमपि त्वयाऽपि प्रवर्तकत्वेन स्वीकृतमिति चेत्। सत्यम्। न तु तल्लिङ्-शब्दजन्यम्। क्रियायाः कृतिसाध्यत्वस्य कृत्यन्वयव्यति-रेकगम्यत्वेन तत्र लिङ्शक्ते रकल्पनात्। न हि यजेतेतिशब्दः स्वर्गकामस्य यागः शक्य इत्याह। किन्त्विष्टसाधनमित्येव।**

**तत्र शक्तः प्रवर्तते। अशक्तस्तु न लिङर्थः। साध्यत्वसाधनत्वयोः प्रतियोगिभेदेन कालभेदेन चाविरोधेपि सकृत्प्रयुक्तेन लिङ्शब्देनावृत्तिं विनोपस्थित्यसम्भवात्। अन्यथा वाजिपेयाधिकरणेऽपि पूर्वपक्षरीत्या यजिना तयोर्युगपदुपस्थितिसम्भवेन तदसम्भवनिबन्धनः सिद्धान्तो न सिध्येत्।**

## न्यायदीपः

गूढाभिप्रायेण शङ्कते ॥ **नन्वेवमिति** ॥ कृतिसाध्यत्वप्रकारकफलेच्छायाः प्रवृत्तिहेतुत्वोपगम इत्यर्थः ॥ **प्रवर्तकत्वेनेति** ॥ उक्तरूपफलेच्छां प्रति हेतुत्वेन फले कृतिसाध्यत्वज्ञानस्यावश्यकत्वेन तद्धेतुक्रियायामपि कृतिसाध्यत्वज्ञानस्याङ्गीकृतत्वादिति भावः ।तथाच तज्ज्ञानस्य लिङादिविधिप्रत्ययजन्यत्वात्कृतिसाध्यत्वस्यापि लिङाद्यर्थत्वं प्राप्तमिति हृदयम्।

विदिताभिप्रायः ''लिङाद्यर्थस्तु इष्टसाधनत्वमेवे''ति कर्मनिर्णयवाक्यं हृदि कृत्वा परिहरति ॥ **सत्यमित्यादिना** ॥ केन तर्हिकृतिसाध्यत्वज्ञानं कुतो लिङादिजन्यं नेत्यत आह ॥ **क्रियाया इति** ॥ यागादिरूपाया इत्यर्थः ॥

ननु—यथा साधनत्वमात्रस्य लिङर्थत्वसम्भवेऽपि प्रतीतिबलादिष्टसाधनत्वं लिङाद्यर्थ इत्युच्यते तथैव प्रतीतिबलात्कृतिसाध्यत्वमपि लिङाद्यर्थ इत्युच्यतामित्यत आह ॥ **नहीति** ॥ **शक्य इति** ॥ कृतिसाध्य इत्याहेत्यर्थः ॥ **इष्टसाधनमित्येवेति** ॥ याग इति योज्यम्।

एवं तर्हि सर्वेपि कुतो न प्रवर्तन्ते कुतो वा सर्वेऽपि न निवर्तन्त इत्यत आह ॥ **तत्र शक्त इति** ॥ क्रियां कृत्या साधयितुं समर्थ इत्यर्थः। प्रतीत्यभावे विप्रतिपन्नं प्रत्याह ॥ **किं चेति** ॥

अत्रोच्यत इत्यादिना विधिवादसिद्धान्तमणिग्रन्थोक्तदिशा तयोरविरोधमनुवदति ॥ **साध्यत्वेत्यादि** ॥ **प्रतियोगीति** ॥ यद्यपि – एकस्य पाकादेर्यं प्रति साध्यत्वं तं प्रति साधनत्वं विरुद्धम्। काष्ठादिरूपस्वकारणं प्रति साध्यत्वमोदनादिकार्यं प्रति साधनत्वमविरुद्धम्। निरूपकभेदात्। तथा यदा साध्यत्वं तदैव साधनत्वम्। तत्प्रयोजकयोरसिद्धत्वसिद्धत्वयोरेकदैकस्मिन्विरोधात्। कालभेदेन तु न विरुद्धम्। असिद्धताकाले साध्यत्वस्य सिद्धत्वदशायां साधनत्वस्य च सम्भवात्।

तथापीत्यर्थः ।। **उपस्थित्य-सम्भवादिति** ।। साध्यत्वसाधनत्वयोरित्यनुषङ्गः।

।। **अन्यथेति** ।। आवृत्तिं विनाऽपि युगपदुपस्थितावित्यर्थः। आद्यस्य चतुर्थपादे

''नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्''

इति पञ्चमेऽधिकरणे – ''वाजपेयेन स्वाराज्यकामो यजेते''त्यत्र वाजतेयशब्दः किं पेयं पातुं योग्यं वाजमन्नमिति द्रवरूपद्रव्याख्यगुणविधिपरोऽथ कर्मनामधेयमिति संशये यजेतेति श्रुताख्यातोपात्त-प्रयत्नापरपर्यायभावनया यागस्य प्रकृतिप्रत्ययसमभिव्याहारबलेन कर्मत्वकारणत्वसाधारणसम्बन्ध-सामान्येऽवगते सति कर्मत्वांशमादाय वाजपेयपदोक्तगुणस्य पेयरूपवाजेन यागं कुर्यादित्यन्वयस्य कारणत्वांशमादाय यागेन स्वाराज्यं भावयेदिति फलान्वयस्य युगपदेव सम्भवाद्गुणविधिपर इति प्राप्ते कर्मत्वकारणत्वौदासीन्येन सम्बन्धमात्रावगतौ गुणफलयोरन्यतरस्यापि यागेनान्वयापातात् विशिष्य कर्मत्वकारणत्वयोरुपस्थितेरावृत्तिमन्तरेणा सम्भवात् यागस्य कारणत्वेनैव बोधमुपेत्य फलान्वय एव वाच्यः वाजपेयपदं तु नामधेयमिति सिद्धान्तितम्। तत्सिद्धान्तभङ्गप्रसङ्ग इति भावः।

## तर्कताण्डवम्

**अपि च न कृतिसाध्यत्वेन ज्ञानमात्रं प्रवर्तकम्। अन्य-कृतिसाध्येऽपि स्वकृत्यसाध्ये प्रवृत्त्यदर्शनात्। किं तु स्वकृति-साध्यत्वेन। न च शब्देन स्वकृतिसाध्यत्वं बोध्यते। किं त्वयं यागो मत्कृतिसाध्यो मत्कृतिं विनाऽसत्त्वात् इत्यनुमानेन। तथा च प्रवर्तकं ज्ञानमानुमानिकं स्यात्। न तु शाब्दम्।**

**नच प्रवर्तकज्ञानजनकस्य लिङ्गस्य शब्देनोपस्थापनात् शाब्दत्वमिति वाच्यम्। अयं यागः स्वर्गकामेन मया कर्तव्यः स्वर्गकामपदसमभिव्याहृतप्रमाणवाक्यस्थलिङ्गशिरस्क-धात्वर्थत्वात् यदेवं तदेवं यथौदनकामपदसमभिव्याहृताप्त-**

**वाक्यस्थसिद्ध्या लिङ आख्यातान्तरवत्कृतिरेवार्थो न त्विष्टसाधनत्वमपीत्यापत्तेः।**

**मन्मते तु स्वकृतिसाध्यत्वज्ञानं न प्रवर्तकमिति नानुमानापेक्षा। यागे स्वर्गसाधनत्वेन ज्ञाते स्वस्योक्तायां स्वर्गेच्छायां च सत्यां प्रवृत्तावविलम्बात्। तस्मात्कृति-साध्यत्वमपि न लिङर्थः ।।**

## न्यायदीपः

कृतिसाध्यत्वेष्टसाधनत्वयोरुपस्थापकत्वायोगात् न विशिष्टं लिङादिविधिप्रत्ययार्थोपि तु तदुपस्थितेरन्यतः सिद्धत्वान्न लिङादेस्तदर्थकत्वमित्याह ।। **अपि चेति** ।। **इत्यनुमानेनैवेति** ।। तथैव विधिवादे त्वयोक्तेरिति भावः। प्रवृत्तिकारणानि निष्कृष्याह ।। **एवं चेति** ।। स्वकृतिसाध्यत्वज्ञानस्य आनुमानिकत्वे सतीत्यर्थः। प्रवृत्तिशब्दार्थविवरणं चिकीर्षाकृती भवत इति।

उपसंहरति ।। **तस्मादिति** ।। तस्मादिति परामृष्टं हेतुत्रयं व्यनक्ति ।। **आवश्यकेत्यादिना** ।। **इति फलेच्छयेति** ।। कृतिसाध्यत्वप्रकारकफलविशेष्यकेच्छयैव प्रवृत्तिहेतुसामग्रीकोटिप्रविष्टया निषिद्धकर्मणि प्रवृत्तिरूपातिप्रसङ्गनिवारणादित्यर्थः।

।। **विरुद्धत्रिकेति** ।। ''वाजपेयेन स्वाराज्यकामो यजेते''त्यादौ यजिनोक्तयागस्य साध्यत्व-साधनत्वयोर्युगपद् बोधने सति साध्यत्वसमानाधिकरणं यत्रिकं उद्धेश्यत्वानुवाद्यत्व साधान्यरूप धर्मत्रयं, साधनत्वसमानाधिकरणं यत् त्रिकं उपादेयत्वविधेयत्वगुणत्वरूपधर्मत्रयं, परस्परविरुद्ध-मुद्देश्यत्वादिधर्मत्रयस्य यथाक्रममुपादेयत्वादिधर्मत्रयप्रतिद्वन्द्वित्वाद्विरुद्धं यत् त्रिकद्वयं तस्य यागे आपाताच्चेति किं चेत्यादिनोक्तहेत्वनुवादः। अपि चेत्यादिनोक्तस्य कृत्यन्वयव्यतिरेकगम्यत्वेनेत्युक्तस्य चैकप्रमेयत्वात्पूर्वमनुवादः कृतः।

## तर्कताण्डवम्

**एतदेवाभिप्रेत्य सुधायां ''कृतिसाध्यत्वविशेषणस्य**

व्यर्थत्वादित्युक्तम्॥

नचैवं सुधायाः, कृतिसाध्यतैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तरिति कर्मनिर्णयटीकया, कृतिसाध्येष्टसाधनतायाः कार्यतापर्यायत्वादिति विष्णुतत्त्वनिर्णयटीकया च सह विरोध इति वाच्यम्।

सुधया निर्णयटीकाभ्यामुक्तां मानान्तरजस्य कृतिसाध्यत्वज्ञानस्य प्रवृत्तिहेतुतां स्वीकृत्यैव कृतिसाध्यत्वस्य लिङर्थत्वमात्र-निषेधात्।

अत एव कर्मनिर्णये लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति लिङादेस्त्विष्टसाधनतार्थत्वेनैव कृतार्थत्वमिति चोक्तम्। तट्टीकायामपि कृतिसाध्यतायाः स्वरूपतः क्रियासमवायमुक्त्वेष्टसाधनताया ज्ञानमुक्तम्॥

एतदप्युक्तमिष्टसाधानतामेवेति। न तु कृतिसाध्यत्वविशेषितामित्यर्थः। शब्दादिति शेषः।

## न्यायदीपः

ननु तथाऽपीत्यादिनोपपादितमर्थं मूलारूढं करोति॥ **एतदेवेति**॥ जिज्ञासाधिकरणे "कार्यता च न काचित्स्या" दित्यादिपरकीयकार्यताखण्डनप्रकरणे "तदिष्टं साधनं तथा" इत्युपसंहारवाक्यव्याख्यावसरे सुधायामुक्तमित्यर्थः ॥ **कृतिसाध्यतेति**॥ कृतिसाध्यतयैकस्मिन्नर्थे समवेता या इष्टसाधनता तज्ज्ञानादित्यर्थः।

॥ **ज्ञानादिति**॥ लिङादिशब्दजन्यादिति शेषः॥ **इति कर्मनिर्णयटीकयेति**॥ न च सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावादित्यादिप्रकरणेन चार्थापत्तिः अनुपपत्त्यभावादित्येतद्व्याख्यानरूपयेत्यर्थः

**॥ तत्त्वनिर्णयटीकयेति ॥** "ज्ञात्वैव हीष्टसाधनतां प्रवर्तते। निवर्तते च विपर्ययेणे" त्येतद्व्याख्यानरूपेत्यर्थः।

**॥ सुधयेति ॥** तृतीयान्तस्य निषेधादित्यन्वयः **॥ निर्णयटीकाभ्यामिति ॥** प्रागुक्तकर्मनिर्णय-तत्त्वनिर्णयटीकावाक्याभ्यामित्यर्थः **॥ मानान्तरेति ॥** प्रागुक्तान्वयव्यतिरेकाख्यानुमानरूपमाना-न्तरेत्यर्थः।

लिङर्थत्वमात्रनिषेधपरत्वे ज्ञापकमाह **॥ अत एवेति ॥** कृतिसाध्यत्वस्य लिङाद्यर्थत्वा-भावादेवेत्यर्थः **॥ तट्टीकायमपीति ॥** अत एवेत्यनुषङ्गः।

कृतिसाध्यत्वस्य लिङाद्यर्थत्वाभावेन तज्ज्ञानजनकस्य कस्यचिदपि शब्दास्याभावादेव कर्मनिर्णयटीकायां कृतिसाध्यतैकार्थसमवेतेति पूर्ववाक्ये कृतिसाध्यताविशिष्टेष्टसाधनता-ज्ञानादित्येवंरूपवाक्यविन्यासेन लिङादिजन्यज्ञानविषयकोटौ कृतिसाध्यत्वस्य प्रवेशमकृत्वा कृतिसाध्यतैकार्थेत्यादिरूपेणेष्टसाधनतया लिङादिवाच्यया साकं यागादिक्रियानिष्ठत्वमात्रं कृति साध्यत्वस्योक्तम्। न तु स्यापि लिङादिजन्यज्ञान-विषयत्वमपीत्यर्थः। कर्मनिर्णयतट्टीकाभ्यामेकार्थत्वं तत्त्वनिर्णयवाक्यस्याह **॥ एतदपीति ॥** लिङादिना प्रवृत्तिकारणमिष्टसाधनताज्ञानमेव जायते न तु कृतिसाध्यताज्ञानमपीत्येतदपीत्यर्थः। पूर्वोक्तार्थसमुच्चयेऽपिपदम्। एकार्थ्यघटनाय तत्त्वनिर्णयवाक्ये अध्याहारमाह **॥ शब्दादिति शेष इति ॥** लिङादिशब्दादिष्टसाधनतामेव ज्ञात्वा प्रवर्तत इति तत्त्वनिर्णयवाक्यार्थ इति भावः।

एतेन — कर्मनिर्णयटीकायां कृतिसाध्यत्वं प्रवर्तकज्ञानकोटौ न प्रवेशितम्। तत्त्वनिर्णयटीकायां तु प्रवर्तकज्ञानविषयतयाऽभिमतकार्यताकोटौ कृतिसाध्यत्वस्य प्रवेशात्तस्यापि प्रवर्तकज्ञानविषयकौटौ प्रवेशः कृतः। इति निर्णयटीकयोर्विरोध इत्यपि निरस्तम्। उभयत्र लिङादिजन्यज्ञानविषयकोटाव-प्रवेशाभिप्रायस्योक्तत्वात्।

## तर्कताण्डवम्

**यद्वा शब्दजन्यमिष्टसाधनत्वज्ञानमेव प्रवर्तकं मनान्तरजन्यं यागादेः कृतिसाध्यत्वज्ञानं तु फलं कृत्या**

साधयिष्यामीति कृतिसाध्यत्वप्रकारिका यावश्यकी फलेच्छा तदुत्पादनोपक्षीणम्। न तु प्रवर्तकम्। तथा च सुधा कृतिसाध्यत्वज्ञानस्य साक्षादुपयोगनिषेधिका निर्णयटीके तु परम्परोपयोगपरे इति न विरोधः॥

केचित्तु – शब्दजन्यमिष्टसाधनत्वज्ञानमेव प्रवर्तकम्। तक्षकचूडामण्याहरणादौ तु मानान्तरजन्यं कृत्यसाध्यत्वज्ञानं प्रतिबन्धकमिति कृतिसाध्यत्वज्ञानं प्रतिबन्धकनिरासोपक्षीणम्। प्रतिबन्धकाभावश्च सर्वकार्यापेक्षितः।

एवं च सुधा कृतिसाध्यत्वज्ञानस्यानन्यथा सिद्धिनिषेधिका। निर्णयटीके तु उपयोगमात्रास्तित्वपरे इति न विरोध इत्याहुः।

तस्माद्विधिप्रत्यय इष्टसाधनत्वबोधनेनैव प्रवृत्तिहेतुः। फलसौन्दर्यजन्या फलं कृत्या साधयिष्यामीति फलेच्छा त्वात्ममनः संयोगादिवत्स्वरूपसतीष्टसधनविषयककृतिरूपप्रवृत्तिहेतुः। सा च साधनविषयककृतिं प्रति किञ्चिदन्तरिताऽपि स्वविरोधिव्यापारानन्तरिता प्रवृत्तिहेतुरिति त्वयाऽपि स्वीकार्यम्।

तदेवं प्रवृत्तिनिवृत्त्योर्लिङाद्यर्थभूतेष्टानिष्टसाधनत्वे ज्ञाते हेतू रागद्वेषौ तु स्वरूपसन्तौ हेतू बालस्याद्यप्रवृत्ताविष्टसाधनताज्ञानं तु जीवनादृष्टबलेन जन्मान्तरीयसंस्कारादिति सर्वं सुस्थम्।

कृतिसाध्यत्वादिविशिष्टेष्टसाधनत्वस्य
विधित्वभङ्गः॥ ३५॥

## न्यायदीपः

एवं कृतिसाध्यत्वज्ञानस्य प्रवृत्तिहेतुत्वं सर्वग्रन्थाभिमतम्, लिङादिजन्यं तदित्येव नाभिमतमित्युपेत्य विरोधः परिहृतः। अधुना कृतिसाध्यनत्वज्ञानस्य साक्षात्प्रवृत्तिहेतुत्वं न क्वाप्यभिमतमित्युपेत्य विरोधं प्रकारान्तरेण निराह ॥ **यद्वेति** ॥

॥ **मानान्तरेति** ॥ प्रागुक्तानुमानरूपेणेत्यर्थः। ज्ञानन्त्वित्यस्योपक्षीणमित्यन्वयः ॥ **शब्दजन्यमिति** ॥ लिङादिशब्दजन्यमित्यर्थः ॥

अत्रारुचिबीजं तु – कृत्यसाध्यत्वज्ञानाभावापेक्षया कृतिसाध्यत्वज्ञानस्यैवोक्तदिशोपयोगकल्पनं लघु। किञ्च कृत्यसाध्यत्वज्ञानस्य प्रतिबन्धकत्वं कारणीभूतकिञ्चिद्विघटकत्वेनैवोपेयमिति कृतिसाध्यत्वज्ञानस्य वा कृतिसाध्यत्वप्रकारकफलेच्छाया वा विघटनेनेति वाच्यमिति पूर्वोक्तदिशा फलेच्छाद्वारा प्रवृत्त्युपयोग एव युक्तः। एवं सति निर्णयद्वयटीकास्थाप्रवृत्तिपदप्रयोगस्वारस्यं चेति ध्येयम्।

ननु – यदुक्तं प्राक्फलेच्छायां साधने चिकीर्षाकृती भवत इति, तदयुक्तम्। साधनचिकीर्षया व्यवहिता सती फलेच्छा कथं साधनगोचरकृतिं प्रतिहेतुः स्यादित्याशङ्कां परिहरन् टीकाद्यविरोधोक्तेरुपयोगं च विवक्षुः प्रवृत्तिहेतुं निष्कृष्य दर्शयति ॥ **तस्मादिति** ॥ मूलग्रन्थानामेकार्थतात्पर्यकत्वादित्यर्थः। हेतुरित्यनेनान्वयः। यद्वा कृतिसाध्यत्वज्ञानस्य साक्षात्प्रवृत्तिंहेतुत्वभावादित्यर्थः ॥

नन्विष्टसाधनताज्ञान एव प्रवृत्तिनिवृत्तिहेतू इत्ययुक्तम्। रागद्वेषयोरपि कामिनीसम्भोगसर्प-दंशनादौ प्रवृत्तिनिवृत्तिहेतुतोपलब्धेः। बालस्य स्तन्यपानादाविष्टसाधनताबोधकशब्दाभावाच्चेत्या-शङ्कां निवारयन्नेव भङ्गार्थमुपसंहरति ॥ **तदेवमिति** ॥ ज्ञातं सद्यत्प्रवृत्त्यादिकारणं तदिष्टसाधनत्वादिरूपमेवेत्युक्तौ दोषाभावादिति भावः।

कृतिसाध्यत्वविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गः ॥ ३५ ॥

* * *

## ३६. अथ कार्यताज्ञानस्य प्रवर्तकत्वभङ्गः।

### तर्कताण्डवम्

**प्राभाकरास्तु – ज्ञानेन पाकविषयककृतौ जनयितव्यायां द्वारभूतेच्छा पाकविशेष्यका कृतिसाध्यत्वप्रकारिकैव। पाकं कुर्यामित्यनुभवात्। न तु केवलकृतिविषयकेच्छा। तस्या भिन्नविषयत्वेन पाकविषयककृतिं प्रत्यहेतुत्वात्। जानातीच्छति करोतीति त्रयाणामेकविषयत्वानुभवाच्च। सा चेच्छा स्वसमानप्रकारकज्ञानसाध्येति कार्यत्वप्रकारकमेव ज्ञानं प्रवर्तकम्। न त्विष्टसाधनत्वज्ञानम्। नित्ये सन्ध्योपासनादौ फलाभावात्। फलवत्त्वे नित्यत्वव्याघातादित्याहुः॥**

### न्यायदीपः

ज्ञात्वैव हीष्टसाधनतामित्यत्र एवकारस्य भिन्नक्रमेण कार्यत्वज्ञानं प्रवर्तकं नेति यद्ग्रन्थकाराभिमतं तत्प्रपञ्चयितुमाह॥ **प्राभाकरास्त्विति**॥ कार्यत्वप्रकारकमेव ज्ञानं प्रवर्तकं न त्विष्टसाधनत्वज्ञानमित्याहुरित्यन्वयः। तत्र युक्तिमाह॥ **ज्ञानेनेति**॥ रागादिना जायमानकृताविच्छाद्वारत्वाभावात् ज्ञानेनेत्युक्तम्।

ननु – द्वारभूतेच्छायाः कृतिसाध्यत्वप्रकारकत्वं पाकविशेष्यकत्वयुक्तम्। ज्ञानेन कृतौ जनयितव्यायां चिकीर्षा हि द्वारम्। तस्याश्च कृतिविषयकत्वमेव। "धातोः कर्मणः समानकर्तृकादिच्छायां वे"ति धात्वर्थगोचरेच्छायामेव सनो विधानादित्यत आह॥ **पाकमिति**॥ इच्छेत्यनन्तरं द्वारभूतेत्यनुकर्षः। येन कृताविष्टसाधनताज्ञानदेवेच्छेति इष्टसाधनत्वज्ञानं प्रवर्तकं स्यादिति भावः।

अस्तु द्वारभूतेच्छा कृतिसाध्यत्वप्रकारिका। कृतिसाध्यत्वरूपकार्यत्वज्ञानं प्रवर्तकमित्यत्र किमायातमित्यत आह॥ **सा चेति**॥ न त्वित्युक्तार्थे हेतुमाह॥ **नित्य इति**॥ **फलाभावादिति**॥

तथा च न तत्रेष्टसाधनत्वज्ञानं सम्भवतीति कस्यापि प्रवृत्तिर्न स्यादिति भावः।

विश्वजिन्न्यायेन तत्रापि फलकल्पनाऽस्त्वित्यत आह ॥ **सफलत्व इति** ॥ ''अहरहः सन्ध्यामुपासीते''ति वीप्सया ''वसन्तेवसन्ते ज्योतिषा यजेते''त्यादाविव नित्यत्वस्य व्यवस्थितत्वादिति भावः॥

## तर्कताण्डवम्

**तन्न। कार्यत्वं हि न तावत्कृतिसाध्यत्वमात्रम्। तस्य स्वकृत्यसाध्येपि सत्त्वेन तत्रापि प्रवृत्त्यापातात्।**

**नापि स्वनिष्ठकृतिसाध्यत्वं कार्यत्वम्। जीवनादृष्टजन्यस्वकृतिसाध्ये प्राणपञ्चकसञ्चारेपि सत्त्वात्।**

**नापीच्छाधीनस्वनिष्ठकृतिसाध्यत्वं कार्यत्वम्, प्राणपञ्चकसञ्चारे कृतिर्नेच्छाधीनेति वाच्यम्। फलरूपे सुखे दुःखाभावे च प्रवृत्तिप्रसङ्गात्। तयोरपि परम्परया कृतिसाध्यत्वात्। साक्षात्कृतिसाध्यत्वस्य च शरीरचेष्टादिद्वारा कृतिसाध्ये लौकिके पाकादौ वैदिके यागादौ यागादिद्वारा कृतिसाध्ये नियोगे चाभावात्।**

**नापि – चिकीर्षाधीनस्वनिष्ठकृतिसाध्यत्वं कार्यत्वम्, सुखादौ चेच्छामात्रम् उद्देश्यत्वात्, न तु चिकीर्षेति वाच्यम्। सुखादावपि कृत्या सुखं साधयिष्यामीतीच्छाया अनुभवात्। तदतिरिक्तायाश्च चिकीर्षाया यागादावप्यभावात्। किं चैवं भोजनचिकीर्षाधीनकृतिजन्ये श्रमेऽपि प्रवृत्तिः स्यात्॥**

## न्यायदीपः

"कार्यता च न काचित् स्यादिष्टसाधनतां विना"

इत्यनुव्याख्यानोक्तदिशा इष्टसाधनत्वमेव कार्यत्वं न ततोन्यदस्तीति विवक्षुः, किमिदं कार्यत्वं कृतिसाध्यत्वं वा, स्वकृतिसाध्यत्वं वा, इच्छाधीनस्वकृतिसाध्यत्वं वा, चिकीर्षाधीनकृतिसाध्यत्वं वा, चिकीर्षाधीनकृतित्वेन स्वकृतिसाध्यत्वं वा, स्वविषयचिकीर्षाधीनकृतिसाध्यत्वं वा, इदानीन्तनस्वविषयकेच्छाधीनकृतिसाध्यत्वं, वा, कृतिसाध्यतार्हत्वं वा, इष्टानुत्पत्तिप्रसञ्जनीभूताभावप्रतियोगिभूतकृतिविषयताप्रयोजकरूपवत्त्वं वा, कृतिसाध्यत्वे सति कृत्युद्देश्यत्वं वा, कृतिसाध्यत्वे सति प्राधान्यं वा, इष्टसाधनत्वलिङ्गगम्यचिकीर्षाधीनकृतिसाध्यत्वरूपं वा, शुचित्वे सति विहितकालजीवित्वरूपलिङ्गगम्य चिकीर्षाधीनकृतिसाध्यत्वरूपं वा क्रियानुष्ठानप्रयुक्तेष्टानुत्पत्तिप्रसञ्जकविशेषणवत्त्वप्रतिसन्धानगम्यं तदेववेति पञ्चदशधा विकल्प्याद्यं निराह ।। **कार्यत्वं हीत्यादिना** ।।

द्वितीयं निराह ।। **नापि स्वनिष्ठेति** ।। अत्राप्यन्वयव्यभिचारान्नैतद्रूपं कार्यत्वज्ञानं प्रवृत्तिकारणमित्याह ।। **जीवनेति** ।। जीवनकारणं यद दृष्टं तज्जन्या या स्वकृतिः तत्साध्येत्यर्थः। एतच्च पररीत्योक्तम्। स्वमते तु प्राणापानव्यानोदानसमानरूपप्राणशब्दितपञ्चवायूनां सञ्चारस्य जीवस्य निष्प्रयत्नतादृशरूपसुप्त्यादावपि दर्शनेन मुख्यप्राणकर्तृकत्वस्य द्वितीयेऽध्याये प्राणपादे स्थितत्वात्।

तृतीयं निराह ।। **नापीच्छेति** ।। **कृतिर्नेच्छाधीनेति** ।। अत एव मणावपि विधिवादपूर्वपक्षे– "कृतौ चानुभवसिद्धं चिकीर्षाधीनत्वं विशेषः। तेन प्राणपञ्चकसञ्चारे जीवनयोनिकृतिसाध्ये न प्रवृत्तिरित्युक्त"मिति भावः। अत्रापि किं परम्परया साक्षाद्वा कृतिसाध्यत्वम्। आद्य आह ।। **फलेति** ।। **परम्परयेति** ।। विषयानुभवद्वारेत्यर्थः ।। **कृतीति** ।। इच्छाधीनकृतीत्यर्थः। एवमग्रेपि।

अन्त्य आह ।। **साक्षादिति** ।। **यागादीति** ।। यागदानहोमद्वारा कृतिसाध्येऽपूर्व इत्यर्थः। तथा च व्यतिरेकव्यभिचारादेवंरूपकार्यत्वज्ञानमपि न प्रवर्तकमिति भावः।

चतुर्थं निराह ।। **नापि चिकीर्षेति** ।। का नाम चिकीर्षा। किं कृतिसाध्यत्वप्रकारिकाथ ततोऽन्या। आद्य आह ।। **सुखादावपीति** ।। अन्त्य आह ।। **तदतिरिक्ताया इति** ।। सुखादिफल-गोचरचिकीर्षा

नेत्येतदभ्युपेत्यापि दोषान्तरमाह ॥ **किं चैवमिति** ॥ चिकीर्षाधीनस्वकृतिसाध्यत्वं कार्यत्वं चेदित्यर्थः ॥ **भोजनेति** ॥ भोजनविषयिणी चिकीर्षाधीना या कृतिः तत्साध्येत्यर्थः ।

## तर्कताण्डवम्

**ननु– श्रमः शरीरावयवस्पन्दरूपभोजनक्रियासाध्यो न तु कृतिसाध्यः। कृतेः स्वध्वंससाक्षात्कारातिरिक्ते स्वजनकचिकीर्षाविषय एव जनकत्वनियमात्। अत एव श्रमो नान्तरीयक इत्युच्यत इति चेन्न। निगडनिश्चलदेहस्य आमवातादिशिथिलीकृतदेहस्य च चलनादिक्रियानुत्पादेऽपि श्रमानुभवेन कृतेरेव तत्र हेतुत्वात्। नच क्रियानुत्पादे कृतौ मानाभावः। अहं प्रयत इत्यनुभवात्॥**

**नापि – चिकीर्षाधीनकृतित्वेन कृतिसाध्यत्वं कार्यत्वं, श्रमस्तु नैवं, द्वेषयोनियत्नादपि श्रमोत्पत्तेरिति वाच्यम्। द्वेषयोनियत्नो हि किं निवृत्तिलक्षणोभिमतः किं वा शत्रुवधादिगोचरः प्रवृत्तिलक्षणः। नाद्यः। तेन श्रमाननुभवात्। नान्त्यः। शत्रुवधस्येष्टसाधनत्वेन चिकीर्षाधीनकृतिसाध्यत्वात्। न हि शत्रुवधः शत्रुगोचरद्वेषजन्यकृतिसाध्यो भिन्नविषयत्वात्। द्वेषसिद्धिस्तु शत्रुं द्वेष्मीत्यनुभवात्।**

## न्यायदीपः

श्रमस्तु भोजनक्रियासाध्यो न तु कृतिसाध्य इत्यादिना मणौ विधिवादपूर्वपक्षोक्तमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ **शरीरावयवेति** ॥ तनुहस्ताद्यवयवपरिस्पन्दरूपेत्यर्थः ॥ **स्वजनकेति** ॥ कृतिजनिका या चिकीर्षा तद्विषयमात्रजनकत्वनियमादित्यर्थः ॥

यद्यपि – कृतिपूर्ववर्तिगुणान्तरध्वंसे स्वजनकचिकीर्षाप्रत्यविषयेऽपि जनकत्वं कृतेरस्तीति नायं नियमोस्ति। न च कृतित्वेन कृतेर्जनकत्वं वक्ष्यमाणमभिप्रेत्यायं नियम इति वाच्यम्। अदृष्टादिकं प्रति कृतित्वेनैव जनकत्वेन व्यभिचारानिस्तारात्। तथाप्यभ्युपेत्यान्यत्रव्यभिचारमाह ।। **निगळेति ।। प्रयत इतीति ।।** यती प्रयत्न उत्तमपुरुषैकवचनम्।

पञ्चमं निराह ।। **नापीति ।।** चिकीर्षाधीना या कृतिः तत्त्वेन यत्र जनकत्वं तत्त्वं कार्यत्वमित्यर्थः ।। **द्वेषयोनीति ।।** द्वेषजन्येत्यर्थः ।। **चिकीर्षाधीनकृतिसाध्यत्वादिति ।।** तादृशकृतित्वेन कृतिसाध्यत्वादित्यर्थः। तत्र हेतुरिष्टसाधनत्वेनेति। तद्व्यनक्ति ।। **न हीति ।।**

ननु शत्रुवधानुकूलप्रयत्नस्य द्वेषजन्यत्वे शत्रुगोचरद्वेषो न सिद्ध्येत्। प्रयत्नरूपकार्य-लिङ्गकत्वात् तत्सिद्धेरित्यत आह ।। **द्वेषसिद्धिस्त्विति ।।**

## तर्कताण्डवम्

**नापि – स्वविषयकचिकीर्षाधीनकृतिसाध्यत्वं कार्यत्वं, श्रमस्तु भोजनविषयकेच्छाधीनकृतिसाध्य इति वाच्यम्। कलञ्जभक्षणादावपि स्वविषयकचिकीर्षाधीनकृतिसाध्य-त्वस्य सत्त्वेन "न कलञ्जं भक्षयेदि" इति निषेधायोगात्। बौद्धाद्यागमविहिते मण्डलीकरणादावपि तस्य सत्त्वेन तदा-गमस्यार्थाबाधलक्षणप्रामाण्यप्रसङ्गाच्च। विषभक्षणेऽपि तस्य सत्त्वेन सञ्जातबाधस्यापि तत्र प्रवृत्तिप्रसङ्गाच्च। अस्ति हि विषभक्षणेपि स्वविषयचिकीर्षाधीनकृतिसाध्यत्वम्। श्रमाज्जीवनयोनिकृतिसाध्याच्चान्यस्य सर्वस्य कृतिसाध्यस्य स्वविषयकेच्छाधीनकृतिसाध्यत्वनियमात्।**

## न्यायदीपः

षष्ठं निराह ।। **नापीति ।। स्वेति ।।** यस्य कार्यत्वमुच्यते तद्यागादिकं परामृश्यते। तत्तद्विषयिणी

या चिकीर्षा तदधीना या कृतिस्तत्साध्यत्वं कार्यमित्यर्थः ।। **भोजनविषयकेत्यादि** ।। न तु श्रमविषयचिकीर्षाधीनकृतिसाध्यः येनान्वयव्यभिचारः स्यादिति वाक्यशेषः।

।। **निषेधायोगादिति** ।। तत्रापि त्वदुक्तकार्यत्वस्य यागादाविव सत्त्वेनेत्यर्थः। प्रवर्तकत्वरूपं प्रामाण्यमस्त्येवेत्यत आह ।। **अर्थाबाधेति** ।।

तस्य सत्त्वेनेत्युक्तं व्यनक्ति ।। **अस्ति हीति** ।। तदेव कथमित्यत आह ।। **श्रमाज्जीवनयोनिकृतिसाध्याच्चेति** ।। प्राणपञ्चकसञ्चारादिति योज्यम्। एते चातिप्रसङ्गाः पूर्वोक्तपक्षेष्वपि ध्योयाः ।। **कृतिसाध्यस्येति** ।। कृतित्वेन कृतिसाध्यस्येत्यर्थः। तेन कृतिध्वंसकृतिसाक्षात्कारयोर्न व्यभिचार इति ध्येयम्।

## तर्कताण्डवम्

**नन्विदानीन्तनी या स्वविषयकेच्छा तदधीनकृतिसाध्यत्वं कार्यत्वम्। अन्यथा सामुद्रिकविदाख्याते भावियौवराज्येऽपि प्रवृत्तिः स्यात्। सञ्जातबाधस्य तु नेदानीं विषभक्षणेच्छेति चेत्। इच्छा का विवक्षिता। या साधेन नास्ति। किमुपायोऽस्त्वितीच्छामात्रं, उपायं कृत्या साधयिष्यामीति चिकीर्षा वा।**

**नाद्यः। अन्यत एवोपायोस्त्वितीच्छायां सत्यामप्यप्रवृत्तेः। नान्त्यः। त्वदभिमतकार्यत्वज्ञानेन प्रवृत्तौ जनयितव्यायां द्वारीभूतायाः कार्यत्वज्ञानजन्यायाः पाकादिसाधनविषयचिकीर्षायाः कार्यत्वज्ञानहेतुत्वेऽन्योन्याश्रयत्वात्। किं च भाविराज्ये आपादिता प्रवृत्तिस्तदुद्देश्यका चेदिष्टापत्तिः। तदुद्देशेन तत् साधने देवताराधनादौ प्रवृत्तेः। भाविराज्यविषयिका कृतिस्तु न सम्भवति। कृतेः सिद्ध-**

**विषयत्वे सत्यसिद्धफलकत्वनियमात्।**

## न्यायदीपः

सप्तममाशङ्कते ॥ **नन्विति** ॥ इदानीन्तनेत्युक्तविशेषणमावश्यकमित्याह ॥ **अन्यथेति** ॥ सामुद्रिकं नाम शरीरावयवगतलक्षणाधिक्यम्। इदानीन्तनेत्युक्त्यैव प्रागुक्तदोषो नेत्याह ॥ **सञ्जातेति** ॥ इदानीन्तनस्वविषयकेच्छाधीनत्वविशेषणमेव कृतावयुक्तम्। येन विषभक्षणादौ प्रवृत्त्यापत्तिदोषो न स्यादिति भावेन इच्छां विकल्प्य निराह ॥ **इच्छेति** ॥ **साधन इति** ॥ तात्कालिकतृप्तिं प्रति वा कालान्तरभाव्यनर्थफलं प्रति वा साधनरूपे विषभक्षणादावित्यर्थः। नास्तीत्युपलक्षणम्। यागादिरूपे साधनेऽस्तीत्यपि ध्येयम् ॥ **इच्छामात्रमिति** ॥ न तु कृतिसाध्यत्वप्रकारकचिकीर्षारूपेत्यर्थः।

एवंरूपेच्छाधीनकृतिसाध्यत्वज्ञानमन्वयव्यभिचारान्न प्रवृत्तिहेतुरित्याह ॥ **अन्यत एवेति** ॥ मत्कृतितोऽन्यस्मादेवेत्यर्थः। उपायो धनधान्यादेः। अप्रवृत्तेः धनादेरुपाय इत्यर्थः ॥ **त्वदभिमतेति** ॥ इदानीन्तनस्वविषयचिकीर्षाधीनकृतिसाध्यत्वरूपकार्यत्वज्ञानेनेत्यर्थः ॥ **अन्योन्येति** ॥ चिकीर्षा-कार्यत्वज्ञानजन्या कार्यत्वज्ञानं च चिकीर्षाजन्यमित्यन्योन्याश्रयादित्यर्थः। न च चिकीर्षा कार्यत्वज्ञान-जन्येति युक्तम्। प्रवृत्त्युत्पादने तस्याः द्वारभूतत्वात्। न च कार्यत्वज्ञानं न चिकीर्षाजन्यमित्यपि युक्तम्। चिकीर्षाऽभावे तदधीनकृतिसाध्यत्वाभावेन तज्ज्ञानायोगादिति भावः। अन्यथेत्यादिनोक्तं निराह ॥ **किञ्चेति** ॥ किं तदुद्देशेन तत्साधने कृतिरूपप्रवृत्तिरापाद्यतेऽथ तद्विषयैव वा। आद्यमनूद्य निराह ॥ **तदुद्देश्यको चेदिति** ॥

इष्टापत्तिं व्यनक्ति ॥ **तदिति** ॥ अन्त्य आह ॥ **भावीति** ॥ **सिद्धेति** ॥ यद्यपि देवताराधनादिकमपि न सिद्धम्। तथाऽपि कृतिः साधनविषयैव न तु फलविषयेत्यत्र तात्पर्यम्।

## तर्कताण्डवम्

**नापि – कृतिसाध्यतार्हत्वं कार्यत्वं, प्रवृत्त्यविषयाद्विष-भक्षणादितः साक्षादिष्टात्सुखादितश्च व्यावृत्तस्य सुखाद्यर्थमिष्टेषु प्रवृत्तिविषयेषु लौकिकवैदिकभोजन-**

**याागादिष्वनु-वृत्तस्य चेष्टसाधनत्वादन्यस्यार्हत्वस्य अभावात्॥**

**यद्यपीष्टसाधने साक्षात्पम्परासाधारणमिष्टत्वसामान्य-मस्ति। तथाऽपि फलार्थिनः साधने प्रवृत्तिर्न फलसाधनत्व-ज्ञानं विना युक्ता॥**

## न्यायदीपः

अष्टमं निराह॥ **नापीति**॥ इष्टसाधनत्वादन्यस्यार्हत्वस्याभावादित्यत्र व्यावृत्तस्यानुवृत्तस्येति द्वयमपि हेतुगर्भं विशेषणम्। अनिष्टसाधनादिष्टाच्च व्यावृत्तस्येष्टसाधनमात्रेऽनुगतस्येष्टसाधनत्व-रूपत्वादित्यर्थः॥

ननु कृतिसाध्यतार्हत्वस्य फले सुखादावपि कथं चित्सत्त्वेन तत्साधारणमिष्टत्वमेव कृतिसाध्यतार्हत्वमस्तु। इष्टसाधनेषु सर्वत्रेष्टत्वस्याप्यनुगतत्वात्किमिष्टसाधनत्वग्रहणेनेत्याशङ्कामनूद्य निराह॥ **यद्यपीति**॥

## तर्कताण्डवम्

**ननु यदकरण इष्टानुत्पत्तिप्रसङ्गस्तत्त्वमर्हत्वमिति चेन्न। एवंहीष्टानुत्पत्तिप्रसञ्जकीभूताभावस्य प्रतियोगिभूता या कृतिस्तद्विषयताप्रयोजकरूपवत्त्वमर्हत्वमित्युक्तं भवति। तच्च रूपं नेष्ट साधनसाधारणम्। इष्टासाधनाकरणे इष्टानुत्पत्ते-रप्रसङ्गात्। इष्टसाधनासाधारणमपि न भोजनत्वयागत्वादि-रूपम्। अननुगमात्। किं तु भोजनाद्यनुगतमिष्टसाधनत्वमेव इष्टसाधनाकरणस्यैव कारणाभावत्वेनेष्टानुत्पत्तिप्रसञ्जक-त्वात्। तथा च त्वदुक्तं कार्यत्वमिष्टसाधनत्वमेव ज्ञातमिति घट्टकुट्यां प्रभातम्॥**

### न्यायदीपः

नवममाशङ्कते ॥ **नन्विति** ॥ शङ्काभिप्रायं विवृण्वन्नेवनिराह ॥ **एवं हीति** ॥ **नेष्टा साधन-साधारणमिति** ॥ कळञ्जभक्षणादिरूपं यदनिष्टसाधनं यच्चेष्टानिष्टसाधनतोदासीनं तद्व्यावृत्त-मित्यर्थः।

तदेव व्यनक्ति ॥ **इष्टेति** ॥ इष्टसाधनत्वे प्रागुक्तप्रयोजकरूपत्वं व्यनक्ति ॥ **इष्टसाधना-करणस्यैवेति** ॥ **घट्टकुट्यां प्रभातमिति** ॥ यत्र पान्थैः शुल्कं दत्वा गन्तव्यं सा घट्टकुटी। घट्टस्थगृह-विशेषः। घट्टकुट्यां स्थितपुरुषान् वञ्चयित्वा बहिर्गन्तुं रात्रावेवोत्थितस्य मार्गाज्ञानेनेतस्ततः सञ्चरतो घट्टकुट्यामुदयो यथा तथा जातं त्वदीयकार्यत्वनिरूपणमित्यर्थः ॥

### तर्कताण्डवम्

**एतेन – कृत्युद्देश्यत्वे सति कृतिसाध्यत्वं कार्यत्वम्। एवं च विषभक्षणे सुखादौ च न प्रवृत्तिप्रसङ्ग इति निरस्तम्। प्रवृत्तिविषययागादिक्रियायामपीष्टसाधनत्वातिरिक्तस्योद्देश्यत्वस्य अभावात् ॥**

**एतेनैव–**

**"कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते" ॥**

**इति निरस्तम्। इष्टसाधनत्वातिरिक्तस्य क्रियानिष्ठस्य प्राधान्यस्याभावात् ॥**

### न्यायदीपः

दशमं पक्षं निराह ॥ **एतेनेति** ॥ कार्यत्वेष्टसाधनत्वयोरेकत्वकथनेनेत्यर्थः। ननु – कथमेकत्वं कृतिसाध्यत्वस्याधिकस्य प्रवेशादित्यतः प्रागेव कृतिसाध्यत्वज्ञानस्य प्रवृत्तिहेतुतायाः खण्डनेन कृत्युद्देश्यत्वमात्रस्यैव त्वया कार्यत्वेन वक्तव्यत्वादिति भावेनैतेनेत्युक्तं व्यनक्ति ॥ **इष्टसाधनत्वेति** ॥ मुख्योद्देश्यत्वस्य सुखादौ सत्त्वेऽपि यागादिसाधननिष्ठोद्देश्यत्वस्यामुख्यस्यैव तेनापि वाच्यत्वात्।

इष्टसाधनत्वातिरिक्तस्योद्देश्यत्वस्याभावादित्युक्तम्। अमुख्योद्देश्यत्वं त्विष्टसाधनत्वमेवेति सुधोक्तेरिति भावः॥

एकादशं निराह॥ **एतेनैवेति**॥ तदेव व्यनक्ति॥ **इष्टेति**॥

## तर्कताण्डवम्

**ननु – चिकीर्षाधीनकृतिसाध्यत्वमेव कार्यत्वम्। न चैवं विषभक्षणेऽपि प्रवृत्तिप्रसङ्गः। इष्टसाधनत्वरूपलिङ्ग-जन्यस्यैव तज्ज्ञानस्य प्रवर्तकत्वात्। उक्तं हि–**

> **"किं तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत्।**
> **फलसाधनता तत्र कारणं तेन कार्यता"॥**

**इति चेन्न। तद्धेतोरेवेतिन्यायेनावश्यकादिष्टसाधनत्व-ज्ञानादेव प्रवृत्त्युपपत्तेः। तथात्वेऽतीतेपीष्टसाधने प्रवृत्त्या-पत्तिरिति चेदतीते कृतिसाध्येऽपि प्रवर्तेत। न ह्यतीतं न कृतिसाध्यम्। तथात्वे कथं कृतितो जातम्। इदानीं न कृति-साध्यमिति चेदिदानीमिष्टसाधनमपि नेति समम्। इष्ट-साधनेपि कृत्यसाध्ये वर्तमाने चन्द्रमण्डलादौ भविष्यति वृष्ट्यादौ चाप्रवृत्तिस्त्वावशक्याः कृत्या फलं साधयिष्या-मीतीच्छाया अभावादित्युक्तम्। अत एवाराल्लब्धजलः कृतिसाध्येपि दूरस्थजलपाने न प्रवर्तते॥**

## न्यायदीपः

सुधोक्तं विवृण्वन् द्वादशं पक्षमाशङ्कते॥ **नन्विति**॥ कार्यत्वस्यातिप्रसङ्गेऽपि प्रवर्तकत्वेन अभिमतं तज्ज्ञानं नातिप्रसक्तमित्याह॥ **इष्टसाधनत्वरूपेति**॥ प्राभाकरसम्मतिश्लोकं सुधोदाहृत-

मेवाह ॥ **उक्तं हीति** ॥

"फलसाधनता नाम या सा नैव हि कार्यता।
कार्यता कृतिसाध्यत्वं फलसाधनता पुनः।
कारणत्वं फलोत्पादे ते भिद्येते परस्परम्"।

इति पूर्वत्र कार्यतेष्टसाधनत्वयोर्भेदे प्रतिपादिते तर्हि सर्वथेष्टसाधनताया अनुपयोगः किमिति भावेन किन्त्विति प्रश्ने यद्यागादिरूपं कर्म चिकीर्षाधीनकृतिसाध्यत्वरूपां कार्यतां व्रजेत् तत्कर्म स्वयं क्लेशरूपं कायक्लेशकरम् तत्र कर्मण उक्तरूपकार्यत्वे तेन फलसाधनत्वरूपकारणेनेत्यर्थः। तथाचेष्टसाधनताज्ञानात्कार्यत्वज्ञानमित्यर्थः ॥ **इति न्यायेनेति** ॥ तद्धेतोरेवास्तु हेतुत्वं किं तेनेति न्यायेनेत्यर्थः।

सुधोक्ते एवातिप्रसङ्गचोद्यतद्दुषणे आह ॥ **तथात्व इत्यादिना** ॥ **सममित्यन्तेन** ॥ तत्त्वनिर्णयटीकाशङ्कितातिप्रसङ्गान्तरमपि पूर्वोक्तदिशा निराह ॥ **इष्टसाधनेपीत्यादिना** ॥ **इत्युक्तमिति** ॥ कृतिसाध्यत्वविशेषणविशिष्टत्वभङ्गे उक्तमित्यर्थः। कृतिसाध्येष्टसाधनतायाः कार्यतापरपर्यायताङ्गीकारादिति टीकाकारीयसमाधानस्य तात्पर्यं पूर्वभङ्ग एवोक्तमिति भावः ॥ **अत एवेति** ॥ उक्तरूपेच्छाया अभावादेवेत्यर्थः ॥

## तर्कताण्डवम्

**किं च यादृशमतीतादिव्यावृत्तमिष्टसाधनत्वं तव कार्यत्वे लिङ्गं तज्ज्ञानस्यैव मन्मते प्रवर्तकत्वात् क्वातिप्रसङ्गः।**

**किं चैतल्लिङ्गजन्यज्ञानस्याप्रवर्तकात्कृतिसाध्यत्वज्ञानादधिको विषयो नास्ति चेत्कथं प्रवर्तकता। अस्ति चेत्स एव वक्तव्यः। किमनेन॥**

**तस्मात्प्रवर्तकस्य कृतिसाध्यत्वज्ञानस्यष्टेसाधनत्वज्ञानं सहकारीत्येव वक्तव्यमितीष्टसाधनत्वज्ञाने आवश्यके किं**

**कृतिसाध्यत्वज्ञानेन।।**

**किं च प्रवर्तककार्यत्वज्ञानं लैङ्गिकं चेद्वेदस्य कार्यपरत्वमिति मतहानिः।।**

**किं च प्रथममिष्टसाधनताज्ञानं ततस्तत्रेच्छा ततः प्रयत्नः ततः परिस्पन्द इत्यात्मन्येवैकार्थविषयास्त्रयो धर्मा जायन्ते। न त्वर्थे कश्चिदतिशयोऽनुभूयते। योभिमत-साधनतया अनुमीयते।।**

**किं चेष्टसाधनतालिङ्गककार्यताज्ञानस्य प्रवर्तकत्वे त्वन्मते नित्ये सन्ध्योपासनादौ प्रवृत्तिर्न स्यात्। तस्येष्टा-साधनत्वात्।**

## न्यायदीपः

।। **यादृशमिति** ।। नन्विदानीन्तनकृतिसाध्यत्वविशिष्टेष्टसाधनत्वमतीतादिव्यावृत्तं लिङ्गं लैङ्गिकं तु चिकीर्षाधीनकृतिसाध्यत्वमित्यतो दोषान्तरमाह ।। **किं चैतदिति** ।। **किमनेनेति** ।। लैङ्गिकज्ञानकथनेनेत्यर्थः ।। **तस्मादिति** ।। कार्यत्वज्ञानस्य लैङ्गिकत्वोक्तेर्व्यर्थत्वादित्यर्थः ।। **किं कृतिसाध्यत्वेति** ।। कृत्यसाध्यादावतिप्रसङ्गस्तु परिहृत एवेति भावः।

।। **मतहानिरिति** ।। ननु – लोके कार्यत्वज्ञानं प्रवर्तकं न तु लैङ्गिकम्। वेदे तु कार्यापरपर्याया-पूर्वज्ञानमेव। तच्च वेदजन्यमित्युपगमान्न दोष इति चेत्तर्ह्यनुगतैकप्रवर्तकाभावो दोषः। लोकेऽपि न किञ्चिदप्रत्यक्षं वस्तु प्रवृत्तिपूर्ववर्ति वर्तते यल्लैङ्गिकं स्यादिति भावेन सुधोक्तमेवाह ।। **किं च प्रथममिति** ।। **तत्रेति** ।। इष्टसाधने वस्तुनि

।। **अभिमतसाधनतयेति** ।। इष्टसाधनतयेत्यर्थः। विधिवादपूर्वपक्ष मण्युक्तं च दोषं निराह ।। **किं चेष्टेति** ।। **प्रवृत्तिर्न स्यादिति** ।। तत्र कार्यताज्ञानोपायाभावादिति भावः।

कुत इत्यत आह ॥ **तस्येति** ॥ नित्यकर्मणो निष्फलत्वस्य त्वयोपगमादिति भावः ।

## तर्कताण्डवम्

**ननु – शुचित्वे सति विहितकालजीवित्वरूपलिङ्गा-न्तरजन्यं कार्यताज्ञानं तत्र प्रवर्तकम् । सम्भवति हि अहमिदानीं कृतिसाध्यसन्ध्यावन्दनः सन्ध्यासमये शौचादिमत्त्वात् सन्ध्यान्तरेऽहमिवेत्यनुमितिरिति चेन्न । काम्ये नित्ये चानुगतस्य विषभक्षणादिव्यावृत्तस्यैकस्य कार्यताज्ञानस्य अभावात् ॥**

## न्यायदीपः

त्रयोदशं पक्षं शङ्कते ॥ **नन्विति** ॥ **तत्रेति** ॥ नित्यकर्मणीत्यर्थः । मण्युक्तमेव प्रयोगमाह ॥ **अहमिति** ॥ **विषभक्षणादिव्यावृत्तस्येति** ॥ अहं कृतिसाध्यविषभक्षणः जीवित्वादिति लिङ्गजन्यस्य चिकीर्षाधीनकृतिसाध्यत्वरूपकार्यत्वज्ञानस्य सम्भवादिति भावः ।

॥ **एकस्येति** ॥ काम्ये काम्यसाधनताज्ञानजन्यं कार्यताज्ञानं नित्ये शुचित्वे सति विहितकालजीवित्वप्रतिसन्धानजन्यं कार्यताज्ञानमिति कार्यताज्ञानस्य नानात्वादिति भावः ।

## तर्कताण्डवम्

**न च स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वं कार्यताज्ञानस्य अनुगमकमिति वाच्यम् । सञ्जातबाधेतिप्रसङ्गतादवस्थ्यात् ।**

**सम्भवति हि तत्रापि अहं कृतिसाध्यविषभक्षणो जीवित्वादिति स्वविशेषणवत्ताप्रतिसन्धानजन्यं कार्यताज्ञानम् ।**

न च विशेषणपदेनाधिकाररूपं विशेषणं विवक्षितमिति नातिप्रसङ्ग इति वाच्यम्। अस्य वैदिके काम्ये नित्ये च सत्त्वेऽपि पामरसाधारणे भोजनादावसञ्जातबाधदशायां विषभक्षणे चासत्त्वेन तत्राप्यप्रवृत्त्यापातात्। तस्याविहितत्वेन अधिकाररूपविशेषणाभावात्॥

न च सञ्जातबाधे सामान्यसामग्र्याः सत्त्वेपि नित्यकाम्यस्थळीयविशेषसामग्रीद्वयविरहान्नातिप्रसङ्ग इति वाच्यम्। सामान्यसामग्र्याः सत्त्वे तस्याः तृतीयविशेषमादायापि विश्रान्तेः। अन्यथा कृतिसाध्यत्वज्ञानमेव प्रवर्तकं स्यात्। अतिप्रसङ्गस्य विशेषसामग्र्यभावादेव वारणात्।

न चोक्तविशेषसाग्रीद्वयान्यतरत्वमनुगमकम्। तस्यापि आद्यस्तन्यपानादिप्रवृत्तावभावात्। न हि तत्रेष्टसाधनत्वमपि त्वन्मते स्मर्यते।

नापि जीवनादिप्रतिसन्धानं तत्र कारणम्। नित्यत्वाभावात्।

## न्यायदीपः

मण्युक्तदिशाऽनुगतिं कुर्वन् चतुर्दशकल्पमाशङ्कते ॥ **न च स्वविशेषणवत्तेति** ॥ स्वस्य प्रवर्तमानपुरुषस्य यद्विशेषणं क्वचित् कामना क्वचिच्छुचित्वे सति जीवित्वमित्यादि तद्वता तद्वर्तमानता तत्प्रतिसन्धानजन्यत्वमित्यर्थः।

अतिप्रसङ्गतादवस्थ्यं व्यनक्ति ॥ **सम्भवति हीति** ॥ पक्षधराद्युक्तमाशङ्क्य निराह ॥ **न चेति** ॥ अधिकारः क्वचित्कामनावत्त्वम्। क्वचिच्छुचित्वादिकम्। न च विषभक्षणे तादृशाधिकारोस्ति। तस्य

लौकिकत्वादिति भावः ॥ **तस्येति** ॥ भोजनादेः ॥

ननु – चिकीर्षाधीनकृतिसाध्यत्वरूपकार्यत्वज्ञानमेव प्रवृत्तिसामान्यसामग्री। पामरसाधारण-भोजनादावसञ्जातबाधदशाऽऽपन्नविषभक्षणादौ च सास्त्येवेति न व्यतिरेकव्यभिचारः। न च सञ्जातबाधेऽपि विषभक्षणे प्रवृत्त्यापत्तिः। नित्ये शुचित्वादिविशेषणत्वप्रतिसन्धानं काम्ये च काम्यसाधनत्वप्रतिसन्धानं च प्रवृत्तौ विशेषसामग्री। सा च भोजनादावसञ्जातबाधदशापन्न-विषभक्षणादौ चास्ति सञ्जातबाधे च नास्ति। अतो न कोपि दोष इति चोद्यं निराह ॥ **न च सञ्जातेति** ॥

स्यादेवं यदीयं सामान्यसामग्रीति निर्णीता स्यात्। न चैवम्। तथात्वे। नित्यस्थले प्रवृत्त्यर्थं शुचित्वे सति जीवित्वादिस्वविशेषणप्रतिसाधनं विशेषसामग्रीति यथा कल्प्यते, यथा वा काम्यस्थळे च नित्यस्थळीयविशेषसामग्र्यभावेऽपि प्रवृत्यर्थं नित्येऽविद्यमानकामसाधनत्वप्रतिसन्धानरूपाऽन्यैव विशेषसामग्रीति कल्प्यते, तथा सञ्जातबाधे विषभक्षणादावपि नित्यकाम्यस्थळीयविशेषसामग्र्यो-रभावेऽपि तत्र प्रवृत्त्यर्थं नित्यकाम्ययोरविद्यमाना काचिदन्याऽपि विशेषसामग्री कल्प्या स्यात्। अन्यथा सामान्यसामग्र्यास्तत्रापर्यवसानात्। अतस्तत्र सामान्यसामग्री सत्त्वे सा कां चिद्विशेषसामग्रीमादायैव पर्यवस्येदित्यर्थः।

विशेषसामग्र्यभावेनानभिमतस्थळे प्रवृत्त्यभावोक्तौ दोषमाह ॥ **अन्यथेति** ॥ स्वकृतिसाध्यपर-कृतिसाध्यजीवनयोनिप्रयत्नसाध्यप्राणपञ्चकसञ्चारादिसाधारणं कृतिसाध्यत्वमेव कार्यत्वं तज्ज्ञानमेव च प्रवर्तकं स्यादित्यर्थः। नन्वेवं स्वकृत्यसाध्ये परकृतिसाध्यादावपि प्रवृत्तिः स्यादित्यत आह ॥ **अतिप्रसङ्गस्येति** ॥

ननु – सञ्जातबाधस्थले सामान्यसामयग्री काञ्चिद्विशेषसामग्रीमादाय विश्राम्यतीत्युक्तम्। शुचित्वे सति जीवित्वप्रतिसन्धानकाम्यहेतुत्वप्रतिसन्धानान्यतरव्यतिरेकेण विशेषसामग्र्यभावादिति भावेनाशङ्क्य निराह ॥ **न चोक्तेति** ॥

अतिव्याप्त्यभावेप्यव्याप्तिरस्तीत्याह ॥ **तस्यापीति** ॥ तदेव व्यनक्ति ॥ **न हीति** ॥ **त्वन्मत इति** ॥ तत्रापि कार्यता ज्ञानादेव बालस्य प्रवृत्तेरभ्युपगमादिति भावः। तत्कारणं स्तन्यपानक्रारणम्। तत्र हेतुर्नित्यत्वाभावादिति। स्तन्यपानादेरिति योज्यम्॥

## तर्कताण्डवम्

**ननु—स्वविशेषणवत्ताप्रतिसंन्धानजन्यं कार्यताज्ञानमेव प्रवर्तकम्। स्वविशेषणं च लौकिके वैदिके च काम्ये कामनैव। नित्ये जीवनादिकम्। बालस्याद्यप्रवृत्तौ कण्ठशोषादि।**

**नचैवमननुगमः। यत्स्वात्मनि प्रतिसन्धीयमानं क्रियाया अकरणे इष्टानुत्पत्तिप्रसञ्जकं तत्त्वरूपविशेषणवत्त्वेन अनुगमात्। इष्टं च काम्ये स्वर्गादि, नित्ये पण्डापूर्वम्। तस्य शब्देन कार्यतया बोधितत्वेन स्वतः पुरुषार्थत्वात्।**

## न्यायदीपः

प्रागुक्तसर्वदोषपरिहाराय पञ्चदशं कल्पमाशङ्कते ॥ **नन्विति** ॥ **लौकिके वैदिके चेति** ॥ भोजनादौ यागादौ चेत्यर्थः। काम्य इत्युभयविशेषणम् ॥ **नित्य इति** ॥ सन्ध्यावन्दनादौ। जीवनादिकं शुचित्वमादिपदार्थः। कण्ठशोषादीत्यादिपदस्य दुःखानुसन्धानम्।

॥ **अननुगम इति** ॥ कामना जीवनकण्ठशोषादेरनेकत्वादिति भावः। यदित्यस्य तत्त्वरूपेत्यन्वयः। लौकिके वैदिके च काम्ये कामनावत्त्वं नित्ये जीवनादिकं, स्तन्यपानादौ कण्ठशोषादिकं स्वस्मिन्ननुसन्धीयमानं तस्य तस्य पुरुषस्य भोजनयागसन्ध्यावन्दनादिक्रियाया अननुष्ठाने तृप्तिस्वर्गादीष्टानुत्पत्तिप्रसञ्जकं भवतीति क्रियाननुष्ठानप्रयुक्तेष्टानुत्पत्तिप्रसञ्जकरूपत्वेन त्रयाणामनुगम इत्यर्थः ॥ **पण्डापूर्वमिति** ॥ स्वर्गादिफलाजनकमपूर्वं पण्डापूर्वमित्युच्यते। कथं तस्येष्टत्वमित्यत आह ॥ **तस्येति** ॥

## तर्कताण्डवम्

**यद्वा नित्येऽकरणफलस्य नरकादेरभाव एवेष्टः। आद्य-**

स्तन्यपाने तु दुःखनिवृत्तिरिति नाननुगमो नापि विषभक्षणे अतिप्रसङ्गः ॥

न च नित्येपि प्रत्यवायपरिहार एवेष्टोस्त्विति वाच्यम्।

"अकुर्वन् विहितं कर्म पङ्के गौरिव सीदति"

इत्यादेः प्रत्यवायबोधकस्य विधिमुखनिरीक्षकतया विधिकाले प्रत्यवायानुपस्थित्या तदभावफलत्वेनोपासनाविधानायोगात्। अन्यथाऽन्योन्याश्रयः स्यादिति चेन्मैवम्।

क्रियाया इष्टसाधनत्वाज्ञाने तदकरणेनेष्टानुत्पादस्य प्रसञ्जयितुमशक्यतयाऽऽवश्यकेष्टसाधनत्वज्ञानस्य प्रवर्तकत्वसिद्ध्या घट्टकुटीप्रभातानिस्तारात्।

तदेतदभिप्रेत्योक्तम्—

"कार्यता च न काचित्स्यादिष्टसाधनतां विना"।

इति। अस्माभिराशङ्क्य परिहृतायां पञ्चदशधा भिन्नायां कार्यतायां आद्याः सप्त। द्वादशी, त्रयोदशी, चतुर्दशी, च कार्यता यद्यपीष्टसाधनतां विना वर्तमाना तदगर्भिता। तथापि न काचिदप्रयोजिका। प्रवृत्त्यहेतुत्वात्। अन्या पञ्चविधा कार्यता तु यद्यपि काचित्प्रवृत्तिहेतुः तथापीष्टसाधनतां विना न इष्टसाधनतैवेत्यर्थः ॥

## न्यायदीपः

ननु सुखप्राप्तिदुखनिवृत्योरन्यतरत्वाभावात्कथमिष्टतेत्यरुचेराह ॥ **यद्वेति** ॥ सञ्जातबाधेऽतिप्रसङ्गतादवस्थ्यादिति पूर्वोक्तदोषं च निराह ॥ **नापीति** ॥ सञ्जातबाधे पुरुषे जीवित्वादिविशेषणमनु-

सन्धीयमानं विषभक्षणरूपक्रियाया अकरणे इष्टानुत्पत्तिप्रञ्जकं न भवति। कस्यचिदिष्टस्यापि तेनाजननात्। तात्कालिकतृप्तेरपि महानर्थहेतुत्वेनेष्टत्वाभावादिति भावः।

यत्तु नित्ये पण्डापूर्वमिष्टमित्युक्तं तत्र कस्य चिन्मतमाशङ्क्य निराह ॥ **न चेति** ॥ **विधि-मुखेति** ॥ सन्ध्यामुपासीतेत्यादिविधीत्यर्थः। विहितं कर्माकुर्वन्निति श्रवणात्। स्वस्य प्रत्यवाय-बोधकत्वं कर्मणो विहितत्वमपेक्ष्यैव। नान्यथेति भावः।

॥ **अन्योन्याश्रय इति** ॥ अकुर्वन्निति वाक्यात्प्रत्यवायबोधे प्रत्यवायपरिहारफलकत्वेन सन्ध्योपासनादिविधिज्ञानं विहितत्वज्ञाने सत्यकुर्वन्नित्यस्मात्प्रत्यवायज्ञानमित्यन्योन्याश्रय इत्यर्थः ॥ **तदेतदिति** ॥ न तावत्कृतिसाध्यत्वमित्यादिनैतावत्पर्यन्तमुक्तं प्रमेयं जिज्ञासाधिकरणानुव्याख्याने उक्तमित्यर्थः।

कथमित्यतो मूलारूढतामुक्तस्य व्यनक्ति ॥ **अस्माभिरिति** ॥ **आद्याः सप्तेति** ॥ कृतिसाध्यत्वं स्वनिष्टकृतिसाध्यत्वं, इच्छाधीनस्वनिष्ठकृतिसाध्यत्वं, चिकीर्षाधीनस्वनिष्ठकृति-साध्यत्वं, चिकीर्षाधीनकृतित्वेन स्वनिष्ठकृतिसाध्यत्वं, स्वविषयचिकीर्षाधीनकृतिसाध्यत्वं, इदानीन्तनेच्छाधीन कृतिसाध्यत्वं, इत्युक्तसप्तपक्षा इत्यर्थः।

॥ **द्वादशीत्यादि** ॥ इष्टसाधननत्वलिङ्गगम्यशुचिकालजीवित्वलिङ्गगम्यस्वविशेषणवत्त्वप्रति-सन्धानगम्यरूपपक्षत्रयमित्यर्थः। इति दशविधाकार्यतेति मूलपदस्यार्थानुवादः। चोप्यर्थ इत्युपेत्याह ॥ **यद्यपि तथापीति** ॥ इष्टसाधनतां विनेत्यस्यार्थः तदगर्भितेति। न काचिदित्यनुवादः। अप्रयोजिकेति व्याख्या ॥ **अन्या पञ्चेति** ॥ कृतिसाध्यतार्हत्वादिरूपेत्यर्थः। इष्टसाधनतां विनानेत्यस्यार्थः इष्टसाधनतैवेति ॥

## तर्कताण्डवम्

**यत्तु कैश्चिदुक्तं य इष्टसाधनमतः कार्यमिति बुध्वैव प्रवृत्तेरन्तरङ्गकार्यताज्ञानमेव प्रवर्तकमिति कार्यतैव लिङ्वाच्येति।**

तन्न। तथात्वे हि यत इदं कृतिसाध्यत्वे सति कृत्युद्देश्यमतः कार्यमिति बुद्ध्वैव प्रवृत्तेः त्वदभिमतं कृतिसाध्यत्वादिरूपकार्यताज्ञानमपि न प्रर्वतकम्। किं त्वन्तरङ्गतदतिरिक्तकार्यतान्तरज्ञानमेव प्रवर्तकं स्यात्। तत्रातः कार्यमिति साधनविषयचिकीर्षैव प्रतीयते। सा च कृतिरूपप्रवृत्तौ जनयितव्यायां कार्यताज्ञानस्य स्वरूपसती द्वारभूता न तु लिङर्थ इति चेत्समं प्रकृतेपि।

यदत्रोक्तं नित्ये कर्मणि प्रत्यवायपरिहारस्य फलत्वेऽन्योन्याश्रय इति। तन्न। सन्ध्यावन्दनविध्यनुपजीविना

''नोपतिष्ठति यः पूर्वां
नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद् बहिष्कार्यः
सर्वस्माद् द्विजकर्मणः''

इत्यादिनिन्दार्थवादेनाकरणे प्रायश्चित्तोपदेशेन च प्रत्यवायपरिहारस्य ''यद्वा दुश्चरितं ममे''त्यादिमन्त्रलिंगेनोपात्तदुरितक्षयस्य च प्रतीत्याऽन्योन्याश्रयाभावात्। न ह्यर्थवादनिरपेक्षेण विध्युद्देशेनैवार्थनिर्णयः। अतिप्रसङ्गात्। अनेकफलकत्वं च जातेष्टिन्यायेनोपपन्नम्॥

अत एव सन्ध्योपासनादौ न विश्वजिन्न्यायः। किं तु रात्रिसत्रन्याय एव। ''अकुर्वन्विहितं कर्म'' इत्यादिस्मृतिस्तु श्रुतिसिद्धानुवादः। सन्ध्योपासनस्य नित्यत्वं तु नियोगफलकत्व इव प्रत्यवायपरिहारफलकत्वेऽप्युपपन्नम्। पण्डापूर्वस्य पुरुषार्थत्वं चायुक्तम्। तस्य सुखदुःखाभावान्यतरत्वे

तथानुभवप्रसङ्गात्। तदन्यतरसाधनत्वस्य च त्वयाऽङ्गीकृतत्वात्। चतुष्टयभिन्नस्य च पुरुषेणानर्थ्यमानत्वात्। अनर्थ्यमानस्यापि श्रुत्या पुरुषार्थत्वबोधने कर्मैव वाऽनुष्ठानश्रम एव वा श्रुतौ पुरुषार्थत्वेन बोध्यत इति स्यात्। कथं च नियोगस्य प्राधान्यं स्वर्गादिसाधनत्वात्। न च नियोगः चेतनो, येन गर्भदासन्यायः। अन्यथा यागादिकमेव प्रधानं स्यात्।

यच्चोक्तं चिकीर्षायाः कृतिसाध्यत्वप्रकारकज्ञानसाध्यत्वनियमात् कार्यताज्ञानं प्रवर्तकमिति। तन्न। सुखत्वमात्रप्रकारकज्ञानादपि सुखं मेऽस्त्विति स्ववृत्तित्वप्रकारकेच्छादर्शनात्। कृतिप्रकारकफलेच्छायां सत्यां तदिच्छाविषयसाधनत्वज्ञानेनैव क्रियायां चिकीर्षोपपत्तेश्च॥

तस्मादिष्टसाधनताज्ञानमेव प्रवर्तकम्। न तु कार्यताज्ञानमितीष्टसाधनत्वमेव विध्यर्थः॥

एतदप्युक्तम्। लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति। न तु कार्यत्वमित्यर्थः।

कार्यताज्ञानस्य प्रवर्तकत्वभङ्गः ॥ ३६॥

## न्यायदीपः

एकदेशिमतमनूद्य निराह ॥ **यत्त्विति** ॥ अतः इष्टसाधनत्वादित्यर्थः। इति बुद्ध्यैव प्रवृत्तेजार्यमानत्वादित्यर्थः ॥ **अत इति** ॥ कृतिसाध्यत्वे सति कृत्युद्देश्यत्वादित्यर्थः।

परमुखेन समाधिं वाचयति ॥ **तत्रात इति** ॥ सैव लिङाद्यर्थो भविष्यतीत्यत आह ॥ **सा चेति** ॥

चिकीर्षेत्यर्थः ॥ **प्रकृतेऽपीति** ॥ यत इष्टसाधनमतः कार्यमित्यत्रापीत्यर्थः।

॥ **अनुपजीविनेति** ॥ निन्दार्थवादेन प्रायश्चित्तोपदेशेन मन्त्रलिङ्गेनेत्यन्वयः। उपतिष्ठतीति परस्मैपदप्रयोगः च्छान्दसः। उपान्मन्त्रकरण इत्यात्मनेपदविधानात् ॥ **पूर्वां पश्चिमामिति** ॥ प्रातः कालीनां सायन्तनीमित्यर्थः। अत्र विहितपदाश्रवणात्सन्ध्यवन्दनविध्यनुपजीविनेत्युक्तम् ॥ **प्राय-श्चित्तेति** ॥

''सन्ध्यावन्दनलोपे तु दिनमेकमभोजनम्।
दिनद्वये त्रिरात्रं स्यात्कृच्छ्रार्धं तु दिनत्रये'' ॥

इत्यादिप्रायश्चित्तोपदेशेनेत्यर्थः ॥ **यद्वेति** ॥ ''यद्वा दुश्चरितं मम सर्वं पुनन्तु मामापोसतां च प्रतिग्रहं स्वाहा'' इति मन्त्रेऽर्थ प्रतिपादनसामर्थ्यरूपलिङ्गेनोपात्तेत्यर्थः। तावता सन्ध्याविधेरेतत्फलकत्वं कुत इत्यत आह ॥ **न हीति** ॥

॥ **अतिप्रसङ्गादिति** ॥ ''अक्ताः शर्करा उपदधाति'' इत्यादौ ''तेजो वै घृत'' मित्यर्थवादेन अञ्जनसाधनं घृतं विध्युद्देशे विवक्षितमिति निर्णीयते। तदनपेक्षायां यत्किञ्चित्तैलाद्येवोपादीयेत। तथा च सन्दिग्धे तु वाक्यशेषादित्यधिकरणविरोधः। तथा ''अग्नीषोमीयं पशुमालभेते''इति विधौ श्रुत पशुः ''छागसस्य वपाया मेदसोनुब्रूहीति'' मन्त्रलिङ्गेन छागरूप इति निर्णीयते'' छागो वा मन्त्रवर्णात् इत्यधिकरणे। एवं तत्रतत्रेति तत्सर्वभङ्गप्रसङ्गादित्यर्थः ॥

नन्वेकस्य सन्ध्याविधेः प्रत्यवायपरिहारदुरितक्षयासत्प्रतिग्रहाद्यनेकफलकत्वमयुक्तम्। फलभेदे कर्मभेदावश्यम्भावादित्यत आह ॥ **अनेकेति** ॥ ''वैश्वानरं द्वादशकपालं निर्वपति पुत्रे जात'' इति वाक्यविहितजातेष्टिनामककर्मणः ''पूत एव तेजस्व्यन्नादः। इन्द्रियावीपशुमान् भवती''तिवाक्यशेषे श्रुतपूतत्वाद्यनेकफलकत्वं यथा तथेत्यर्थः।

॥ **अत एवेति** ॥ आर्थवादिकफलवत्त्वादेवेत्यर्थः। विश्वजिन्न्यायः पूर्वं प्रपञ्चितोऽस्माभिः मण्युक्तविध्यर्थभङ्गान्ते ॥ **रात्रिसत्रेति** ॥ चतुर्थस्य तृतीये पादे

''क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः''

इत्यष्टमे अधिकरणे

"प्रतितिष्ठन्ति ह वा एतारात्रीरुपयन्ति"

इति सत्रकाण्डे श्रुतवाक्ये प्रतीतरात्रिनामकसौत्यकर्मणां सत्रखगतानामनुष्ठानं स्वर्गार्थमुत प्रतिष्ठार्थमिति सन्देहे प्रतितिष्ठन्तीत्यस्य वर्तमाननिर्देशतया फलसमर्पणाशक्ततयाऽर्थवादत्वेनानिर्दिष्टफलत्वाद् विश्वजिन्न्यायेन स्वर्गार्थमिति प्राप्ते श्रुतप्रतिष्ठाफलत्यागेनाश्रुतस्वर्गकल्पने गौरवात् "ये प्रतितिष्ठासन्ति ते रात्री रुपेयुः कुर्युरि" इत्येवमर्थवादश्रुतफलोद्देशेन रात्रिनामककर्मानुष्ठानविधिरिति सिद्धान्तितम्। तन्न्याय एवेत्यर्थः। प्रागुक्तस्मृतेः का गतिरित्यत आह अकुर्वान्निति। तर्हि सन्ध्योपासनं काम्यमेवस्यान्न नित्यमित्यत आह ॥ **सन्ध्येति** ॥ **नियोगेति** ॥ नियुज्यतेऽनेन पुमानिति नियोगोपूर्वम्। तत्फलकत्वे यथा नित्यत्वं तथेत्यर्थः ॥

नन्वपूर्वस्य पण्डत्वान्न दोष इति प्रागुक्तमित्यस्ततदेवायुक्तमित्याह ॥ **पण्डेति** ॥ तत्किं सुखादिवत्साक्षादिष्टादित्वेन वा इष्टादिसाधनत्वेन वा तदुभयान्यत्वेऽपि पुरुषैरर्थ्यमानत्वेन वोपासीतेत्यादिश्रुत्येव पुरुषार्थत्वबोधनाद्वा।

आद्य आह ॥ **तस्येति** ॥ द्वितीय आह ॥ **तदन्यतरेति** ॥ तृतीय आह ॥ **चतुष्टयेति** ॥ सुखतत्साधनदुःखाभावतत्साधनरूपचतुष्टयभिन्नस्येत्यर्थः। चतुर्थं निराह ॥ **अनर्थ्यमानस्येति** ॥

"कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते" ॥

इति यत्कार्यस्य प्राधान्यमुक्तं तन्निराह ॥ **कथं चेति** ॥ न कथमपीत्यर्थः। तत्र हेतुः स्वर्गादीति। न हि साधनस्य प्राधान्यं सम्भवतीति भावः।

ननु – लिङ्तद्विषयनियोज्ययोरपि कार्यताधीहेतुत्वात्स्वसिद्ध्यर्थं स्वस्य स्वर्गकामादिरूपनियोज्यान्वयलाभायैव पुरुषस्य समीहितफलहेतुतां लभते। यथा गर्भप्रभृति दासरूपनियोज्यलाभाय, दाससमीहितसाधनतां प्राप्नुवन्नापि स्वामी नाप्रधानः तथैव कार्यं प्रधानमस्ति। उक्तं च षष्ठाद्यनयान्ते नयविवेकवरदराजीये। नचैतावताऽपूर्वस्य फले गुणता वाच्या। यतः स्वसिद्ध्यनुगुणनियोज्यलाभाय तत्समीहितफलोपायत्वमवलम्बते गर्भदासस्येव स्वामीत्यादि। तथा च कथं नियोगस्य न प्राधान्यमित्यत आह ॥ **न चेति** ॥ गर्भदासो नाम क्रयलब्धायां दास्यां जातः। तस्य स्वामी चेतन

इति कृत्वा मत्सिद्ध्यनुगुणनियोज्यभूतोयं दास इति तत्समीहितोपायतामश्रुत इति युज्यते। नियोग-स्त्वचेतनः स कथं मत्सिद्ध्यनुगुणनियोज्योयं फलकामीति बुद्ध्या स्वस्य स्वर्गकामादिरूपनियोज्य-लाभाय तत्समीहितफलसाधनतामश्रुवीतेत्यननुगुणो गर्भदासन्याय इत्यर्थः।

**॥ यच्चोक्तमिति ॥** एतद्भङ्गस्यादावित्यर्थः। अस्तु त्वदुक्तं तावता नास्माकं क्षतिरित्याह **॥ कृतिसाध्यत्वेति ॥ एतदप्युक्तमिति ॥** यत्तु कैश्चिदित्यादिनोक्तं प्रमेयमपि कर्मनिर्णये भगवत्पादैरुक्तमित्यर्थः।

कार्यताज्ञानस्य प्रवर्तकत्वभङ्गः ॥ ३६ ॥

* * *

## ३७. अथ स्वमते श्येनाग्नीषोमीयवैषम्यम्।

### तर्कताण्डवम्

**नन्विष्टसाधनत्वमात्रस्य विध्यर्थत्वे तस्य विषसम्पृक्त-मधुभोजन इव निषेधवाक्यार्थेनानिष्टसाधनत्वेन सहा-विरोधादग्नीषोमीयहिंसायामुभयसम्भवान्मा हिंस्यादिति निषेधः तदतिरिक्तविषयत्वेन न व्यवस्थाप्यः स्यादिति चेन्न। निन्दार्थवादप्रायश्चित्तोपदेशाद्यशबलितविधेयत्वस्यानिष्टसाधनत्वेन व्यापृतया पर्यवस्याद्विध्यर्थेन सह विरोधात्। श्येनेनाभि-चरन्यजेतेति विधिस्तु–**

**"विष्ठा वार्धुषिकस्यान्नमभिचाररतस्य च" ॥**

**इति निन्दार्थवादेन "त्रिभिः कृच्छ्रैर्व्यपोहती"ति प्राय-श्चित्तोपदेशेन च शबलितो अग्नीषोमीयविधिस्तु तदशबलित**

इति वैषम्यम्।

## न्यायदीपः

यदि मण्याद्युक्तरीत्या विशिष्टेष्टसाधनत्वं न लिङाद्यर्थः तदा बाधकमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ मात्रपदेन बलवदनिष्टाननुबन्धित्वादिविशेषणव्यावृत्तिः ॥ **भोजन इवेति** ॥ तत्र तात्कालिकतृप्तिरूपेष्टसाधनत्वस्य सत्त्वात्तस्य चानिष्टसाधनत्वेन यथा न विरोधस्तद्वदविरोधादिति भावः ॥ **निषेधेति** ॥ ''न हिंस्यादि'' इत्यत्रनञ्युक्तलिङः पर्युदासेनानिष्टसाधनत्वमर्थ इति मण्याद्युक्त विध्यर्थभङ्गे कथितत्वेन निषेधवाक्यार्थो हिंसाया अनिष्टसाधनत्वम्। तच्चाग्नीषोमीयादिहिंसायां लिङादिबोधितेष्टसाधनत्वस्याविरोधीति तत्रोभयसम्भवादित्यर्थः।

साक्षाल्लिङाद्यर्थेनाविरोधेऽपि न हिंस्यादित्यस्याविनाभावलब्धविधिवाक्यार्थेन विरोधोस्ती-त्याह ॥ **निन्दार्थवादेति** ॥ पर्यवस्यन् यत्र निन्दाद्य शबलितविधेयत्वं तत्रानिष्टासाधनत्वमिति व्याप्तिबलेन लभ्यो योऽविध्यर्थः अनिष्टसाधनत्वासमानाधिकरणेष्टसाधनत्वरूपस्तेन सह विरोधात्तद्व्यतिरिक्तत्वेन व्यवस्थाप्यः। अग्निषोमीयादिविधिश्च निन्दाद्यशबलित इति वक्ष्यत भावः।

कथं तर्हि ''श्येनेनाभिचरन् यजेते'' इत्यत्र निषेधविषयत्वम्। तत्रापि ''लक्षणहेत्वोः क्रियाया'' इति हेतौ विहितशत्रन्ताभिचारपदेनाभिचारशब्दितशत्रुवधकाम इत्यर्थलाभेन शत्रुवधरूपेष्ट-साधनत्वस्य श्येननामकयागे लिङा बोधितत्वेऽपि पर्यवसितविध्यर्थेन विरोधस्य वक्तुं शक्यत्वेन तदन्यविषयत्वेन व्यवस्थापयितुं शक्यत्वादित्यत आह ॥ **श्येनेनेति** ॥ वार्धुषिकस्य वृद्ध्युपजीविन इत्यर्थः। ''वृद्धिजीवस्तु वार्धुषिः'' इत्यमरोक्तेः ॥

''समर्घं धनमाहृत्य महार्घं यः प्रयच्छति।
स वै वार्धुषिको नाम सर्वकर्मबहिष्कृतः।

इति स्मृत्युक्तलक्षणस्य वेत्यर्थः ॥ **कृच्छ्रैरिति** ॥

''त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं पयश्च नाश्नीयाद् व्रतमेतत्प्रजापतेः'' ॥

इत्युक्तलक्षणप्राजापत्यकृच्छ्रनामकद्वादशदिवसनिवर्त्त्यव्रतविशेषैः त्रिभिर्व्यपोहति। अभिचारदोषं परिहरतीत्यर्थः ॥ **शबलित इति** ॥ युक्त इत्यर्थः। तथा च पर्यवस्यद्विध्यर्थोपीष्टसाधनत्वमात्रमेव न त्वनिष्टासाधनत्वसमानाधिकरणम्। येन विरोधेन तदन्यविषयताऽपि व्यवस्थाप्यत इति भावः।

## तर्कताण्डवम्

**एवं च मन्मते श्येने लिङ् मुख्य एव। स्ववाच्यस्येष्टसाधनत्वस्य सत्त्वात्। अनिष्टसाधनत्वस्यापि सत्त्वान्निन्दादिकं चोदनासूत्रोक्तमनर्थत्वं च युक्तम्।**

**एतदप्युक्तं लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति न तु बलवदनिष्टाननुबन्धित्वविशिष्टमित्यर्थः।**

**स्वमते श्येनाग्नीषोमीयवैषम्यम् ॥ ३७ ॥**

## न्यायदीपः

एवं कल्पनायां किं बीजमित्यतो युक्तिमाह ॥ **एवं चेति** ॥ इष्टसाधनत्वमात्रस्य लिङर्थत्वे निषेधस्य पर्यवसित विध्यर्थेन सह विरोधे च सतीत्यर्थः।

॥ **निन्दादिकमिति** ॥ प्रागुक्तमित्यर्थः ॥ **चोदनासूत्रेति** ॥ पूर्वतन्त्रे "अथातो धर्मजिज्ञासे"त्यत्र किं लक्षणको धर्मः किं प्रमाणक इति जिज्ञासायां श्रुत्यर्थाभ्यां लक्षणप्रमाणे वक्तुं द्वितीयसूत्रं "चोदनोलक्षणोर्थोधर्म" इति। तत्र भट्टमते चोदनाशब्दो विध्यर्थवादमन्त्रनामधेयरूपचतुरास्यात्मकवेदपरः। प्राभाकरमते च केवलविधिवाक्यपरः। लक्षणशब्दः प्रमाणवचनः। धर्मः इत्यनुवादेन चोदनाप्रमाणक इति प्रमाणे उक्ते सत्यर्थात् यश्चोदनाप्रमाणकः स धर्म" इति लभ्यत इति चोदनाप्रमाणकत्वं धर्मस्य लक्षणमर्थादुक्तं भवति।

एवं तर्हि श्येनयागस्यापि चोदनाप्रमाणकत्वाद्धर्मत्वं स्यादित्यतस्तद्व्यावृत्त्यर्थं यश्चोदनाप्रमाणकोऽर्थरूपश्च स धर्म इत्यर्थग्रहणं कृतम्। श्येनयागस्त्वनर्थ इति। तथा च चोदनासूत्रोक्तमग्नीषोमीयादि-

धर्मविशेषणार्थत्वव्यावर्त्यतया श्येनयागस्योक्तमनिष्टसाधनत्वशब्दितमनर्थत्वं च युक्तमित्यर्थः ॥ **एतदपीति** ॥ इष्टसाधनत्वमात्रस्य लिङाद्यर्थत्वे श्येनाग्नीषोमीयादिवैषम्यायोगो न बाधक इत्येतदपि न केवलं प्रागुक्तमित्यपेरर्थः ।

स्वमते श्येनाग्नीषोमीयवैषम्यम् ॥ ३७ ॥

***

## ३८. अथ नैयायिकोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ।

### तर्कताण्डवम्

नैयायिकैकादेशिनस्तु न मरणजनकव्यापारमात्रं हिंसा। कृष्यादौ गवि नष्टे कृषिकर्तुर्गोहन्तृत्वापत्तेः। किं तु साक्षात् मरणफलको व्यापारः। श्येनश्च न तथेति ''मा हिंस्यात्'' इति निषेधास्पृष्ट एव। लिङर्थश्च न बलवदनिष्टाननुबन्धित्व-विशिष्टमिष्टसाधनत्वम्। किं तु बलवदनिष्टाजनकत्व-विशिष्टम्। तच्च श्येनेस्तीति तत्र लिङ्गुख्य एव तस्य नरक-जनकवैरिवधजनकत्वेनानिष्टानुबन्धित्वेपि नरका-जनकत्वात्। एवं च श्येनस्य नरकाजनकत्वाद्विधानम्। नरकानुबन्धित्वादनर्थत्वमित्याहुः।

तन्न। गळलग्नान्नकबळेन मृतस्यात्महन्तृत्वापत्तेः। अन्ने विषप्रयोक्तुः खड्गेन व्रणपरम्परया घातकस्य चाहन्तृत्वा-पत्तेश्च॥

किं च खड्गकर्तुस्तु खड्गप्रक्षेपादिर्नरान्तरव्यापारो

**नाभिसंहितः। किं तु धनमेवेति नायं घातकः। यज्ज्ञातं सत्प्रवर्तकं स एव लिङर्थः। न च त्वदुक्तं तथा। साक्षादनिष्टा-जनकत्वज्ञाने सत्यप्यनिष्टजनकजनकत्वज्ञाने सत्यप्रवृत्तेः॥**

**एतदप्युक्तं लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति। न तु बलवदनिष्टाजनकत्वविशिष्टमित्यर्थः।**

**न च फलाव्यवहितव्यापार एव धातुवाच्यः, अन्यथा तण्डुलक्रयादावपि पचतीति स्यात्, तथा च हन्तेरपि मरणा-व्यवहितव्यापार एवार्थः श्येनश्च न तथेति न हिंसेति वाच्यम्। फलजनकव्यापारमात्रस्यैव धातुवाच्यत्वात्। अन्यथा विक्लित्त्यव्यवहितक्षण एव पचतीति स्यात्। तण्डुलक्रयस्तु नौदनहेतुः। क्रयं विनाप्राप्ततण्डुलैरपि तत्सिद्धेः।**

## न्यायदीपः

यत्तु मणौ – लिङादेः पूर्वोक्तविशिष्टेष्टसाधनत्वार्थकत्वपक्षे श्येनादौ विधिप्रवृत्त्ययोगमाशङ्क्य श्येनयागस्य साक्षान्मृतिहेतुव्यापारत्वाभावेन वा मृतिरूपफलाव्यवहितव्यापारत्वाभावेन वाऽदृष्टा-द्वारकमृतिहेतुव्यापारत्वाभावेन वा त्रेधा हिंसात्त्वाभावमुपेत्य तथानभिसंहितनरान्तरव्यापाराद्वारकत्वेन वा मृत्युद्देश्यकमृतिफलकव्यापारत्वेन वा हिंसात्वमुपेत्य च हिंसात्वतदभावोपगमप्रकारपञ्चकेन श्येनयागे विधिप्रवृत्त्युपपादनम् पञ्चधा कृतम्। तत्रानभिसंहितनरान्तरेतिपक्षो मणावेव दूषितः। अन्यत्तु तत्त्रयमन्यतमत्वेनोक्तम्। पञ्चमं तु स्वमतत्वेनोक्तम्।

तत्सर्वम् स्पष्टं निराकुर्वन्नादौ तावदन्यत्वव्यभिचारस्य वैरिवधफलत्वेन श्रुतत्वादित्यादिनोक्त-माद्यमतमनूद्य निराह ॥ **नैयायिकेति** ॥ आहुरित्यन्वयः पुल्लिङ्गोप्यस्ति गोशब्द इति नष्ट इति साधु ॥ **श्येनश्च न तथेति** ॥ खड्गहननादेरेव तथात्वात्। श्येनस्य च शत्रुशरीरे स्फोटकज्वरादिद्वारैव मृतिहेतुत्वादिति भावः।

तावता तस्य कथं विधेयता शत्रुवधस्येष्टतया श्येनस्येष्टसाधनत्वेऽपि बलवदनिष्टानुबन्धित्वाद् बलवदनिष्टाननुबन्धीष्टसाधनत्वस्यैव लिङर्थत्वादित्यत आह ॥ **लिङर्थश्चेति** ॥ **अजनकत्व-विशिष्टमिति** ॥ इष्टसाधनत्वमित्यनुषङ्गः । अनिष्टाजनकत्वं च साक्षादनिष्टजनकत्वाभावः ।

॥ **तच्चेति** ॥ साक्षादनिष्टजनकत्वाभावविशिष्टमिष्टसाधनत्वमित्यर्थः । तद्व्यनक्ति ॥ **तस्येति** ॥ **अनर्थत्वमिति** ॥ चोदनासूत्रेऽर्थपदव्यावर्त्यतयोक्तमनर्थत्वमित्यर्थः । साक्षान्मरणफलकव्यापारत्व-रूपहिंसात्वलक्षणस्यातिव्याप्त्यव्याप्ती आह ॥ **गळलग्नस्येति** ॥

दोषान्तरं चाह ॥ **किं चेति** ॥ **एतदपीति** ॥ एकदेशिमतनिराकरणमपीत्यर्थः । द्वितीयमत-माशङ्क्य निराह ॥ **न चेति** ॥ वाच्यमित्यन्वयः ।

॥ **फलेति** ॥ तण्डुलविक्लित्तिरूपौदनाख्य-फलाव्यवहितव्यापारः पचिधातुवाच्यः । मरणरूपफलाव्यवहितव्यापारश्च हनहिंसागत्योः हिसि हिंसायामित्यादि धातुवाच्य इत्यर्थः ॥ **अन्यथेति** ॥ फलव्यवहितव्यापारस्यापि धातुवाच्यत्व इत्यर्थः । हन्तेरित्युपलक्षणम् । हिनस्तेर-पीत्यपि ध्येयम् । हिंसेत्यस्य हिनस्तिधातुजन्यत्वात् ॥ **श्येनश्च न तथेति** ॥ खड्गहननादि रेव तथेति भावः ॥ **अव्यवहितक्षण एवेति** ॥ अव्यवहितपूर्वक्षण एवेत्यर्थः । क्षण इति सप्तमी ॥

## तर्कताण्डवम्

**एतेनानभिसंहितनरान्तरव्यापारमद्वारीकृत्य मरणसाधनं हिंसा। एवं च खड्गेन व्रणपरम्परायाः सत्त्वेपि नरान्तर-व्यापाररूपविशेष्याभावात्खड्गेन प्रहर्ता घातकः। अन्ने विषप्रयोक्ता विषभोजनरूपं नरान्तरव्यापारमभिसन्धत्त इति अनभिसंहितत्वरूपविशेषणाभावात्सोपि घातक एव। खड्गादिकर्तुश्च स्वखड्गप्रक्षेपादिनरान्तरव्यापारो नाभिसंहितः। किं तु धनमेवेति नायं घातकः। विषप्रयोक्ता तु भोजनरूपनरान्तरव्यापारमभिसन्धत्त इति सोपि घातुक एव। श्येनेपि नरान्तरव्यापारोऽभिसंहित इति श्येनेऽपि**

हिंसैव। ततश्च श्येने इष्टसाधनत्वरूपविशेष्यस्य सत्त्वाद्विधिः। अनिष्टाननुबन्धित्वरूपविशेषणस्यासत्त्वादनर्थत्वं चेति केषांचिन्मतं निरस्तम्॥

गळलग्नान्नकवळान्मरणे परिवेषयितुः घातकत्वापातात्। अनेनेदं भोक्तव्यमिति परिवेषणात्। भोक्तुरात्महन्तृत्वापत्तेश्च। अनभिसंहितनरान्तरव्यापारमद्वारीकृत्य मरणानुकूलान्नभक्षणानुष्ठानात्। विशिष्टे शक्तस्य विधिप्रत्यस्य विशेष्यमात्रपरत्वे लक्षणाप्रसङ्गाच्च।

अपरे तु अदृष्टाद्वारको मरणोद्देश्यको मरणफलको व्यापारो हिंसा। अन्योद्देशेन क्षिप्तनाराचेन ब्राह्मणे हते क्षेप्तुर्न हन्तृता। अत एव तत्र प्रायश्चित्तार्धोपदेशः। श्येनश्चादृष्टद्वारैव मरणसाधनमिति न हिंसेति निषेधास्पृष्ट एव। यदि चादृष्टद्वाराऽपि मरणसाधनं हिंसा तर्हि सप्तमीतैलाभ्यङ्गस्यादृष्टद्वारा भार्याविनाशकत्वात्तत्कर्तुर्हिंसकत्वं स्यादित्याहुः।

तन्न। सप्तमीतैलाभ्यङ्गस्य मरणोद्देश्यकपदेनैव निवारणेन अदृष्टाद्वारकपदस्य विप्रतिपन्नश्येनमात्रव्यावर्तकतया वैयर्थ्यात्।

## न्यायदीपः

तृतीयमपि मतं मणावपर इत्यादिनोक्तम्। तदप्यनूद्य निराह॥ **एतेनेति**॥ निरस्तमित्यन्वयः। अनभिसंहितोनुद्दिष्टो यो नरान्तरव्यापारस्तमद्वारीकृत्येत्यर्थः। विशेष्यविशेषणाभ्यां क्रमादव्याप्तिं निराह॥ **एवं चेति**॥ एवं हिंसालक्षणत्वे सतीत्यर्थः।

अतिव्याप्तिमद्वारीकृत्येति विशेषणेति निराह॥ **खड्गेति**॥ **श्येनेपि नरान्तरव्यापार इति**॥

स्फोटज्वरादिशत्रुगतव्यापार इत्यर्थः ॥ **केषां चिदिति** ॥ नैयायिकैकदेशिनामित्यर्थः ।

एतेनेत्युक्तं व्यनक्ति ॥ **गळलग्नेति** ॥ मण्युक्तदोषानुक्त्वा स्वयं दोषान्तरमाह ॥ **विशिष्ट-शक्तस्येति** ॥ बलवदनिष्ठाननुबन्धित्वादिविशिष्टेष्टसाधनत्वे शक्तिमतो लिङ्प्रत्ययस्य "श्येनेनाभिचरन् यजेते" इत्यत्रेष्टसाधनत्वमात्रपरत्वे लिङो लाक्षणिकत्वमेव स्यान्न तु मन्मत इव पूर्वमत इव च मुख्यत्वमित्यर्थः ॥

चतुर्थमपि मतं मणौ वस्तुस्तु मरणोद्देशेन कृतोऽदृष्टाद्वारकस्तदनुकूलो व्यापारो हिंसेत्यादिनोक्तं तदप्यनूद्य प्रत्याह ॥ **अपरेत्वित्यादिना** ॥ मरणोद्देश्यके इत्यस्य कृत्यमाह ॥ **अन्योद्देशेनेति** ॥ नाराचः शरविशेषः ॥ **प्रायश्चित्तार्धेति** ॥ पूर्वं ब्रह्मघ्नः किञ्चिद्व्रतमुक्त्वा

"द्वादशाब्दव्रतं कुर्यादेवं व्रतपरायणः" ।

इति अज्ञानकृतब्रह्महत्यायाः द्वादशाब्दव्रतोक्तेः ज्ञानिनस्तु—

"यो विप्रो ब्राह्मणं हत्वा ज्ञात्वा भृत्यादिभिर्यदा ।
चतुर्विंशतिवर्षाणि व्रतकृच्छ्रुद्धिमाप्नुयात्" ।

इति तद्द्विगुणप्रायश्चित्तोक्तेरिति भावः ॥ **वैयर्थ्यादिति** ॥ हिंसात्वाभावे निर्णीते ह्यलक्ष्यव्यावृत्त्यर्थं विशेषणमर्थवद्भवति । हिंसात्वविवादे तु तद्व्यर्थमेवेति भावः ॥

## तर्कताण्डवम्

**नव्यास्तु मरणोद्देश्यको मरणफलको व्यापारो हिंसा । एवं च श्येनो हिंसैव । विधिप्रत्ययस्तु इष्टसाधनत्वरूप-विशेष्यमात्रपरः । यत्तु म्लेञ्छजनपदाभिचारमुद्दिश्य वेदे श्येनविधिः धनलोभादिना ब्राह्मणाभिचारमुद्दिश्यानुष्ठिते श्येने प्रायश्चित्तविधिरित्युक्तम् ।**

**तन्न । अन्योद्देशेन विहितेऽन्योद्देशेनानुष्ठानस्याप्रसक्त्या**

**प्रायश्चित्तोपदेशायोगादित्याहुः। तत्र त्वदुक्तं हिंसालक्षणं श्येने हिंसात्वं च ममापि सम्मतमेव। किन्तु मद्रीत्या श्येने विधिप्रत्ययस्य मुख्यत्वसम्भवेऽतिजघन्या विधौ लक्षणा न युक्ता॥ एतदप्युक्तं लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति।**

**नैयायिकोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ३८॥**

### न्यायदीपः

पञ्चममपि मतं मणौ "श्येनेनाभिचरन्यजेते" इत्यत्र कथं विधिप्रवृत्तिरित्याक्षिप्योक्तम्। तदनूद्य प्रत्याह॥ **नव्यास्त्विति**॥ नूतननैयायिका इत्यर्थः। आहुरित्यन्वयः। श्येनस्य हिंसात्वमुपेत्य विधेयत्वं प्रायश्चित्तविषयत्वं चाधिकारिभेदेन व्यवस्थापयतां मतं च नव्यमुखेनैवानूद्य निराह॥ **यत्त्विति**॥ तन्नेत्यन्वयः।॥ **अतिजघन्येति**॥ लक्षणैव जघन्या। विधौ लक्षणाऽतिजघन्या। "न विधौ परः शब्दार्थ" इति शाबरभाष्योक्तेः। विशिष्टवाचिनो लिङ्प्रत्ययस्येष्टसाधनत्वरूपविशेष्यमात्रा-र्थत्वोपगमादिति भावः।

यत्तु कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वेष्टसाधनत्वेषु विधिप्रत्ययस्य शक्तित्रयाङ्गीकारान्न लक्षणेति। तन्न। प्रागुक्तरीत्येष्टसाधनत्वमात्रैकशक्तिकत्वोपपत्तौ नानाशक्तिकल्पनस्य अप्रामाणि-कत्वात्। गौरवपराहतत्वेनासम्भवाच्चेति भावः॥ **एतदपीति**॥ श्येनादावपि लिङो मुख्यत्वमि-त्येतदपीत्यर्थः।

नैयायिकोक्तश्येनाग्नीषोमीयादिवैषम्यभङ्गः॥ ३८॥

***

## ३९. अथ साङ्ख्याद्युक्तश्येनाग्नीषोमीयवैषम्यभङ्गः।

### तर्कताण्डवम्

**साङ्ख्यास्तु – अग्नीषोमीयहिंसायां असङ्कुचित वृत्तिना**

न हिंस्यादित्यनेन निषिद्धतया पापहेतुत्वेऽपि महाफल-साधनवेदविहितक्रतूपकारकत्वात्पापमल्पं सुपरिहरं च। पुण्यं तु महदित्याहुः।

तन्न। सामान्यनिषेधस्य न्याये सर्वसम्मते च विहितेतर परत्वे सम्भवति विहितपरत्वं स्वीकृत्य वेदविहितहिंसायाः पापहेतुत्वोक्त्ययोगात्।

अन्ये त्वग्नीषोमीयालम्भनं यद्यपि पशुप्राणवियोजकं, तथाऽपि तस्य

"न वा उ एतन्म्रियसे न रिष्यपि
देवां इदेषि पथिभिः सुगेभिः"

इत्यादिमन्त्रैः पापफलपशुशरीरप्रहाणेनोत्कृष्टभोगसाधन - दिव्यदेहसम्पादकत्वावगमान्न हिंसा।

न हि व्रणादिशान्त्यै दाहच्छेदादिकं कुर्वाणा व्रण-चिकित्सका हिंसकाः। किं तु रक्षकाः इत्याहुः। तदपि न। चिकित्सककृतस्य व्रणशामकस्य व्यापारस्य दाहादित्वेऽपि अपापत्ववद्देवब्राह्मणकण्टकराक्षसव्याघ्रादिमारणस्येव चाग्नीषोमीयालम्भनस्य हिंसात्वेपि न हिंस्यादिति निषेधस्य विहितेतरविषयत्वसम्भवेन निषेधास्पृष्टविधेस्य विहितेतर-विषयत्वसम्भवेन निषेधास्पृष्टविधेयत्वेन धर्मत्वसम्भवेऽ-हिंसात्वोपपादनायासानर्थक्यात्।

एतदेवाभिप्रेत्य गीतातात्पर्ये "साङ्ख्यैर्योगैश्च विहित-हिंसाया अनर्थहेतुत्वाङ्गीकारादिति" साङ्ख्याद्युक्तं वैषम्यद्वयं

**दूषयितुं विहितपदं हिंसापदं च प्रयुक्तम्।**

**इतरे तु – श्येने हिंसा न विहिता। किं तु रागप्राप्ता। यदि हिंस्यात्तर्हि श्येनेन हिंस्यादिति तत्र विधिक्रमः। न तु हिंस्यादेवेत्याहुः। तदपि न । स्वर्ग इव वधरूपे फले रागतः प्राप्तेऽपि ज्योतिष्ठोमस्येव श्येनस्यापि विधिवाक्येनैव फल-साधकत्वरोधनात्॥**

**साङ्ख्याद्युक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ३९॥**

## न्यायदीपः

''अशुद्धमिति चेन्न शब्दा''दिति वैराग्यपादीयसूत्रभाष्याद्युक्तवैधीहिंसाया अपापहेतुत्वादिकं साधयितुकाम आह ॥ **साङ्ख्यास्त्विति** ॥ आहुरित्यन्वयः ॥ **महाफलेति** ॥ स्वर्गादिरूपमहा-फलसाधनम्। वेदविहितो यः क्रतुस्तदुपकारत्वादित्यर्थः। योगमतमाह ॥ **अन्येत्विति** ॥ तस्येत्यस्य दिव्यदेहसम्पादकत्वावगमादित्यनेनान्वयः। न वा इति विशस्यमानपशुं प्रत्युच्यते। म्रियसे प्राणैर्वियुक्तो नासि। न रिष्यसिर्हिंसितो नासि। रिष हिंसायामिति धातोः। देवान् इत्, देवानेव सुगेभिः सुष्ठु गम्यैः। पथिभिः मार्गैः। एषि प्राप्नोषीत्यर्थः

॥ **पापफलेति** ॥ पापस्य फलरूपं यत्पशुशरीरम् ॥ **तत्प्रहापणेनेति** ॥ तिर्यग्जन्मनोपि नरकविशेषत्वादिति भावः। अपापत्ववदित्यस्य धर्मत्वसम्भव इत्यन्वयः ॥ **मरणस्येव चेति** ॥ तस्य हिंसात्वेपि यथा धर्मत्वं तथा सम्भव इत्यर्थः। दृष्टान्ते दार्ष्टान्तिके चोभयत्र हेतुर्न हिंस्यादिति ॥ **एतदेवेति** ॥ मतद्वेय कथितं दूषणमेवेत्यर्थः।॥ **गीतेति** ॥ द्वितीयेऽध्याये ॥ **हिंसा न विहितेति** ॥ अग्नीषोमीयादिपशुहिंसावच्छत्रुवधरूपहिंसा न विधिप्राप्तेत्यर्थः ॥ **हिंस्यादेवेतीति** ॥ शत्रुमिति शेषः। शत्रुवधे न विधिव्यापार इति भावः।

साङ्ख्याद्युक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ३९॥

***

## ४०. अथ प्राभाकरभाट्टोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ।

### तर्कताण्डवम्

प्राभाकरास्तु – श्येनः करणम्। अग्निषोमीयहिंसा त्वङ्गम्। करणे च रागतः प्रवृत्तिः। अङ्गे तु वैधीति वैषम्यमित्याहुः। तदपि न। सेतिकर्तव्यताकस्यैव करणत्वेनेतिकर्तव्यतांशेऽपि फलरागादेव प्रवृत्तेः। यदि हीतिकर्तव्यतां विनाऽपि फलं सिध्येत्तर्हि तदनुष्ठानं व्यर्थमेव। यदि तु फलं न सिद्ध्येत्तर्हि फलरागादेवाङ्गेऽपि प्रवृत्तिः॥

भाट्टास्तु – श्येनस्य वधः फलम्। तच्च न हिंस्यादिति निषिद्धम्। अग्निषोमीयस्य तु क्रतूपकारः फलम्। तच्च न निषिद्धमिति वैषम्यमित्याहुः। तन्न। फलनिषेधस्य साधनपर्यन्तत्वे साधनविधेरपि फलपर्यन्तत्वापत्तेः। यदि च फलनिषेधो न साधनपर्यन्तस्तर्हि साधनान्निवृत्तिर्न स्यादिति दिक्।

एतदप्युक्तम्। लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति। तस्मादिष्टसाधनत्वस्य लिङर्थत्वे बाधकाभावाल्लिङ्गाच्चेष्टसाधनत्वनिर्वाहायापूर्वं कल्प्यम्।

प्राभाकरभाट्टोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥४०॥

तर्कताण्डवे विधिवादः समाप्तः।

### न्यायदीपः

॥करणमिति॥ अभिचाररूपफलं प्रतीति योज्यम्। श्येनेनेति तृतीयाश्रवणादिति भावः

**॥ अङ्गमिति ॥** ज्योतिष्टोमाङ्गत्वेनाग्नीषोमीयं पशुमालभेतेति विधानादिति भावः। फलरागादेव प्रवृत्तेरित्येतद्व्यनक्ति **॥ यदि हीति ॥ वध इति ॥** शत्रुवधः **॥ इति वैषम्यमिति ॥** निषिद्ध-फलकत्वानिषिद्धफलकत्वाभ्यां वैषम्यमाहुरित्यर्थः। न हिंस्यादित्यस्य हिंसासाधनं न कार्यमित्येतत्-पर्यन्तत्वमस्त्युत हिंसा न कार्येत्येतत्पर्यन्तत्वमेव वा। आद्य आह **॥ फलनिषेधस्येति ॥ साधनेति ॥** ज्योतिष्टोमादिसाधनविधेरपीत्यर्थः।

"फलांशे भावनायास्तु प्रत्ययो न विधायकः"।

इति त्वद्वचनविरोध इति भावः। यद्वा श्येनेन यजेतेति साधनविधेरपि वधरूपफलपर्यन्ततापत्त्या फलस्याप्यग्नीषोमीयादिहिंसावद्विधिसंस्पृष्टतया "न हिंस्यादि"त्यस्य तद्व्यतिरिक्तपरत्वावश्यम्भावेन तस्यानर्थत्वं न स्यादिति भावः। अन्त्य आह **॥ यदि चेति ॥**

ननु – निषिद्धसाधनत्वादेव श्येनान्निवृत्तिः। न तु न हिंस्यादिति निषेधस्पृष्टत्वादिति चेत्तर्हि ज्योतिष्टोमादावपि अनिषिद्धकाम्यहेतुत्वादेव प्रवृत्तिः। न तु विहित्वादित्यस्तु। तथा च विधि-निषेधयोरेव प्रवर्तनानिवर्तनाबोधद्वारा प्रवृत्तिनिवृत्तिहेतुत्वमिति भज्येत। सन्ध्यामुपासीतेत्यादौ नित्ये फलहेतुत्वाभावेनाप्रवृत्तिप्रसङ्गाच्च। निषिद्धफलकत्वेन श्येनादावप्रवृत्तौ विधिसंस्पृष्टत्वेन प्रवृत्त्यापाताच्चेत्याद्यभिप्रेत्याह **॥ दिगिति ॥ एतदपीति ॥** अग्निषोमीयादिपश्वालम्भनस्यापि कारणकोटिप्रविष्टत्वं श्येनस्यापि विधिनेष्टसाधनत्वेन विधिबोधितत्वमित्येतदपीत्यर्थः।

नन्विष्टसाधनत्वमित्यादिभङ्गाष्टकेनोपपादितं विधिवादप्रमेयं उत्तरभङ्गोपक्षेपं कुर्वन्नेवोपसंहरति **॥ तस्मादिति ॥ निर्वाहायेति ॥** कालान्तरभाविफलं प्रत्याशुतरविनाशिक्रियायाः साधनत्वस्यापूर्वं विनाऽनुपपत्तेः। तदन्यथानुपपत्त्याऽपूर्वनामक किञ्चिद्वस्तु परिकल्प्यम्। न तु लिङ्वाच्यमित्यर्थः।

प्राभाकरभट्टोक्तश्येनाग्नीषोमीयवैषम्यभङ्गः ॥ ४० ॥

समाप्तः विधिवादः

***

# अपूर्ववादः

## ४१. अथापूर्वस्य लिङ्वाच्यत्वभङ्गः ।

### तर्कताण्डवम्

प्राभाकरास्तु – ''स्वर्गकामो यजेत'' इत्यादौ स्वर्गकामं नियोज्यं प्रति क्रिया लिङ्शब्देन कार्यतया बोधयितुमशक्या। कामी हि काम्यादन्यत्काम्याव्यवहितसाधनमेव कार्यतया अवैति। न तु व्यवहितसाधनम्। क्रिया चास्थायित्वेन काम्यव्यवहितत्वान्न कामिनियोज्यान्वययोग्या। तृप्तिकामस्य व्यवहितसाधने पाके कार्यताधीस्तु न तृप्तिकामितया। किं तु तृप्तिसाधनौदनकामितयैव। अन्यथा सिद्धान्नस्यापि तृप्तिकामस्य व्यवहितसाधने पाके कार्यताधीः स्यात्। तस्मात् फलपर्यन्तस्थाय्यपूर्वमेव लिङा कार्यत्वेन बोध्यमित्यपूर्वं लिङ्वाच्यमित्याहुः।

तन्न। क्रियायां व्यवहितफलान्वयस्येवापूर्वेण सह विषयतयाऽप्यन्वयस्य क्वाप्यदर्शनादपूर्वान्वयस्याप्ययोग्यत्वात्।

### श्रीराघवेन्द्रयतिविरचितः

### न्यायदीपः

अपूर्वस्य कल्प्यत्वं साधयितुं यथोक्तं वाच्यत्वं निरसितुमाह ।। **प्राभाकरास्त्विति** ।। अपूर्वं

लिङ्वाच्यमित्याहुरित्यन्वयः। लिङादेर्हि लोके वृद्धव्यवहारादिना कार्यत्वबोधकत्वमवगतमिति वेदेऽपि तथैव वाच्यम्। कार्यत्वं च लोक इव वेदे धात्वर्थस्य न बोधयितुं शक्यमित्यपूर्वमेव तथा बोध्यमिति युक्तिमाह ॥ **स्वर्गेत्यादिना** ॥ **नियोज्यं प्रतीति** ॥ ममेदं कार्यमिति बोद्धारं प्रतीत्यर्थः। अशक्येत्यस्य तस्मादित्यादिनान्वयः।

कुतोऽशक्येत्यतोऽपूर्ववादपूर्वपक्षे मण्युक्तमाह ॥ **कामीति** ॥ यत्काम्यादन्यत्वे सति काम्याव्यवहितसाधनं तदेव कामी कार्यत्वेनावैतीति व्याप्तिरिहाभिमता। कामी यद्यत्कार्यत्वेनावैति तत्तत्काम्यादन्यत्वे सति काम्याव्यवहितसाधनमिति व्याप्यव्यापके ज्ञेये। नित्ये कर्मणि व्यभिचारात्काम्येत्युक्तिः। काम्ये स्वर्गादावव्यभिचाराय काम्यादन्यदिति। काम्यात् स्वर्गादेः। न च पाकत्वात्पाकः कार्य इत्यनुमितौ व्यभिचाराय इति शङ्क्यम्। तन्मते तत्रापि तदपेक्षाभ्युपगमात् ॥ **कामिनियोज्येति** ॥ कामिरूपो यो नियोज्यः ममेदं कार्यमिति बोद्धा तदन्वययोग्या तस्य कार्यत्वबोधविषयत्वयोग्येत्यर्थः।

ननु तृप्तिकामस्य व्यवहितोपि पाके कार्यत्वबोधोस्त्येव। तत्र प्रवृत्तिरूपस्य कार्यत्वबोध-कार्यस्य दर्शनात्। अन्यथा तत्र प्रवृत्त्यनुपपत्तेरित्यत आह ॥ **तृप्तीति** ॥ अव्यवहितकाम्यसाधन एव प्रवृत्तिरिति पक्षे तु न दोषः। अन्नस्याकाम्यत्वात्। काम्यतृप्तिं प्रति च व्यवहितत्वाद-प्रवृत्युपपत्तेरिति भावः। अस्त्वेवं ततः किमित्यत आह ॥ **तस्मादिति** ॥

॥ **लिङा कार्यत्वेन बोध्यमिति** ॥ यजेत स्वर्गकाम इत्यादौ स्वर्गकामनियोज्यकं यागविषयकमपूर्वं कार्यमित्येवंरूपेण बोध्यमित्यर्थः। यथा यागस्य फलान्वयायोग एवमपूर्वान्वयायोगोऽपीत्यर्थापत्तिरप्रयोजिकैव न लिङ्वाच्यत्वमपूर्वस्य कल्पयतीति भावेनाह ॥ **क्रियायामिति** ॥ यागादावित्यर्थः।

## तर्कताण्डवम्

**किञ्च न लिङा साक्षात्साधनत्वं बोध्यते। येनायोग्यताधीः स्यात्। नापि परम्परयासाधनत्वं येन परम्पराघटकं द्वारमुपस्थाप्यं स्यात्। किं तु यदकरणे काम्यं न सिध्यति**

**तत्त्वरूपं साक्षात्परम्परासाधनसाधारणं साधनत्वसामान्यम्। तज्ज्ञानमात्रेण च कार्यताबुद्ध्युपपत्तेरव्यवहितत्वविशेषणं व्यर्थम्। नह्युक्ते साधनत्वे ज्ञातेप्यव्यवधानाज्ञानेन कार्यत्वाज्ञानं दृष्टम्।**

**नच व्यवहितसाधनमसाधनमेव। भावार्थद्वारा कृतिसाध्यस्यापूर्वस्यापि कृत्यसाध्यतापत्तेः। काम्याभावव्याप्याभावप्रतियोगित्वरूपस्य साधनत्वस्य व्यवधानेऽप्यहानेश्च। काष्ठादिकं पाकसाधनमित्यबाधितव्यवहाराच्च।**

**नापि साक्षात्साधनत्वरूपैकविशेषबाधे साधनत्वसामान्यस्यापि बाधोऽतिप्रसङ्गात्।**

## न्यायदीपः

नन्वस्त्वेवं परस्यापि दोषः। तावता कथं स्वपक्षे साधनत्वबोधो लिङादिना स्यात्। न हि पराङ्गदाहेन स्वाङ्गदाहो निवर्तत इत्यतः स्वपक्षे दोषमुद्धरति ॥ **किञ्चेति** ॥

॥ **द्वारमिति** ॥ अपूर्वलक्षण-मुपस्थाप्यं तदर्थं लिङ्वाच्यं च स्यादिति योज्यम् ॥ **तत्त्वरूपमिति** ॥ स्वार्गादिलक्षणकाम्यासिद्धिविरहप्रयोजकविरहप्रतियोगिकृतिविषयत्वरूपमित्यर्थः।

न च साक्षात्परम्परासाधारणं साधनत्वसामान्यमेव नास्तीति वाच्यम्। तथात्वे साक्षात् परम्परेति विशेषोक्तेरेवायोगेन व्याघातादिति भावः।

ननु कृतिसाध्यत्वज्ञानस्य भवद्भिरपि प्रवर्तकत्वोपगमात्तज्ज्ञानार्थं साक्षात्साधनत्वज्ञानमावश्यकमित्यत आह ॥ **तज्ज्ञानेति** ॥

॥ **कार्यतेति** ॥ कृतिसाध्यतेत्यर्थः। अव्यवहितत्वज्ञानस्यापि अन्वयव्यतिरेकावगतहेतुताकत्वात् कथं तद्व्यर्थमित्यत आह ॥ **न ह्युक्तेति** ॥ यदकरण इत्यादिनोक्त इत्यर्थः।

नन्वव्यवहितत्वज्ञानस्य व्यतिरेकाभावेन स्वातन्त्र्येण तस्यानावश्यकत्वेप्यव्यवहित-पूर्व-वृत्तित्वेस्यैव साधनलक्षणतया तदभावे साधनत्वायोगेन तत्सम्पादकत्वेन वा साक्षात्साधनत्वरूप-विशेषाभावे साधनत्वसामान्यस्यैवाभावेन साधनत्वसामान्यसम्पादकत्वेन वाव्यवहितत्वमावश्यक-मित्यत आद्यं निराह ।। **न चेति** ।। कार्याननुकूलव्यवहितस्यसाधनत्वेप्य न्यादृशस्यासाधनत्वमेवेति तु नेत्यर्थः।

तत्र हेतुत्रयमाह ।। **भावार्थेति** ।।

"धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते"

इत्युक्तेः। यागादिरूपधात्वर्थद्वारायागादिविषयकृतिसाध्यस्येत्यर्थः।

अन्त्यं निराह ।। **नापीति** ।। **अतिप्रसङ्गादिति** ।। शशशृङ्गबोध शृङ्गसामान्यस्यापि बाधापत्तेः। नीलघटबाधे घटसामान्यस्यापि बाधापत्तेश्चेति भावः।

## तर्कताण्डवम्

**न च सामान्यज्ञानं विशेषज्ञानपूर्वकमिति नियमोस्ति। सिद्धान्नस्य पाकेऽप्रवृत्तिस्त्विष्टोत्पत्त्यनान्तरीयकदुःख-जनकत्वज्ञानेन प्रतिबन्धात्। न तु व्यवहितसाधनत्वात्। अन्यथा हि सिद्धस्वर्गसाधनापूर्वस्यापि स्वर्गकामस्य स्वर्गाव्यवहितसाधनेऽपूर्वे कार्यताधीः स्यात्।**

## न्यायदीपः

ननु साक्षात्साधनत्वरूपविशेषस्य बाधे तज्ज्ञानायोगात्परम्पराघटकानुपस्थित्या परम्परा-साधनत्वरूपविशेषस्याप्यज्ञानाद्विशेषज्ञानाभावे च सामान्यज्ञानमेव नोदेतीत्यत आह ।। **न चेति** ।। प्रशस्तरूपवान मैत्र इत्यत्र गौरश्यामविशेषानवगमेपि रूपमात्रप्रतीतेरिति भावः।

यत्तूक्तं पूर्वमन्यथासिद्धान्नस्यापीति तत्राह ।। **सिद्धान्नस्येति** ।। अप्रवृत्तिस्त्विति पदच्छेदः।

इष्टमन्नादि। तदुत्पत्तिनान्तरीयकदुःखजनकत्वज्ञानस्याप्रतिबन्धकत्वादनान्तरीयकेत्युक्तम्। स्वाभीष्टान्नस्य सिद्धत्वेन पुनः पाकेन जायमानान्नस्यानिष्टतया तदुत्पत्तिनान्तरीयकदुःखस्यापि स्वेष्टोत्पत्त्यनान्तरीयकत्वात्तादृशदुःखजनकत्वज्ञानरूपप्रतिबन्धादेव न तत्र प्रवृत्तिरित्यर्थः।

यद्वा इष्टं तृप्त्यादि। तदुत्पत्तिनान्तरीयकश्रमादिदुःखजनकत्वमन्नभोजनेप्यस्ति। अप्रतिबन्धकत्वादनान्तरीयकेत्युक्तम्। सिद्धान्नस्य तेनैव तृप्तिसम्भवेन पुनःपाकस्य तृप्त्युत्पत्त्यनान्तरीयकदुःखजनकत्वात्तज्ज्ञानरूपप्रतिबन्धादेव तत्राप्रवृत्तिरित्यर्थः। कुत एवमित्यतो विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ उक्तरूपप्रतिबन्धादप्रवृत्तिरित्यनङ्गीकार इत्यर्थः।

## तर्कताण्डवम्

किं चैवं यदुत्पत्त्यनन्तरमेव कार्योत्पत्तिस्तत्रैवकामिनः कार्यताधीरित्यपि सुवचत्वादपूर्वेऽपि कार्यताधीर्न स्यात्। किं त्वपूर्वजन्ये स्वोत्पत्त्यनन्तरमेव स्वर्गाद्युत्पादके चरमे व्यापार-विशेषे कार्यताधीः स्यादिति स एव लिङ्वाच्यः स्यादिति।

यदि च यदकृत्वान्यत्कर्तुमशक्यं तत्रैव कार्यताधीः। न चापूर्वमकृत्वा चरमो व्यापारः कर्तुं शक्य इत्यपूर्वे कार्यताधीः। तर्हि यागमकृत्वाऽपूर्वं कर्तुमशक्यमिति धातूपात्ते प्रवृत्तिविषये याग एव साऽस्तु।

किं चैवं पुष्टिकामो घृतं पिबेदित्याप्तवाक्याद्धृतपानादौ कार्यताधीर्न स्यात्। तत्र द्वारस्य लिङाऽनुक्तेरन्यस्य च तदुपस्थापकस्याभावात्। न चान्वयव्यतिरेकाभ्यां वैद्यशास्त्रेण वा तदुपस्थितिः। श्रोतुस्तदा तदनुसन्धानाभावात्। अन्यथाऽऽप्तवाक्यवैयर्थ्यात्।

**यदि च तत्र द्वारानिश्चयेऽपि द्वाराभावानिश्चयमात्रेण कार्यताधीस्तर्हि प्रकृतेऽपि तथास्तु। द्वारस्यापूर्वस्यातीन्द्रियत्वेन तदभावस्य निश्चेतुमशक्यत्वात्।**

## न्यायदीपः

एवमुक्तदिशा व्यवहितेऽपि कार्यताबुद्धेरुपपन्नत्वेऽपि तदनभ्युपगतौ प्रतिबन्दीरूपातिप्रसङ्गमाह ॥ **किं चैवमिति** ॥ अन्यथोपपत्तावव्यवहित एव कार्यताबुद्धिरित्यङ्गीकार इत्येवंशब्दार्थः ॥ **अपूर्वेपीति** ॥ अपूर्वोत्पत्त्यनन्तरं बहुकालपर्यन्तमपि स्वर्गादिकार्यस्याजननादिति भावः ॥ **अपूर्वजन्य इति** ॥ स्वर्गादिफलोत्पत्तिव्यवहितपूर्वकालवर्ती कश्चनापूर्वजन्यो व्यापारविशेष एव कार्यतया बोध्य इति स एव लिङ्वाच्यो न त्वपूर्वमिति स्यादित्यर्थः।

परमुखेन समाधिं वाचयति ॥ **यदिचेति** ॥ **सेति** ॥ कार्यताधीरित्यर्थः। अव्यवहितसाधन एव कार्यताबुद्धिरिति पक्षे दोषान्तरमाह ॥ **किं चैवं पुष्टिकाम इति** ॥

ननु तत्रापि पुष्टिसाधनधातुसाम्यादि तत्साधनं घृतपानमिति तत्प्रति साक्षात्साधनत्वज्ञानादेव तत्र कार्यताधीरित्यस्त्वित्यत आह ॥ **तत्र द्वारस्येति** ॥ वैदिकलिङ एव द्वारवाचकत्वोपगमादिति भावः। धातुसाम्यादेः किञ्चिदन्यदेवोपस्थापकमास्त्वित्यत आह ॥ **अन्यस्येति** ॥

॥ **अन्यथेति** ॥ श्रोतुस्तदनुसन्धान इत्यर्थः। स्वत एव प्रवृत्त्युपपत्तेरिति भावः ॥ **प्रकृतेपीति** ॥ व्यवहितहेतुयागा-दावपीत्यर्थः। तदेव व्यनक्ति ॥ **द्वारस्येति** ॥

## तर्कताण्डवम्

**किञ्चैवं विलम्बेन महाव्याधिनिवृत्तिकाम इदमौषधं पिबेदित्याप्तवाक्यादौषधपाने प्रवृत्तिर्न स्यात्। व्यवधानस्य आप्तेनैवोक्तेः।**

**किञ्च कारणत्वाख्यं साधनत्वं न कार्याव्यवधान-**

गर्भम्। अजनितकार्यस्याहेतुत्वापत्तेः। किं त्वनन्यथासिद्ध-नियतपूर्वभावित्वं वा शक्तिर्वा कारणत्वम्। तच्च कार्यस्य कादाचित्कत्वार्थं व्यवधानमपेक्षत इति अव्यवधानं फलो-पधानव्यापकम्। तथा चाव्यवधानाज्ञानेपि कारणत्वं सुबोध मेव। नहि व्याप्यधीर्व्यापकधीपूर्वकेति नियमोस्ति।

एतेन – कामी काम्यादन्यत्साक्षात्साधनत्वेनाज्ञायमानं यत्कर्तव्यतयाऽवैति तदव्यवहितसाधनमन्तराकृत्वैव।

यद्वा काम्यादन्यत्कामी प्रथमं काम्याव्यवहितसाधन-मेव कर्तव्यतयाऽवैति पश्चाद्व्यवहितसाधनमित्यादिका अव्यवधानगर्भाः श्राद्धनियमा निरस्ताः। व्यवहितसाधनेपि कार्यताबुद्धेरुक्तत्वात्।

## न्यायदीपः

अव्यवहित एव कार्यताबुद्ध्युपगमे दोषान्तरं चाह ।। **किञ्चैवं विलम्बेनेति** ।।

ननु – व्यवहिते साधनत्वबोध एव कथम्। येन तत्र कार्यताधीः स्यादित्यत आह ।। **किं च कारणत्वेति** ।। **अजनितेति** ।। वनस्थदण्डादेरिति भावः।

न्यायमतरीत्याऽऽह ।। **अन्यथेत्यादि** ।। मीमांसकमतेनाह ।। **शक्तिर्वेति** ।। **कादाचित्कत्वेति** ।। यावत्कारणसत्त्वं कार्योदयाभावेन कदाचिदेव कार्योदयो जायत इति तदर्थमव्यवधानमव्यवहितपूर्ववृत्ति किञ्चिदपेक्षत इति हेतोरित्यर्थः। अस्त्वेवमव्यवहितपूर्ववृत्तित्वरूपमव्यवधानं व्यापकम्। फलोपधानं व्याप्यम्।

किं तत इत्यत आह ।। **तथाचेति** ।। **व्याप्येति** ।। साधनत्वरूपव्याप्यस्वरूपधीरव्यवधानरूप-व्यापकधीपूर्विका न हीत्यर्थः। तथात्वे सन्निकृष्टधूमधीरपि न स्यादिति भावः।

पूर्वपक्षे मण्युक्तं प्राभाकराभिमतमन्यदपि पक्षद्वयं निराह ॥ **एतेनेति** ॥ **यदि कर्तव्यतया जानातीति** ॥ यत्र तु अव्यवहितसाधनमन्तरा मध्ये कृत्वैवावैति। नान्यथेत्यर्थः। श्राद्धनियमा इत्युपहासः। यद्वा केवलं श्रद्धया कल्पिताः श्राद्धाः ते च ते नियमाः श्राद्धनियमाः अप्रमाणका इति यावत्।

॥ **उक्तत्वादिति** ॥ किं च लिङा साक्षात्साधनत्वं बोध्यत इत्यादिनोक्तत्वादित्यर्थः। यद्वा किं चैवं पुष्टिकाम इत्यादिनोक्तत्वादित्यर्थः।

## तर्कताण्डवम्

**किञ्च मास्तु प्रथमं यागे फलसाधनताधीः। तथापि त्वदङ्गीकृतेन फलकरणत्वज्ञानेनैव कार्यताधीर्यागेस्तु। स्वीकृता च त्वया कामाधिकारे फलं प्रति परामृष्ट-कारणत्वस्य यागस्यापूर्वं प्रति विषयत्वमितिवदता कारण-त्वधीः। न च कारणत्वे ज्ञातेपि साधनत्वाज्ञानात् कार्यता-धीविलम्बो दृष्टः।**

## न्यायदीपः

एवं नियताव्यवहितयागादौ फलसाधनताबोधो नेत्येतद्दोषषट्कोक्त्या निरस्य तद् बलादपूर्वस्य लिङ्गाच्यत्वं निरस्तम्। इदानीं साधनत्वबोधाभावमुपेत्यापि अपूर्वस्य लिङ्गाच्यत्वं नेत्येतदुपपादयति ॥ **किं च मास्त्वित्यादिना** ॥ **करणत्वेति** ॥ करणत्वं व्यापारोपेतत्वं तज्ज्ञानेनेत्यर्थः।

तदेव कुत इत्यत आह ॥ **स्वीकृता चेति** ॥ त्वया प्राभाकरेण ॥ **कामाधिकार इति** ॥ कामः काम्यमानं स्वर्गादि लक्षणं फलमधिक्रियते प्रतिपाद्यते यस्मिन् तत्र स्वर्गकामो यजेतेत्यादावित्यर्थः। परामृष्टकारणत्वस्यावगतकारणत्वस्य।

॥ **अपूर्वं प्रति विषयत्वमितीति** ॥ विषयत्वं च ज्ञानघटयोरिव स्वभावसम्बन्धो वा तन्निरूपणाधीनत्वं वा समानसंवित्संवेद्यत्वं वा व्यावृत्तसाधनत्वं वेति मण्युक्तमेव ज्ञेयम् ॥ **प्रागेवेति** ॥

विषयत्वबोधात्पूर्वमित्यर्थः। ननु करणत्वं सव्यापारत्वम्। साधनत्वं त्वव्यवधानगर्भम्। न च तज्ज्ञाने कार्यताधीर्भवतीत्यत आह ॥ **न च कारणत्व इति** ॥

## तर्कताण्डवम्

**किञ्च यथाऽऽग्नेयादिषट्कस्य ब्राह्मणावगोरणस्य च प्रागेव परमापूर्वसाधनत्वे शतयातना साधनत्वे च ज्ञाते पश्चादुत्पाद्यमपूर्वं दुरितापूर्वं च कल्प्यते, तथा ज्योतिष्टोमस्यापि प्रागेव स्वर्गसाधनत्वे ज्ञाते पश्चात् परमापूर्वं कल्प्यताम्।**

## न्यायदीपः

प्रतिबन्द्याप्यपूर्वस्य लिङ्वाच्यत्वं नेत्याह ॥ **किं च यथेति** ॥ यद्वा एवमियतापूर्वस्य वाच्यत्वं नेत्युक्त्वाद्यकल्प्यत्वमिदानीं प्रतिबन्द्यादिना साधयति ॥ **किं च यथेति** ॥

''यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामग्नीषोमीयमेकादकशपालं पौर्णमासे प्रायच्छत् उपांशु याजमन्तरा यजति''

इति वाक्यविहितानामाग्नेयद्वयदधियागपयोयागाग्नीषोमीययागोपांशुयागानां दर्शपूर्णमासशब्दितानां षट्कस्येत्यर्थः।

फलशिरस्कस्य लिङोऽपूर्ववाचकत्वोपगमादिह च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति फलश्रवणेनाग्नेयादौ श्रुतलिङोपूर्ववाचकत्वादादावेवाग्नेयादीनां लिङ्वाच्यं फलपर्यन्तस्थायि परमापूर्वं प्रति साधनत्वेऽवगते सति तेषामाशुतरविनाशिनां पर्वद्वयानुष्ठेयानां मेळनायोगेन परमापूर्वनिवर्तकत्वायोगात् श्रुतपरमापूर्वसाधनत्वनिर्वाहायाग्नेयादिभिः षड्भिः कर्मभिः षडपूर्वाण्युत्पत्त्यपूर्वनामकानि कल्प्यन्ते यथा; यथा वा यो ब्राह्मणायावगुरेत्तं शतेन यातयादित्यत्र शतयातनानामकनरकविशेषसाधनत्वेऽवगोरणशद् बितवधोद्यमस्यावगते सति तन्निर्वाहाय दुरितापूर्वं कल्प्यते; तथैव ''शंयौ च सर्वपरिदानादि'' इति तृतीयाध्यायचतुर्थपादीयावगोरणनये अभिधानात्तथैवेत्यर्थः

॥ **प्रागेवेति** ॥ अपूर्वावगतेः पूर्वमित्यर्थः।

## तर्कताण्डवम्

**यदि च काम्यस्थळे क्रियाया व्यवहितसाधनत्वदर्शनेन आग्नेयादेर्व्यवहितफलसाधनत्वयोग्यतासम्भवादादावेव परमापूर्वादिसाधनत्वधीस्तर्हि लोके काष्ठस्यानुभवस्य घृतपानादिक्रियायाश्च व्यवहिते पाके स्मृतौ पुष्ट्यादौ च साधनत्वदर्शनाज्ज्योतिष्टोमस्याप्यादावेव स्वर्गसाधनत्वमवगम्यताम्। न हि वैदिकक्रियायामेव व्यवहितसाधनत्वदर्शनं योग्यतासम्भावकं न तु लौकिकक्रियायामिति कुलधर्मः।**

**ननु—यो ब्राह्मणायावगुरेत्तं शतेन यातयेदित्यत्र हेतुहेतुमतोर्लिङ्। स च साधनत्वमात्रमाह। इह तु विधौ लिङ्कार्यतामाह। सा च न व्यवहितसाधनेयुक्तेति चेन्न। इष्टसाधनतैव कार्यतेत्युक्तत्वात्।**

**एतदप्यभिप्रेत्योक्तं कर्मनिर्णये ''लिङाद्यर्थस्त्विष्टसाधनत्वमेव'' इति। न तु साक्षात्साधनत्वरूपो वा परम्परासाधनत्वरूपो वा विशेष इत्यर्थः।**

## न्यायदीपः

पराभिमतसमाधिमनूद्य समः समाधिरित्याह ॥ **यदि चेति** ॥ उद्भिदा यजेत पशुकाम इत्यादिकाम्यस्थळ इत्यर्थः ॥ **व्यवहितेति** ॥ लिङ्वाच्यापूर्वद्वारा व्यवहितस्वर्गादिसाधनत्वस्य सिद्धत्वात्तत्र व्यवहितसाधनत्वदर्शनेनाग्नेयादेरपि व्यवहितमपूर्वलक्षणं फलं प्रति वा अपूर्वव्यवहितस्वर्गादिरूपफलं प्रति वा साधनतायोग्यतासम्भवादादावेवोत्पत्त्यपूर्वोपस्थितेः प्रागेव परमापूर्वसाधनत्व-

शतयातनासाधनत्वधीरित्यर्थः। उक्तं च मणावपि पूर्वपक्षे काम्येऽपूर्ववाच्यत्वस्थितावाग्नेयादौ तद्द्वारा साधनत्वस्य योग्यत्वसम्भवादिति। काष्ठस्येत्यादेर्यथाक्रमं पाक इत्यादिना त्रयाणामन्वयः।

पूर्वपक्षे मण्युक्तमवगोरणमात्रवैषम्यरूपसमाधिमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ **हेतुहेतुमतोरिति** ॥ अवगेरणं हेतुः। शतयातनारूपफलं हेतुमत्। "हेतुमतोर्लिङिति" पाणिनिना लिङो विधानादिति भावः।

॥ **इह त्विति** ॥ ज्योतिष्टोमादौ ॥ **उक्तत्वादिति** ॥ विधिवाद इति योज्यम् ॥ **एतदपीति** ॥ कार्याभावव्याप्याभावप्रतियोगित्वरूपं साधनत्वमात्रं लिङर्थ इत्येतदपीत्यर्थः।

## तर्कताण्डवम्

**अपि च – यथा त्वन्मते घटेन जलमाहरेत्यादावशक्यस्यापि छिद्रेतरत्वस्यान्वयितावच्छेदकत्वेन भानं तथेहाशक्यस्यापि स्थायिव्यापारस्यान्वयितावच्छेदकत्वेन भानमस्तु। कृतमपूर्वे शक्तिकल्पनया। अन्यथा तत्रापि छिद्रेतरत्वं घटपदवाच्यं स्यात्।**

**एतदप्याह "इष्टसाधनत्वमेवर्थ" इति। इष्टसाधनत्वमेवार्थः शक्यम्। अपूर्वं त्वशक्यमपि स्थायिव्यापारस्य अन्वयितावच्छेदकत्वेन भासतामित्यर्थः।**

## न्यायदीपः

अपूर्वप्रतीतिमुपेत्यापि तस्य लिङ्वाच्यत्वं निराह ॥ **अपि चेति** ॥ अशक्यस्यापि शब्दशक्त्यविषयस्यापीत्यर्थः। भानं घटेन जलमाहरेत्यादिशाब्दज्ञान इति योज्यम्। स्थायिव्यापरस्यापूर्वस्य क्षणिकक्रियायाः स्वर्गादिसाधनतान्वयितावच्छेदकत्वेन भानमस्त्वित्यर्थः। कृतं अलमित्यर्थः। लिङ इति शषः। अर्थपदानुवादेनार्थमाह ॥ **अर्थः शक्यमिति** ॥

## तर्कताण्डवम्

किंच पीनश्चैत्रो दिवा न भुङ्क्ते इत्याप्तवाक्यादन्वये बुद्धे पश्चात्तदुपपादकं रात्रिभोजनमिवेहापि वेदेन यागस्य स्वर्गं प्रति साधनत्वसामान्ये बुद्धे स्वद्वारा तदुपपादकमपूर्वं पश्चात् कल्प्यताम्। किमन्यलभ्यापूर्वे शक्तिकल्पनया। अन्यथा रात्रिभोजनमपि पीनपदवाच्यं स्यादिति श्रुतार्थापत्तिलोपः स्यात्। यदि च तत्रोपपादकानुपस्थितिमात्रेण नायोग्यताधीः किं तूपपादकाभावोपस्थित्यैवेति पूर्वमेव अन्वयधीस्तर्हि इहापि तथास्तु। उपपादकापूर्वाभावानिश्चयस्योक्तत्वात्। न चानुपपत्तेस्तौल्येऽपि लोकेऽभिहितान्वयानुपपत्तिर्वेदे त्वभिधेयानुपपत्तिरिति भेदकल्पने हेतुरस्ति।

एतदप्याह ''इष्टसाधनत्वमेवार्थ'' इति। अपूर्वं तु नार्थः किं तु कल्प्यमेवेत्यर्थः।

## न्यायदीपः

ननु – छिद्रेतरत्वं प्रत्यक्षेण घटादौ प्रसिद्धम् अपूर्वं तु न केनाप्यतो वैषम्यमित्यतो वा, ननु – छिद्रेतरत्वं घटनिष्ठमपूर्वं तु कर्तृनिष्ठं व्यधिकरणं कथमन्वयितावच्छेदकत्वेन भायादित्यनुशयाद्वाह ॥ **किञ्चेति** ॥ **साधनत्वसामान्ये बुद्धेपीति** ॥ तद्बोधसम्भवः प्रागेवोक्त इति भावः। स्वद्वारासाधनत्वसामान्यबोधद्वारा। स्वेत्यपूर्वं वा। क्वचित्तद्वारेति पाठः। साधनत्वसामान्योपपादकमित्यर्थः।

प्रतिबन्दीवैषम्यमाशङ्क्य सममित्याह ॥ **यदि चेति** ॥ **उपपादकाभावोपस्थित्यैवेति** ॥ अयोग्यता धीरित्यनुकर्षः ॥ **इहापीति** ॥ ज्योतिष्टोमादावपीत्यर्थः ॥ **उक्तत्वादिति** ॥ द्वारस्यापूर्वस्यातीन्द्रियत्वेनेत्यादिग्रन्थेनेत्यर्थः। प्रकारान्तरेण वैषम्यमाशङ्क्य निराह ॥ **न चेति** ॥

**अभिहितेति ॥** शब्देन शक्त्या बोधितस्य पीनत्वादेरित्यर्थः। अभिधेयस्य अभिधातुं योग्यस्य अभिधास्यमानस्येति यावत्। लिङाऽपूर्वेवगते पश्चाद्यागस्य साधनत्वमवगम्यते। न तु तत्प्रागिति वैषम्यकल्पने हेतुरस्तीत्यर्थः।

## तर्कताण्डवम्

**किं च लोके लिङ्पदशक्यत्वेन निश्चितस्य कार्यत्वस्य धात्वर्थेनान्वयोऽनुपपन्नश्चेद्गङ्गाशब्दस्य तीर इव लिङस्तदन्वययोग्येऽपूर्वे लक्षणास्तु। न तु शक्तिः। अन्यथा वेदे क्वाप्यमुख्यवृत्तिर्न स्यात्। न चापूर्वस्य मुख्यार्थसम्बन्धित्वेनानुपस्थितेर्न लक्षणा युक्तेति वाच्यम्। त्वयाऽपि लिङोऽपूर्वे शक्तिग्रहार्थं कार्यत्वेन रूपेण सामान्यतो वा तर्केण विशेषतो वा तदुपस्थितेः स्वीकृतत्वात्।**

**एतदप्याह ''लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति''। इष्टसाधनत्वमेवार्थो वाच्यं अपूर्वं तु लक्ष्यमित्यर्थः।**

**एतेन – क्षणिकक्रियायाः कालान्तरभाविफलकामिकार्यतयाऽन्वयो न शब्दबोध्यः। तदङ्गभूतयोग्यताविरहादिति निरस्तम्। व्यवहितसाधनेऽपि कार्यताबुद्धेर्दर्शितत्वेन तदविरोधेनैव योग्यतायानिर्वक्तव्यत्वात्।**

## न्यायदीपः

ननु – लोके वृद्धव्यवहारेण लिङः कार्यत्व एव शक्तिग्रहात् कामी हि काम्यादीत्युक्तदिशा धात्वर्थे लिङः कार्यत्वबोधकत्वायोगादगत्याऽपूर्वे वाच्यत्वकल्पनमित्यतः लिङैवापूर्वोपस्थितिमभ्युपेत्यापि वाच्यत्वं निराह ॥ **किञ्च लोक इति ॥ अनुपपन्नश्चेदिति ॥** कामी हि काम्यादित्युक्तनियमबलादिति भावः। तदन्वययोग्ये कार्यतान्वययोग्य इत्यर्थः।

ननु कथं वेदे लक्षणेत्यत आह ।। **अन्यथेति** ।। इन्द्रप्रतिपादकमन्त्रस्यैन्द्र्या गार्हपत्यमुपतिष्ठत इति विनियुक्तत्वेन तन्मन्त्रगतेन्द्रादिपदस्य गार्हपत्ये मुख्यवृत्तिर्न स्यात्। सोमनेत्यादौ सोमवतेति लक्षणा न स्यादित्यर्थः।

लक्षणाबीजस्याभावान्न लक्षणेत्याशङ्क्याह ।। **न चेति** ।। **तर्केण विशेषतो वेति** ।। यदि स्थायी व्यापारो न स्यात्तर्हि क्रियायाः व्यवहितफलसाधनत्वं न स्यादित्येवंरूपतर्केणेत्यर्थः।

यत्तु मणौ अपूर्ववादपूर्वपक्षे क्षणिकक्रियायाः कार्यता लिङा बोधयितुं न शक्यते स्वर्गकामनियोज्यान्वययोग्यताज्ञानविरहादित्यादिनोक्तं तन्निराह ।। **एतेनेति** ।। कालान्तरभावियत्फलं तत्कामिनः कार्यता तयान्वय इत्यर्थः ।। **दर्शितत्वेनेति** ।। किं चैवंमित्यादिग्रन्थेनेति भावः।

## तर्कताण्डवम्

**किञ्च केयं योग्यता या व्यवहिते नास्ति।**

**न तावत्सजातीयेऽन्वयदर्शनम्। कथं चित्साजात्यस्य यागेऽपि सत्त्वादतिप्रसक्तत्वात्। व्यवहितपुष्टिजनकेन घृतपानेन सह क्रियात्वेन साजात्यस्य यागेऽपि सत्त्वाच्च। पदार्थतावच्छेदकेन वाऽन्वयितावच्छेदकेन वा धर्मेण साजात्यस्य पयसा सिञ्चतीत्यनाप्तवाक्येऽतिव्याप्तेः। अद्य जातः पयः पिबतीत्याप्तवाक्येऽव्याप्तेश्च। लोके लिङर्थस्य कार्यत्वस्य धात्वर्थेन सहाश्रितत्वेनैवान्वयस्य दर्शनेन त्वत्प्रतिकूलत्वाच्च। त्वन्मते हि लक्ष्यस्य स्थायिकार्यस्य धात्वर्थेन सह विषयितयान्वयः।**

## न्यायदीपः

ननु – तदविरोधेन योग्यताया निर्वक्तव्यत्वादित्ययुक्तम्। तादृशयोग्यताया अभावादेवेत्यतो बाधकप्रमाणाभावरूपयोग्यताऽस्त्येवेति वक्तुं सजातीयेन्वयदर्शनं वाऽन्वयविरोधिरूपविरहो

वान्वयप्रयोजकरूपवत्ता वा योग्यतेति प्रसक्तपक्षत्रयं क्रमान्निराह ॥ **न तावदित्यादिना** ॥ साजात्यं किं पदार्थत्वादिना येन केन चिद्धर्मेणोत पदार्थतावच्छेदकधर्मेणाथान्वयितावच्छेदकधर्मेण।

न त्रयमपीति क्रमेण निराह ॥ **कथं चिदित्यादिना** ॥ आशुविनाशिनो घृतपानस्य व्यवहितपुष्टि-हेतुत्वदर्शनेन तत्साजात्यस्य पदार्थत्वस्य यागे सत्त्वेन योग्यताविरहोऽसिद्ध इति भावः।

॥ **इत्यनाप्तवाक्य इति** ॥ पयसा सिञ्चतीत्याप्तोक्तेः पयस्त्वादेः पदार्थतावच्छेदकस्य अन्वयता-वच्छेदकस्य च द्रवद्रव्यत्वादेः सत्त्वेनानाप्तोक्ते तद्वाक्ये तस्य सत्त्वादतिव्याप्तेरित्यर्थः। एतच्चोपलक्षणम्। अद्य जातः पयः पिबतीत्यादावसम्भवश्चेति मण्युक्तं च ध्येयम्।

॥ **तत्प्रतिकूलत्वाच्चेति** ॥ सजातीयेन्वयदर्शनरूपयोग्यताया इति योज्यम्। लोके हि लिङ् धात्वर्थस्यैव कार्यत्वं बोधयति। व्युत्पत्तिबलात्। वेदे तु स्वर्गादिसाधनस्य यागादिरूपधात्वर्थ-जन्यस्यापूर्वस्य कार्यत्वं बोधयति ''कामी हि काम्यादन्यदि'' इत्यादिप्रागुक्तनियमबलादिति तव मतम्। सजातीयेन्वयदर्शनरूपयोग्यता तु तस्य प्रतिकूलेति भावः।

लोके पाकः कार्यः भोजनं कार्यमित्यन्वयः। वेदे तु यागादिविषयकमपूर्वं कार्यमित्यन्वय इति भावेन वेदे बोधप्रकारं व्यनक्ति ॥ **त्वन्मते हीति** ॥ **उक्तत्वादिति** ॥ पयसा सिञ्चातीत्यनाप्तवाक्येऽति-व्याप्तेरुक्तत्वादित्यर्थः। तत्र सेकान्वयविरोधिनो वह्नित्वादेरभावादिति भावः। प्रकृते यागादावप्यस्तीयं योग्यतेत्याह ॥ **कार्यतेति** ॥

## तर्कताण्डवम्

**नाप्यन्वयविरोधिरूपविरहो योग्यता। अतिव्याप्तेरुक्त-त्वात्। कार्यत्वान्वयं प्रति विरोधिनोसाधनत्वस्य क्रियाया-मभावाच्च। साधनत्वसामान्यान्वयं प्रति च क्षणिकत्वस्य अविरोधित्वात्। लोके क्रियायाः स्थायिकार्यान्वया-भावस्यैव दर्शनेन क्रियात्वस्यैवापूर्वविषयितान्वयविरोधि-त्वेन त्वत्प्रतिकूलत्वाच्च।**

**नाप्यन्वयप्रयोजकरूपवत्ता योग्यता। अतिव्याप्तेः। कार्यतान्वयं प्रति प्रयोजकस्य साधनत्वसामान्यस्य, फल-सामान्यसाधकत्वान्वयं प्रति प्रयोजकस्य क्रियात्वस्य, फलविशेषसाधनत्वान्वयं प्रति प्रयोजकस्य यागत्वस्य, यागे सत्त्वाच्च। यागत्वस्य फलविशेषसाधनत्वान्वयं प्रति प्रयो-जकत्वाज्ञानं तु पुरुषदोष एव। क्रियान्वयं प्रति प्रयोजकत्वेन क्लृप्तस्य कार्यत्वत्वस्य लिङर्थे स्थायि कार्येऽभावेन त्वत्प्रतिकूलत्वाच्च। अपूर्वेऽपि कार्यतान्वयं प्रति प्रयो-जकस्य स्थायित्वस्य पूर्वमनुपस्थितेश्च। शाब्दस्यान्वय-ज्ञानस्यान्वयप्रयोजकरूपव्याप्यज्ञानाधीनत्वेऽनुमितित्वा-पाताच्च।**

## न्यायदीपः

ननु – क्षणिकक्रियायां कालान्तरभाविफलसाधनता कथमित्यत आह ॥ **साधनत्वेति** ॥ साक्षात्परम्परासाधारणस्य कार्याभावव्याप्याभावप्रतियोगित्वरूपस्य प्रागुपपादितत्वादिति भावः। इयमपि योग्यता वेदे त्वन्मतप्रतिकूलेत्याह ॥ **लोक इति** ॥ **अतिव्याप्तेरिति** ॥ प्रागुक्तानाप्तवाक्ये। इयमपि योग्यता ''यजेत स्वर्गकाम'' इत्यादावस्तीत्याह ॥ **कार्यतेति** ॥ **फलविशेषेति** ॥ स्वर्गादिरूपफलविशेषेत्यर्थः।

ननु यागत्वस्य फलविशेषान्वयप्रयोजकत्वे तद् बोधापत्तिरित्यत आह ॥ **यागत्वस्येति** ॥ अन्वयप्रयोजकरूपवत्तालक्षणयोग्यतापि तव प्रतिकूलेत्याह ॥ **क्रियान्वयं प्रतीति** ॥ लोके क्रियान्वितं हि कार्यत्वं लिङा बोध्यते। तत्र कार्यत्वस्य लिङा बोधितस्य धात्वर्थपाकादिरूपक्रियान्वये कार्यत्वत्वं तन्त्रं क्लृप्तम्। वेदे च यागविषयके अपूर्वे कार्यत्वमेवास्ति। न तु कार्यत्वत्वम्। तत्र तु अपूर्वगतकार्यत्व-धर्म एव। तथा च कार्यत्वस्यैव यागादिक्रिययान्वयो न तु कार्यत्वत्वाश्रयकार्यत्वाश्रयस्यापूर्वस्येति त्वन्मतप्रतिकूलत्वादस्या अपि योग्यताया इत्यर्थः।

॥ **पूर्वमिति** ॥ लिङाकार्यताबोधात्पूर्वमित्यर्थः। तथा चासम्भव इति भावः। न च स्वरूपसती

योग्यता कारणं योग्यताभ्रमादन्वयबोधानापत्तेरिति भावः ॥ **अन्वयप्रयोजकरूपव्याप्येति** ॥ अन्वयप्रयोजकरूपस्यान्वयव्याप्यत्वनियमाद्व्याप्येत्युक्तम्।

## तर्कताण्डवम्

तस्माद् बाधकप्रमाणाभाव एव योग्यता। साच प्रकृतेऽप्यस्ति। साधनत्वसामान्याबाधस्योक्तत्वात्। विस्तृतं चैतद् योग्यताप्रस्तावे।

अस्तु वा या काचन योग्यता। तथाऽपि न तज्ज्ञानं शाब्दधीहेतुः। किं तु योग्यता व्यतिरेकनिश्चयाभाव एवेत्युक्तं प्रामाण्योत्पत्तिस्वतस्त्वे। अत एव संशयसाधारणं योग्यताज्ञानं शाब्दधीहेतुः। प्रतिबन्धकस्य योग्यताभावनिश्चयस्य सर्वत्रासत्त्वादित्याहुः।

एतदप्याह ''इष्टसाधनत्वमेवार्थ'' इति। इष्टसाधनत्वसामान्यमेवार्थः, न तु साक्षात्साधनत्वं, येन योग्यता न स्यादित्यर्थः। तस्मात्क्रिया कार्यत्वान्वययोग्यैव।

केचित्तु क्रियावत्क्षणिककृत्युपहितमपूर्वमपि क्षणिकमिति सममेवेत्याहुः।

अपरे तु विवादविषयो लिङ् समभिव्याहृतक्रियान्वितकार्यत्वबोधकः प्रमाणलिङ्गत्वात् लौकिकलिङ्वदित्याहुः।

तस्मात् क्रियान्वययोग्यं इष्टसाधनत्वमेव लोके वेदे च लिङर्थः।

अपूर्वस्य लिङ्वाच्यत्वभङ्गः ॥ ४१ ॥

### न्यायदीपः

**॥ उक्तत्वादिति ॥** ''किं च न लिङासाक्षा''दित्यादिना ग्रन्थेनेति भावः। ननु – यत्किञ्चिद् बाधकाभावो वा यावद् बाधकाभावो वा। नाद्यः। व्यभिचारात्। नान्त्यः। दुर्ज्ञानत्वादित्यत आह **॥ विस्तृतिमिति ॥** क्रियेति भिन्नं पदम्।

**॥ कृत्युपहितमिति ॥ कार्यमिति ॥** कृतिरूपोपाधिग्रस्तमित्यर्थः। यागविषयकं कार्यमित्येव तस्य लिङापि बोधनात्। तथाच यागस्येव तस्यापि न काम्यसाधनत्वज्ञानं सम्भवतीति कथं तस्य कार्यत्वबोधः स्यादिति भावः। अपूर्वस्य लिङ्वाच्यत्वेऽनुमानविरोधमाह **॥ अपरेत्विति ॥**

अपूर्वस्य लिङ्वाच्यत्वभङ्गः ॥ ४१ ॥

***

## ४२. अथ लिङादेरपूर्वे व्युत्पत्तिभङ्गः।

### तर्कताण्डवम्

**किं चापूर्वे लिङादेः शक्तिग्रहो न तावत्कार्यत्वेन वा, क्रियातिरिक्तकार्यत्वेन वा, स्थायिकार्यत्वेन वा। तेषामपूर्वादन्यत्र घटादावपि सत्त्वेन शक्यतानवच्छेदकत्वात्। अन्यथा प्रमेयत्वेनापि तद् ग्रहः स्यात्। नाप्यपूर्वत्वेन तस्य प्रागनुपस्थितेः।**

**एतेन–स्थायित्वफलजनकत्वकृतिसाध्यत्वेष्व गृहीतासंसर्गेषु त्रिषु धर्मेषु शक्तिग्रहः। तत्तु धर्मत्रयं परस्परमन्वयायोग्यं सदन्विताभिधानदशायां स्वान्वययोग्यं धर्मिसामान्यमुपस्थापयतीति निरस्तम्। त्वदभिमतस्यापूर्वरूपस्य धर्मिणो**

**वाच्यत्वासिद्धेः। धर्मिसामान्यस्य स्वविषयीभूतयागान्वयात् प्रागेवोपस्थितौ तद्द्वारा क्रियाया एव कार्यान्विततया अभिधानापाताच्च।**

## न्यायदीपः

अपूर्वे व्युत्पत्त्यसम्भवान्न तल्लिङादिवाच्यमित्याह ॥ **किञ्चेति** ॥ वक्ष्यमाणापेक्षया न तावदिति निर्देशः ॥ **कार्यत्वेनेति** ॥ कृतिसाध्यत्वेनेत्यर्थः ॥ **नाप्यपूर्वत्वेनेति** ॥

॥ **पूर्वापरीभूतेति** ॥ अतीतानागतेत्यर्थः। तन्मात्रानुगतत्वादेव घटादिव्यावृत्तस्येत्युक्तम् ॥ **प्रागिति** ॥ लिङादिव्युत्पत्तेः पूर्वमित्यर्थः। लिङादिनैवोपस्थितावन्योन्याश्रयान्मानान्तरेणोपस्थितौ चापूर्वत्वभङ्गादिति भावः।

यत्तु – मणावपूर्ववादपूर्वपक्षे अस्तु वोपस्थितेष्वगृहीतासंसर्गेषु स्थायित्वस्वर्गजनकत्व-कार्यत्वेषु शक्तिरित्यादिनोक्तं तन्निराह ॥ **एतेनेति** ॥ **अगृहीतासंसर्गेष्विति** ॥ एकस्मिन् धर्मिण्य-गृहीतसामानाधिकरण्येष्वेतद्विशेषणं स्वरूपं सत्। न तु शक्तिग्रहप्रकार इति ज्ञेयम्।

॥ **शक्तिग्रह इति** ॥ लिङादेरित्यनुकर्षः ॥ **धर्मत्रयमिति** ॥ धर्मत्रयवाची परस्परान्वयायोग्यं सत् अन्वयायोग्याभिधायी सन्नित्यर्थः

॥ **अन्वितेति** ॥ लिङादिना धर्मत्रयान्वितकिञ्चिद्वस्त्वभिधानदशायां स्वान्वययोग्यधर्मत्रया-न्वययोग्यमुपस्थापयति। परस्परान्वितधर्मत्रयवाचको लिङादिरित्यर्थः। वाच्यत्वाभावस्फोरणार्थं प्राधान्येनानुवादः ॥ **वाच्यत्वस्यासिद्धेरिति** ॥ योग्यताबललभ्यत्वाद्धर्मिणः धर्मत्रयस्यैव वाच्यत्वादिति भावः।

॥ **तद्द्वारेति** ॥ धर्मिसामान्योपस्थितिद्वारेत्यर्थः। कामी हि काम्यादन्यत् काम्याव्यवहितं कार्यतयावैतीति। यागस्त व्यवहित इति न प्रथमं कार्यतया प्रतिपत्तुमलमिति अपूर्वोपस्थितौ तु तद्धेतुतया यागं कार्यत्वेन पश्चात्प्रतिपद्यत इति च त्वयोक्तत्वाल्लिङ्वाच्यधर्मत्रयेणैव स्वयोग्यधर्मिसामान्योपस्थितौ तत्साधनत्वस्य यागेवगन्तुं शक्यत्वेन कार्यत्वाधारत्वेन लिङादिनाभिधानं स्यादित्यर्थः।

## तर्कताण्डवम्

**एतेनैव – वस्तुतः क्रियाभिन्ने घटादिसाधारणे कार्ये कृतिसाध्यत्वरूपकार्यत्वेन शक्तिग्रहः। योग्यताबलात् स्थायित्वलाभः। एवं च क्रिया शक्तिग्रहदशायामेव त्यक्ता। घटादिद्रव्यगुणकर्माणि त्वयोग्यत्वादन्विताभिधानदशायामेव त्यक्तानीत्यपूर्वे पर्यवसानमिति निरस्तम्। क्रियावद्घटादेरपि स्वर्गासाधनत्वेनायोग्यत्वसाम्ये क्रमेण त्यागायोगेन द्वयोरपि पूर्वमेव त्यागे शक्तिग्रहस्थळाभावेन व्युत्पत्त्यनुपपत्तेः। द्वयोरपि पश्चात्त्यागे च क्रियाया अपि शक्यत्वान्नित्यस्थळे निषेधस्थळे च क्रियात्यागे हेत्वभावेन क्रियाया एव लिङर्थत्वसम्भवान्नित्याद्यपूर्वासिद्धेः।**

## न्यायदीपः

''घटादावेव कार्ये शक्तो लिङिति शक्तिग्रहः ततः तत्कार्यमिति स्मरणं ततो योग्यतादिवशात् प्रचुरद्रव्यगुणकर्माणि कार्याणि विहाय यागविषयकं कार्यमित्यनुभवो भवन्नपूर्वमालम्बते। योग्यत्वाच्च स्थायित्वलाभ'' इत्यादिना मणावनूदितव्युत्पत्तिप्रकारं च निराह॥ **एतेनैवेति**॥ क्रियाभिन्नत्वस्यापि शक्यकोटौ प्रवेशे क्रियाया एव शक्यत्वं लघ्वित्यतस्तस्य शक्यकोटाव-प्रवेशद्योतनायोक्तं वस्तुतः क्रियाभिन्न इति।

॥ **कार्य इति** ॥ कृतिसाध्य इत्यर्थः ॥ **योग्यताबलादिति** ॥ स्वर्गकामान्वययोग्यताबलादिति वा स्वर्गसाधनत्वान्वययोग्यताबलादिति वेत्यर्थः।

॥ **क्रियेति** ॥ त्यक्तेत्यन्वयः ॥ **अन्विताभिधानेति** ॥ शब्दानामन्वित एवार्थे अभिधा स्वीकारेण लिङादिःकार्यत्वेन घटादिकं ज्ञापयन्नपि यागविषयकं कार्यमिति यागान्वितकार्याभिधान-वेळायां घटादिद्रव्यगुणकर्मणामयोग्यत्वेन बाधादपूर्व एव पर्यवस्यति। यथा वह्नित्वेन गृहीतसम्बन्धोपि धूमादिः पर्वतादिनिष्ठः पर्वतीयवह्नावेव पर्यवस्यति। यथा वा न्यायमते कार्यत्वं कर्तृमात्रे सम्बन्धग्रहात्

कर्तृविशेषे पर्यवस्यति। पक्षधर्मताबलात्तद्वदिति भावः।

स्यादेवं यदि त्वदुक्तरीत्या पौर्वापर्येणत्यागः न चैवं किं तु युगपदेव पूर्वम्पश्चाद्वेति न पक्षद्वयमपि युक्तमित्याह ॥ **क्रियावदिति** ॥ **क्रमेणेति** ॥ शक्तिग्रहकाले क्रियाया यागविषयकं कार्यमित्यन्विताभिधानकाले घटादेरिति क्रमेण त्यागायोगेनेत्यर्थः ॥ **द्वयोरपीति** ॥ क्रियाया इव घटादेरपि पूर्वं शक्तिग्रहकाल एवेत्यर्थः। पश्चादन्विताभिधानकाले ॥ **त्यागे चेति** ॥ कार्यत्वेनानवगमे चेत्यर्थः।

॥ **शक्यत्वादिति** ॥ शक्तिग्रहकाले क्रियात्यागाभावेन घटादिसाधारणेन कार्यत्वेन क्रियायामपि शक्तिग्रहादिति भावः ॥ **नित्यस्थळ इति** ॥ अहरहः सन्ध्यामुपासीतेत्यादावित्यर्थः। न कलञ्जं भक्षयेदित्यादिनिषेधस्थळ इत्यर्थः। तत्र कामाश्रवणेन काम्यव्यवहितत्वरूपस्य कार्यत्वानवगमरूपक्रियात्यागहेतोरभावेनेत्यर्थः।

## तर्कताण्डवम्

**किं च क्रियायाम् यदभिन्नपदोपात्तस्वर्गकामान्वयानुपपत्तिधीः ततः प्रागेव प्रत्ययोपात्तस्य घटादेः प्रकृत्युपात्तयागविषयकत्वान्वयानुपपत्तिधीरिति घटादेरेव पूर्वं त्यागो युक्तः।**

**ननु तर्हि – तर्कितेऽपूर्वे व्युत्पत्तिरस्तु। तर्कश्च मन्मते स्मृतिरेव। सापेक्षज्ञानत्वस्यैव तल्लक्षणत्वात्। तर्कस्य च भाविप्रमाणसापेक्षत्वादिति चेन्न। ज्ञानस्यार्थप्रकाशात्मकत्वेन प्रकाशेऽन्यानपेक्षत्वात्। उत्पत्तौ च भाव्यपेक्षाया असम्भवात्।**

**किं च तर्कस्यापि यदि स्थायी व्यापारो न स्यात्तर्हि क्रियाया व्यवहितफलसाधनत्वं न स्यादित्येवं रूपतया फलसाधनत्वप्रतीत्यनन्तरभावित्वेनान्योन्याश्रयः।**

## न्यायदीपः

एतेनैकत्र निर्णीतः शास्त्रार्थोन्यत्रापि तथैवेति न्यायादत्राप्यपूर्वमेव लिङर्थ इति निरस्तम्। अपूर्वत्वेन शक्तेरग्रहणे कार्यत्वविशिष्ट एव धर्मिणि शक्तिग्रहात्। क्रियाया अपि कार्यत्वविशिष्टत्वेन तस्या एव कार्यत्वेन लिङर्थत्वसम्भवादिति। यत्तु क्रियायाः पूर्वं त्यागः पश्चाद्धटादेरिति तद्विपरीतमित्याह ।। **किञ्चेति** ।। **प्रत्ययोपात्तस्येति** ।। शक्तिग्रहकाले कार्यत्वेन रूपेण लिङ्प्रत्ययगृहीतस्येत्यर्थः।

प्रकारान्तरेणापूर्वोपस्थितिमाशङ्क्य निराह ।। **नन्वित्यादिना** ।। **तर्कित इति** ।। यदिस्थायी व्यापारो न स्यादिति वक्ष्यमाणतर्केणोपस्थित इत्यर्थः।

।। **मन्मत इति** ।। प्राभाकरमत इत्यर्थः। संस्काराजन्यत्वात्कथं स्मृतिरित्यत आह ।। **सापेक्षेति** ।।

।। **भावीति** ।। तर्को हि प्रमाणसहकारी। तच्च प्रमाणमनुमानमर्थापत्त्यादिर्वा। प्रकृते च प्रसिद्धार्थस्वर्गकामान्वयानुपपत्तिरूपभाविप्रमाणसापेक्षस्तर्क इत्यर्थः। अर्थविषयकरणेऽन्यसापेक्षत्वमुत स्वोत्पत्ताबाद्य आह ।। **ज्ञानस्येति** ।।

अन्त्य आह ।। **उत्पत्तौ चेति** ।। **अन्योन्याश्रय इति** ।। फलसाधनत्वप्रतीत्यनन्तरं तदुपजीवनेन तर्कप्रवृत्तिः। तर्केण चापूर्वोपस्थितौ तद्द्वारा फलसाधनत्वप्रतीतिरित्यन्योन्याश्रय इत्यर्थः।

## तर्कताण्डवम्

**अपि चान्वयप्रयोजकरूपस्य स्थायिव्यापारस्य तर्केण प्रयोगेन वोपस्थितौ तद्द्वारा क्रियायामेव कार्यत्वान्वयसम्भवादपूर्वस्य वाच्यत्वं न सिध्येत्।**

**किञ्च न केवलमपूर्वे व्युत्पत्तिविरहः। किन्तु लोकसिद्ध-प्राथमिकक्रियाकार्यव्युत्पत्तिविरोधोऽपि।**

## न्यायदीपः

तर्केणापूर्वोपस्थितिः त्वन्मतप्रतिकूलेत्याह ॥ **अपि चेति** ॥ क्रियायां फलसाधनत्वान्वये कार्यत्वान्वये वा प्रयोजकरूपस्येत्यर्थः। काम्यव्यवहितक्रियायां कार्यत्वाद्यन्वयस्य स्थायिव्यापारनिमित्तत्वात्तस्य च सम्भवेन लिङ्वाच्यत्वमपूर्वस्य न सिध्येत्। क्रियायाः कार्यत्वान्वयार्थतयैव स्थायिव्यापारोपस्थित्यर्थमपूर्वस्य लिङ्वाच्यकल्पनादिति भावः।

एवमपूर्वे लिङो व्युत्पत्तिराहित्यमुक्त्वा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थव्युत्पत्तिविरोधरूपदोषान्तरं चाह ॥ **किञ्चेति** ॥

॥ **लोकसिद्धेति** ॥ लोके पचेतेत्यादौ कार्ये धर्मिणि न शक्तिग्रहः किं त्वन्यलभ्ये कार्यत्व एव। धर्मिणः पाकादेर्धातुनैवोपस्थितिसम्भवात्। क्रियाकार्यत्वस्य चान्विताभिधानलभ्यत्वादिति त्वया स्वीकृतत्वेन पचेतेत्यादौ पाकरूपक्रियाकार्येत्येवंरूपायाः क्रियायाः कार्यव्युत्पत्तिर्लोकसिद्धा। प्राथमिकी च। तद्विरोधोपीत्यर्थः।

तस्मादयोग्यतया क्रियानिरासानन्तरं तदतिरिक्त एव शक्तिकल्पनमित्यादिना मणौ पूर्वपक्षोक्तं व्युत्पत्तिविरोधाभावमाशङ्क्यनिराह ॥ **नन्विति** ॥

## तर्कताण्डवम्

**ननु – लोकव्युत्पन्नकार्यत्वमत्युक्त्वैव तदनुकूलो धर्मी स्वीकृत इति न तद्विरोध इति चेन्न। तत्र स्वीकृतस्य कार्यत्वस्य इहात्यागेपि तत्र स्वीकृस्य धर्म्यंशस्येहास्वीकृतत्वेन तद्विरोधतादवस्थ्यात्।**

**किं च तत्र स्वीकृतस्य कार्यत्वं लिङ्शक्यम् कार्यत्वत्वं तु शक्यतावच्छेदकमित्यस्येह कार्यं शक्यं कार्यत्वं शक्यतावच्छेदकमिति वदता त्यक्तत्वेन स्वीकृतत्यागोऽप्यस्त्येव।**

## न्यायदीपः

**॥ तदनुकूल इति ॥** कार्यत्वान्वयानुकूलोपूर्वाख्योधर्मी वेदे स्वीकृत इत्यर्थः। धात्वर्थो यागादिस्तु कामी हि काम्यादन्यदित्याद्युक्तदिशा कार्यत्वाननुकूल इति भावः **॥ स्वीकृतस्येति ॥** लिङर्थत्वेनेति योज्यम्।

**॥ धर्म्यंशस्येति ॥** अपूर्वाख्यस्येत्यर्थः। ननु लोकेऽस्वीकृतस्येह स्वीकारेऽपि तत्र स्वीकृतस्येह त्यागोनास्त्येवेत्यतः सोप्यस्तीत्याह **॥ किं च तत्रेति ॥** लोक इत्यर्थः **॥ इहेति ॥** वेद इत्यर्थः **॥ शक्यमिति ॥** लिङ इत्यनुषङ्गः।

## तर्कताण्डवम्

**न च वैदिकव्युत्पत्तिविरोधात्क्रियाकार्य एव लिङ् लाक्षणिकोस्त्विति वाच्यम्। मद्रीत्या लोके वेदे च मुख्यत्वसम्भवे तदयोगात्। लोकवेदाधिकरणन्यायेन व्युत्पत्तौ लोकस्यैवोपजीव्यत्वेन वैपरीत्यस्यैवोचितत्वाच्च। न ह्यत्र स्वर्गशब्दस्य प्रीतिविशेषे यन्न दुःखेन सम्भिन्न-मित्यादिवाक्यशेषेणेव लिङोपूर्वे केनचिद्वाक्येन शक्ति-र्बोधिता।**

## न्यायदीपः

ननु यथा स्वर्गपदस्य–

> ''यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
> अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्''

इति वाक्यशेषादलौकिकसुखे गृहीतव्युत्पत्त्यनुरोधेन चन्दनखण्डादौ लोके स्वर्गपदस्यामुख्यता; यथा वा यवादिशब्दस्यार्यप्रसिद्ध्या दीर्घशूकादौ गृहीतशक्त्यनुरोधेन च प्रियङ्ग्वादावमुख्यत्वं एवं वेदे

लिङादेरपूर्वे गृहीतव्युत्पत्त्यनुरोधेन लोके लिङ् अमुख्योस्तु। तथा च न लोकव्युत्पत्तिविरोध इत्याशङ्क्याह ॥ **न चेति** ॥ क्रिया कार्य एव क्रियारूपकार्य एवेत्यर्थः ॥ **मद्रीत्येति** ॥ इष्टसाधनत्वमेव लिङर्थ इति मद्रीत्येत्यर्थः।

॥ **लोकवेदेति** ॥ आद्यस्य तृतीये पादे "प्रयोगचोदनाभावादर्थैकत्वमाविभागादि" इति दशमेधिकरणे चिन्तितः लोके प्रयुज्यमानगोब्राह्मणादिशब्देभ्यस्तदर्थेभ्यश्चवेदे प्रयुज्यमानगवादि-शब्दास्तदर्थाश्चान्ये उताभिन्ना इति सन्देहे स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानाध्याया-दिधर्मभेदात्क्रमभेदात्स्वरुयूपाद्यपूर्वशब्दसाहचर्याच्च शब्दानामन्यत्वं तत एवार्थानामपीति प्राप्ते प्रत्यभिज्ञाबलेन वर्णानां तदात्मकपदानामुभयत्राभेदावगमाद्वैदिकशब्दानामन्यत्वे लौकिकव्यवहार-विषयत्वेन वृद्धव्यवहाराधीनव्युत्पत्त्यसम्भवेन तेषामर्थाप्रत्यायकत्वापाताच्चानन्यत्वमेव लोकवेदशब्दानां तदर्थानां चेत्ति सिद्धान्तयति। तत्रोक्तेन लौकिकवैदिकशब्दानामभेदोपपादकेन लौकिकव्युत्पत्त्यनुसरणन्यायेनेत्यर्थः ॥ **वैपरीत्यस्येति** ॥ लोके व्युत्पत्तिविरोधेन वेद एव लक्षणास्वीकाक्षरस्येत्यर्थः।

ननु – स्वर्गादिशब्दव्युत्पत्तेरिव वैदिकव्युत्पत्तेर्बलत्त्वमित्यत आह ॥ **न हीति** ॥ अत्र वेदे प्रतीतसुखविशेष इत्यर्थः

## तर्कताण्डवम्

**नापि यववराहादिशब्दानां दीर्घशूकादाविव लिङः स्थायिकार्य एवार्यप्रयोगप्राचुर्यमस्ति। येन शक्तिः सिध्येत्। श्रौतस्य कामिनियोज्यान्वयस्यानुपपत्तिस्तु न शक्तिग्राहिका। किं त्वपूर्वे तात्पर्यग्राहिका। तात्पर्यं च लक्षणयापि युक्तम्। अन्यथा गङ्गाशब्दस्य तारे, आदित्यो यूपो यजमानः प्रस्तर इत्यादावादित्य यजमानादिशब्दानां यूपप्रस्तरादौ च, शक्तिः स्यात्।**

**एतदप्युक्तं, लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति। न**

त्वपूर्वम्। तत्र लिङादेः शक्तिग्रहायोगादित्यर्थः।

लिङादेरपूर्वे व्युत्पत्तिभङ्गः ॥ ४२॥

## न्यायदीपः

॥ **नापि यववराहेति** ॥ तत्रैव "तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्याद्" इति पञ्चमोधिकरणे "यवमयश्चरुर्भवति, वाराही उपानहावुपमुञ्चते" इत्यादौ श्रुतयववराहादिशष्दाः किं म्लेच्छप्रसिद्ध्यनुसारेण प्रियङ्ग्वाद्यर्था उतार्यप्रसिद्ध्यनुरोधेन दीर्घशूकार्थका इति सन्देहे शब्दार्थ-निर्णयस्य लोकप्रमाणकत्वाद्विरोधाभावाच्च उभयार्था इति प्राप्ते आर्यप्रसिद्धेरविप्लुतत्वेन बलवत्त्वात् तदनुरोधेन दीर्घशकूादौ गृहीतव्युत्पत्त्येर्बलवत्त्वात्तद्विरोधेन म्लेञ्छव्यवहारसिद्धा प्रियङ्ग्वादि-व्युत्पत्तिरमुख्येति सिद्धान्तितम्। नह्येवं प्रकृतेस्तीत्यर्थः।

नन्विहाप्यर्थापत्तिरेवापूर्वशक्तिग्रहे प्रमाणमित्यत आह ॥ **श्रौतस्येति** ॥ प्रकृत्यवगत-यागादाविति योज्यम्॥ **न शक्तीति** ॥ अपूर्वे शक्तिग्राहिका नेत्यर्थः ॥ **शक्तिः स्यादिति** ॥ न चेष्टापत्तिः। तथात्वे "तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया" दिति सूत्रेगौणतोक्तिविरोध इति भावः।

लिङादेरपूर्वे व्युत्पत्तिभङ्गः ॥ ४२॥

***

## ४३. अथ पण्डापूर्वभङ्गः।

### तर्कताण्डवम्

**किं चैवं नित्यस्थळे, न कलञ्जं भक्षयेदित्यादि-निषेधस्थळे च, त्वदभिमतं पण्डापूर्वं न सिध्येत्। लोके क्रियाकार्यत्वे शक्तेर्गृहीतत्वान्नित्यादिस्थळे च कामाधिकार इव योग्यताया अभावात्क्रियाया एव च पण्डापूर्ववच्छ्रुति-**

**बलादलौकिकेष्टसाधनत्वकल्पनात्। क्रियाकार्यत्वस्यैव लिङर्थत्वसम्भवात्। तस्य लिङ्वाच्यत्वं दूरापास्तम्। स्वीकृतं च त्वया सन्ध्यानुपास्तिजन्यस्य कलञ्जभक्षणजन्यस्य च दुरितापूर्वस्यावाच्यत्वेपि सन्ध्योपास्तिजन्यस्य कलञ्ज-भक्षणान्निवृत्तिरूपव्यापारजन्यस्य चापूर्वस्य लिङ्वाच्यत्वम्।**

## न्यायदीपः

अन्यथानुपपत्त्याऽपूर्वस्य लिङ्वाच्यत्वे बाधकान्तरमाह ।। **किं चैवमिति** ।। कामिनियोज्या-न्वयानुपपत्त्या अपूर्वस्य लिङ्वाच्यत्व इत्यर्थः ।। **त्वदभिमतमिति** ।। सन्ध्योपासनविषयं कार्यं कलञ्जभक्षणाभावविषयकं कार्यमिति यत्फलाजनकमपूर्वं त्वदभिमतं तन्न सिध्येदित्यर्थः।

कुत इत्यतः क्रियाकार्यत्वस्यैव लिङर्थत्वसम्भवादिति वक्ष्यमाणहेतुनाऽन्वयः। कथमित्यतः लोके क्रियायाः कार्यत्व एव लिङर्थत्वग्रहात् तदपवादकस्य चेहाभावात् सन्ध्योपासनादिकं कार्यं कलञ्जभक्षणादिकं न कार्यं कलञ्जभक्षणाभावः कार्य इति वा व्युत्पत्तिग्रहसम्भवादिति भावेनाह ।। **लोक इति** ।। क्रियारूपकार्य इत्यर्थः।

।। **कामाधिकार इवेति** ।। ''यजेत स्वर्गकाम'' इत्यादा-विवेत्यर्थः। तत्र फलाश्रवणेन कामिनियोज्यान्वयानुपपत्त्यभावेन कार्यत्वान्वयायोग्यताया अभावादित्यर्थः।

नन्वपुमर्थे पुमर्थासाधने च कथं कृतिसाध्यत्वरूपकार्यत्वबुद्धिरित्यत आह ।। **क्रियाया एवेति** ।। **क्रियाकार्यस्येति** ।। क्रियारूपकार्यस्येत्यर्थः ।। **दूरपास्तमिति** ।। अपूर्वे सति तस्य लिङ्वाच्यत्वं सिद्ध्येत्। तस्यैवासिद्धौ लिङ्वाच्यत्वं दूरनिरस्तमित्यर्थः। मास्तु नित्यादिस्थळेऽपूर्वस्य लिङ्वाच्यत्वमित्यतोऽपसिद्धान्त इति भावेनाह ।। **स्वीकृतं चेति** ।।

## तर्कताण्डवम्

**न चैकत्र निर्णीतः शास्त्रार्थ इति न्यायस्यायं विषयः। कामाधिकारे लक्षणादिनाऽप्यपूर्वपरत्वोपपत्त्याऽपूर्वे शक्तेर-**

**निर्णयादित्युक्तत्वात्। न चैकत्रानुपपत्त्यालाक्षणिकार्थो गृहीत इति तदभावेऽपि सः। अवगोरणवाक्येपि दुरितापूर्वस्याऽग्नेयादिवाक्ये उत्पत्त्यपूर्वस्य च लिङर्थत्वापातात्।**

## न्यायदीपः

ननु काम्यस्थळेऽपूर्वस्य लिङ्वाच्यत्वसिद्धौ नित्यादिस्थळेऽपि तथात्वं न्याय्यमेवेति शङ्कां निराह ॥ **न चेति** ॥ **उक्तत्वादिति** ॥ लोकवेदाधिकरणन्यायेनेत्यादिना ग्रन्थेनोक्तत्वादित्यर्थः।

ननु मास्तु नित्यादिस्थळे शक्त्याऽपूर्वसिद्धिः, लक्षणयैव पण्डापूर्वलाभोस्त्वित्यतो लक्षणाबीजाभावादयमपि पक्षो न युक्त इत्याह ॥ **न चैकत्रेति** ॥ काम्यस्थळे कामिनियोज्यान्वयानुपपत्त्येत्यर्थः।

अनुपपत्त्यभावेपि एकत्र निर्णीतन्यायेन लक्षणयाऽपूर्वस्य लिङर्थत्वेऽतिप्रसङ्गमाह ॥ **अवगोरणेति** ॥ "यो ब्राह्मणायावगुरेत्तं शतेन यातयादि" इत्यत्र "हेतुहेतुमतोर्लिङित्युक्तलिङ्प्रत्ययबलेनावगोरणस्य कालान्तरभाविशतयातनारूपनरकहेतुत्वावगमेन तदन्यथाऽनुपपत्त्याऽपूर्वं कल्प्यते, तथाऽऽग्नेयादावपि फलापूर्वस्य लिङ्वाच्यत्वेप्युत्पत्त्यपूर्वाणि कल्प्यन्त इति तवाङ्गीकारो न युक्तः स्यात्। तत्राप्यपूर्वं लिङर्थः इत्येव स्यादित्यर्थः।

## तर्कताण्डवम्

**किं चास्तु कामाधिकारे क्रियाऽतिरिक्तस्थायिकार्ये शक्तिग्रहः, तथाऽपि नित्यादिस्थळे क्रियातिरिक्तः क्रियाजन्यः स्थायी यागध्वंसो वा द्रव्ये स्वत्वध्वंसादिर्वोपात्तदुरितक्षयादिकं वा लिङ्वाच्यम्। तेन च यागध्वंसादिना धात्वर्थस्य निरूपकत्वेनान्वयः। श्रुत्युक्तत्वात्। पण्डापूर्वमिव ध्वंसादिकमेवालौकिकेष्टमित्यस्तु।**

**युक्तं चैतत्। ध्वंसस्य नित्यत्वेन पण्डापूर्व इवात्र निव-**

**र्तकान्वेषण क्लेशाभावात्। एतदप्युक्तमिष्टसाधनत्वमेवेति। न तु पण्डापूर्वमित्यर्थः।**

**पण्डापूर्वभङ्गः ॥४३॥**

## न्यायदीपः

**॥ किं चास्त्विति ॥** काम्यस्थळेपि यागादिध्वंसस्य स्थायिव्यापारत्वे "नन्वस्तु यागादिध्वंस एव" इत्यादिना वक्ष्यमाणदोषादस्तु तत्रस्थायिकार्ये शक्तिग्रह इत्युक्तम्॥ **द्रव्य इति ॥**

"यावज्जीवं दर्शपूर्णमासाभ्यां यजेत"

इत्यादिवाक्योक्ते नित्ये दशपूर्णमासादौ यद्द्रव्यं पुरोडाशाज्यदध्यादि, तस्येदं न ममेति यत्स्वत्वत्याग-रूपस्वत्वध्वंसः तदादिकमित्यर्थः। मन्त्रोच्चारणध्वंसादिरादिपदार्थः। सन्ध्योपासनादौ, "आपः शुद्ध्यन्तु मैनसः" इत्यादिनोपात्तदुरितक्षयादिकं वेत्यर्थः।

**॥ तेन चेति ॥** लिङ्गावाच्येन चेत्यर्थः। धात्वर्थस्य यागादेः। को विशेषोस्मिन् पक्ष इत्यत आह **॥ युक्तं चेति ॥ निवर्तकेति ॥** जन्यस्य भावस्य निवृत्तिनियमादपूर्वस्य च कर्मनाशिनी संस्पर्शाद्यभावे सति फलैकनाश्यत्वनियमात्। नित्यादौ च फलाभावान्निवर्तकान्वेषणप्रयासः स्यात्। न तु ध्वंस इत्यर्थः।

पण्डापूर्वभङ्गः ॥४३॥

***

## ४४. अथ न्यायमतेऽपूर्वस्य कल्प्यत्वभङ्गः।

### तर्कताण्डवम्

**न्यायमते त्वपूर्वस्य कल्प्यत्वमयुक्तम्। पूर्वं प्रतीतेन हि**

यागस्य स्वर्गसाधनत्वेनापूर्वं कल्प्यम्। तच्च तन्मते न युक्तम्। कारणत्वं हि तन्मतेऽनन्यथासिद्धनियतपूर्ववृत्तित्त्वम्। तच्च रासभादौ कारणत्वाभावायाव्यवहितनियतपूर्ववृत्तित्वं वाच्यम्। अव्यवहितत्वविशेषणाभावे रासभादेरपि हेतुत्वापातात्।

एवं च कारणत्वान्तर्गताव्यवधानशरीर एव प्रविष्टस्य अपूर्वस्य कारणत्वबोधकेन शब्देनैवोक्तत्वात्कथमपूर्वस्य कल्प्यत्वम्। विस्तृतं चैतच्छक्तिवादे।

न्यायमतेऽपूर्वस्य कल्प्यत्वभङ्गः ॥ ४४॥

## न्यायदीपः

स्वमतेऽपूर्वस्य कल्प्यत्वं युक्तमिति वक्तुं — यत्तु मणौ प्रतीता च स्वर्गसाधनता साक्षादसाधनस्य यागस्य व्यापारमन्तरेणानुपपत्त्या स्वर्गनिर्वाहकव्यापारं कल्पयतीत्यादिना पूर्वस्य कल्प्यत्वमुक्तम्। तत्तावन्निराह ॥ **न्यायेति** ॥

॥ **रासभादेरिति** ॥ तस्य घटादिकं प्रति हेतुत्वाभावो न तावदनन्यथासिद्धत्वाभावेन तथात्वे नियत पदवैयर्थ्यात्। क्लृप्तकारणसहभूतत्वाभावरूपानन्यथासिद्धत्वस्य रासभेपि सत्त्वाच्च। नापि नैयत्याभावेन। व्यक्त्यपेक्षया नियमस्य दण्डादावप्यभावात्। जात्यपेक्षया नियमस्य च घटजातीयं प्रति दण्डजातीयस्येव रासभजातीयस्य व्यवहितपूर्ववृत्तित्वनियमसम्भवात्। अव्यवहित-पूर्ववृत्तित्वनियमविशेषणमावश्यकमेवेति भावः।

॥ **शक्तिवाद इति** ॥ शक्तावर्थापतिपञ्चकोक्तिप्रस्तावे किञ्चानन्यथासिद्धनियतपूर्ववृत्तित्वं रासभादौ तदभाव इत्यादौ ग्रन्थेन विस्तृतमित्यर्थः।

न्यायमतेऽपूर्वस्य कल्प्यत्वभङ्गः ॥ ४४॥

* * *

## ४५. अथ स्वमतेऽपूर्वस्य कल्प्यत्वसमर्थनम्।

### तर्कताण्डवम्

मम त्वनन्यथासिद्ध नियतपूर्ववृत्तित्वं न कारणत्वम्। घटमनुत्पाद्य नष्टेपि दण्डे कारणत्वव्यवहारात्। कारणं हि सन्निधाप्यते। नतु सन्निधानात्कारणम्। नापि सहकारि-विरहप्रयुक्तकार्याभाववत्वं कारणत्वम्। यागे तस्य असम्भवात्। वैदिकस्य साङ्गप्रधानकर्मणः फलोत्पादने स्वानिष्पाद्यान्यानपेक्षत्वात्। किं तु शक्त्याख्यमतीन्द्रियं धर्मान्तरम्।

उक्तं चैतच्छक्तिवादे। तच्च क्वचिदन्वयव्यतिरेकाभ्या-मुन्नीयते। क्वचिच्छब्देन। तदाश्रयस्य शक्तस्य कार्य-कादाचित्कत्वनियामकत्वेन व्यवहितस्य जनकत्वे कार्य-सातत्यापत्तेरव्यवधानमावश्यकम्। तच्चाव्यवधानं चिर-ध्वस्तस्य यागस्य साक्षान्न सम्भवतीति व्यापारद्वारेण अव्यवधानं वक्तव्यमिति युक्तं द्वारीभूतस्यापूर्वस्य कल्पनम्।

स्वमतेऽपूर्वस्य कल्प्यत्वसमर्थनम् ॥ ४५॥

### न्यायदीपः

॥ **मम त्विति** ॥ युक्तं द्वारीभूतस्यापूर्वस्य कल्पनमित्यन्वयः। मत इति पूर्वस्माद् विभागेनानुषङ्गः। कथमित्यतः कारणत्वान्यथानुपपत्तिरूपयुक्तिं वक्तुं कारणत्वनिर्धारणाय प्रसक्तप्रतिक्षेपं करोति ॥ **अनन्यथेत्यादिना** ॥ यद्वा मम त्वित्यस्य सन्निहितेनाप्यन्वयः।

नन्वनुत्पादकदण्डे कथं कारणत्वव्यवहारः कार्यसन्निधेरभावात्। सन्निहितस्यैव कारणत्वा-

दित्यत आह ॥ **कारणं हीति** ॥ **न त्विति** ॥ अन्यथा रासभादेरपि कारणतापत्तेरिति भावः ॥ **शक्तिवाद इति** ॥ शक्तावर्थापत्तिपञ्चकोक्तिप्रस्ताव इत्यर्थः ।

कथं तज्ज्ञानमित्यत आह ॥ **तच्च क्वचिदिति** ॥ दण्डादौ ॥ **क्वचिच्छब्देनेति** ॥ ईश्वरधर्माधर्माद्यतीन्द्रिये "पराऽस्य शक्तिः, यजेत स्वर्गकामः" इत्यादिशब्देनेत्यर्थः । तदाश्रयस्येतस्यैव निर्देशः ॥ **शक्तस्येति** ॥ दण्डादेरित्यर्थः ॥ **कार्येति** ॥ कार्यस्य कादाचित्कत्वं कार्यकादाचित्कत्वं तन्नियामकत्वमित्यर्थः । कार्यसान्तत्यं कार्यस्य सन्ततत्वम् ।

स्वमतेऽपूर्वस्य कल्प्यत्वसमर्थनम् ॥ ४५ ॥

* * *

## ४६. अथ यागध्वंसस्य यागव्यापारत्वभङ्गः ।

### तर्कताण्डवम्

**ननु– अस्तु यागध्वंस एव यागस्य व्यापारः । यागजन्यत्वान्नत्वपूर्वम् । क्लृप्तस्य ध्वंसस्य फलजनकत्वमात्रकल्पने लाघवात् । अपूर्वस्य तु स्वरूपमपि कल्प्यम् ।**

**न च प्रतियोगिध्वंसयोः कथमेकत्रापेक्षा, विरोधादिति वाच्यम् । व्यापारव्यापारिभावेनापेक्षायामविरोधात् । एककाल एव हि तयोरपेक्षा विरुद्धा । न तु कालभेदेऽपि ।**

### न्यायदीपः

कार्यकादाचित्कत्वनियामककारणव्यवधानस्यान्यथोपपत्तिरूपं तथापि ध्वंस एव व्यापारोस्त्वित्यादिना मण्युक्तचोद्यमाह ॥ **नन्वस्त्वित्यादिना** ॥

तज्जन्यत्वे सति तज्जन्यजनकत्वस्यैव व्यापारत्वादाह ॥ **यागेति** ॥ ध्वंसस्येति योज्यम्

**।। स्वरूपमपीति ।।** न केवलं जनकत्वमित्यपेरर्थः।

मण्युक्तसमाधिमाशङ्क्य निराह **।। न च प्रतियोगीति ।। तयोरपेक्षेति ।।** स्वर्गादिरूप-कार्यस्यैककालीनयागतद् ध्वंसविषयकापेक्षा जात्या विरुद्धा न तु भिन्नकालीनयोः तयोर्विषये अपेक्षेत्यर्थः।

## तर्कताण्डवम्

**न चैवं कारणीभूताभावप्रतियोगित्वेन यागस्य प्रतिबन्धकत्वं स्यादिति वाच्यम्। कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वापादने इष्टापत्तेः। कार्यानुकूलविघटकत्वरूपप्रतिबन्धकत्वापादनं तु न युक्तम्। प्रतिबन्धकत्वेन प्रतिबन्धकत्वापादनायोगादिति चेन्मैवम्।**

**ध्वंसस्यानन्तत्वेन फलानन्त्यापातात्। अपूर्वं तु फलविनाश्यम्।**

**न चापूर्वमप्यनन्तकालं स्थित्वाऽनन्तफलमुत्पादयत्विति वाच्यम्। फले कालनियमस्य श्रुतिसिद्धत्वात्।**

**न च ध्वंसस्यानन्त्येपि फलकालनियमः श्रुतिबलादेव अस्त्विति वाच्यम्। साङ्गवैदिककर्मजन्यव्यापरस्यापि स्वनिष्पाद्येतरापेक्षया फलजनकत्वे बहुवित्तव्ययायाससाध्ये वैदिके कर्मणि निष्कम्पप्रवृत्त्ययोगेन स्वानिष्पाद्येतरानपेक्षयैव फलजनकत्वे वक्तव्ये ध्वंसस्य व्यापारत्वे फलानन्त्ययस्य दुर्वारत्वेन कालनियमश्रुतिप्रामाण्यरक्षार्थमेव अपूर्वस्य कल्प्यत्वात्।**

यागध्वंसस्य यागव्यापारत्वभङ्गः ।। ४६ ।।

## न्यायदीपः

॥ **कारणीभूतेति** ॥ ध्वंसस्यापि व्यापारतया कारणत्वादिति भावः ॥ **प्रतिबन्धकत्वेनेति** ॥ कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकत्वरूपत्वात्तेनैव कार्यानुकूलकिञ्चिद्धर्मविघटकत्व-रूपप्रतिबन्धकत्वस्यापादने आपाद्यापादकाविशेष इत्यर्थः ॥ **आनन्त्येनेति** ॥ उत्तरावधि-शून्यत्वेनेत्यर्थः।

अपूर्वोपगमेपि स्यादयं दोष इत्यत आह॥ **अपूर्वं त्विति** ॥ प्रागभाववदिति भावः। उत्पत्तिमतो भावस्य विनाशनियमादिति दोषे सत्येव दोषान्तरमाह॥ **फल इति** ॥ **श्रुतीति** ॥ "अमृतो वा सोमपो भवति यावदिन्द्रो यावन्मनुः" इत्यादिश्रुतिसिद्धत्वादित्यर्थः।

स्वभावात्सावधिक-फलजनकत्वमिति मण्युक्तमाशङ्क्य निराह॥ **न च ध्वंसस्येति** ॥ **स्वा-निष्पाद्येतरोपक्षयेति** ॥ कालनियमबोधकश्रुत्यपेक्षयेत्यर्थः।

यागध्वंसस्य यागव्यापारत्वभङ्गः ॥ ४६ ॥

***

## ४७. अथ क्रियाजन्यापूर्वस्येश्वरप्रीतिहेतुत्वसमर्थनम्।

## तर्कताण्डवम्

**ननु – तर्हि देवताप्रीतिरेव यागव्यापारोस्तु। किमपूर्वेण। तस्याः क्लृप्तत्वेन धर्मिकल्पनात इति न्यायेन लाघवात्।**

**नच कल्पान्तरीयदेवताप्रीतेरतेत्कल्पकृतयागाद्यजन्य-त्वात् तया कल्पान्तरे फलं न स्यात्, एतत्कल्पीययागादि-जन्याया एव एतत्कल्पीयेन्द्रप्रीतेः कल्पान्तरेनुपयोगादु-पयुक्तायाश्च कल्पान्तरीयेन्द्रप्रीतेरेतत्कल्पकृतयागाद्य-**

**जन्यत्वादिति वाच्यम्। एतत्कल्पीयकर्मभिराराधितस्येन्द्राद्यन्तर्यामिणः परमेश्वरस्यैव कल्पान्तरे फलप्रदत्वादिति चेदुच्यते।**

### न्यायदीपः

अस्तु देवताप्रीतिरेव व्यापार इति मण्युक्तचोद्यमपूर्वकल्पकार्थापत्तेरन्यथोपपत्तिरूपमाशङ्कते **॥ ननु तर्हीति ॥** ध्वंसस्याव्यापारत्वेपीत्यर्थः **॥ एतत्कल्पीयेन्द्रेति ॥** कल्पभेदेनेन्द्रभेदादिति भावः **॥ परमेश्वरस्येति ॥** तस्य च सर्वकल्पीयेन्द्रादिदेवेष्वेकत्वादिति भावः। किं कर्मकृत्यव्यवहितकाले देवताप्रसादोत्पत्तिरुत फलाव्यवहितपूर्वकाले।

### तर्कताण्डवम्

**साङ्गप्रधानक्रियानुष्ठानानन्तरमेवेश्वरप्रीतिश्चेत्फले विलम्बो न स्यात्। परमस्वतन्त्रेश्वरप्रीतेः फलजननेऽन्यानपेक्षत्वात्। तथा च फलपर्यन्तस्थायिना क्रियाजन्येनापूर्वेण फलाव्यवहितपूर्वकाले ईश्वरप्रसादः सम्पाद्य इत्येव युक्तम्। अन्यथा प्रोक्षणावघातादेः सन्निपत्योपकारकस्य प्रयाजादेरारादुपकारकस्य समप्रधानेषु षड्यागेषु एकैकस्य चानुष्ठानानन्तरमेव तत्तदनुष्ठानप्रयुक्तेश्वरप्रीतिर्भवतीति वाच्यम्। तथा च साङ्गप्रधानकाम्यकर्मण्यसमाप्तेति प्रोक्षणादिजन्यप्रीतेरमोघत्वाद्यत्किञ्चित्फलं स्वीकार्यं स्यात्।**

### न्यायदीपः

आद्यं निराह **॥ साङ्गेति ॥** ननु कारणान्तरविलम्बादस्तु विलम्ब इत्यत आह **॥ परमेति ॥** एतेनोत्पन्नोपि परमेश्वरप्रसादः तदीयप्रारब्धकर्मणा प्रतिबद्ध इति प्रत्युक्तम्। तथात्वे सर्वस्वातन्त्र्य-

भङ्गात्। उक्तं च सुधायाम्,

"अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः"

इति श्लोकव्याख्यानावसरे "प्रारब्धकर्मप्रतिबद्धो भगवत्प्रसाद इति तु मन्दम्। अचेतनानां कर्मणां भगवत्प्रसादप्रतिबन्धकत्वायोगाद्" इत्यादि।

द्वितीयं परिशेषयति ॥ **तथाचेति** ॥ विलम्बायोगे सतीत्यर्थः ॥ **इत्येव युक्तमिति** ॥ एतेन यागस्य देवताप्रीतिहेतुत्वे मानाभावादिति मण्युक्तं निरस्तम्।

"तत्कर्म हरीतोषं यत्सा विद्या तन्मतिर्यया"

इति पुराणवाक्यस्य; फलमत उपपत्तेरित्यधिकरणोक्तन्यायस्य; "विज्ञानमानन्दं ब्रह्म, रातिर्दातुः परायणम्" इत्यादिश्रुतेः।

"स भगवान् स्वकृतेन तुष्येत्"

"कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः।
मध्यमः" . . . . . . . . . . . . . . . . . . ।

इत्यादिस्मृतेश्चमानत्वादिति भावः ॥ **अन्यथेति** ॥ कर्मोत्तरक्षण एव प्रसादोत्पत्तावित्यर्थः।

यागेषु हि द्विविधमङ्गम्। किं चित्सन्निपत्त्योपकारकं, किं चिदारादुपकारकम्। यागस्वरूपोत्पत्तौ व्याप्रियमाणं "व्रीहिन् प्रोक्षति", "व्रीहीनवहन्ती" इत्यादिवाक्योक्तप्रोक्षणावघातपेषणश्रपणादिकं सन्निपा त्यङ्ग्। यागस्वरूपनिर्वृत्त्यनन्तरं तेन स्वर्गादिफले जनयितव्ये सहकारिभूतं "समिधो यजति, तनूनपातं यजति, इडोयजती" इत्यादिवाक्योक्तप्रयाजादिशब्दितसमिद्यागादिकमारादुपकारकाङ्ग-मिति ध्येयम्।

अवघातादेः प्रयाजादेरित्यस्य तत्तदनुष्ठानेत्यनेनान्वयः ॥ **समप्रधानेष्विति** ॥ दर्शपूर्ण-मासाभ्यां स्वर्कामो यजेतेति फलवाक्ये दर्शपूर्णमासशब्दितानां "यदाग्नेयोष्टाकपाल" इत्यादिवाक्य-विहितानां षण्णामाग्नेयादीनां यागानामविशेषेण फलेहेतुत्वबोधनात् षडपि यागाः समाः प्रधानाश्च भवन्तीति समप्रधानेष्वित्युक्तम्।

॥ **असमाप्तेपीति** ॥ केन चित्प्रबलनिमित्तेन विघ्नितेऽपीत्यर्थः ॥ **किञ्चित्फलमिति** ॥ न चेष्टापत्तिः। अङ्गत्वव्याघातात्। फलवत्सन्निधावफलं तदङ्गमिति न्यायाविषयत्वात्काम्ये कर्मणि किञ्चिद्वैकल्येपि फलभावस्य षष्ठेध्याये तृतीयपादे द्वितीयाधिकरणे व्यवस्थापित्वेन तद्विरोधाच्चेति भावः।

## तर्कताण्डवम्

**किञ्चैवं भाविमहाप्रायश्चित्तं महापातकं च जानत ईश्वरस्य पूर्वेण निषिद्धकरणेन उत्तरेण विहितकरणेन च तत्कोपस्य प्रसादस्य चोत्पत्तावविवेकित्वं स्यात्।**

## न्यायदीपः

ननु—समाप्तकर्मस्थळ एवायं नियमः। असमाप्तप्रधानस्थळेऽनुष्ठिताङ्गानां फलोपगमेपि न दोषः। इति वदन्तं प्रत्याह ॥ **किञ्चैवमिति** ॥ कर्मकृत्युत्तरक्षण एव ईश्वरप्रसादाद्युत्पत्तावित्यर्थः ॥ **निषिद्धेति** ॥ कलञ्जभक्षणादिनिषिद्धकरणेन सन्ध्यावन्दनादिविहितकरणेन च कोपस्य प्रसादस्य चेत्यर्थः।

॥ **अविवेकित्वमिति** ॥ भाव्युपमर्दकज्ञानिनः तदुपमर्द्यपूर्वभाविनिषिद्धविहितकरणकृत-कोपप्रसादाभ्यामित्यर्थः। ततश्च किमित्यत आह ॥ **तस्मादिति** ॥

## तर्कताण्डवम्

**अपि च भोजनविषभक्षणयोरनुष्ठाने ताभ्यां तृप्तिमरणे भवतामितीश्वरेच्छाभावे तयोरनुत्पत्तेस्तृप्तिमरणे अपि भोजनाद्यजनकपुण्यापफले स्याताम्।**

## न्यायदीपः

कर्मणो विनैवापूर्वं प्रीत्यादिरूपेश्वरेच्छाविशेषव्यापारकत्वेऽतिप्रसङ्गान्तरमाह ॥ **अपि चेति** ॥ एवमित्यापादकांशस्यात्रोत्तरत्र चानुषङ्गो ध्येयः।

तृप्तिजनकं पुण्यं हि भोजनद्वारा तृप्तिं जनयति। पापं हि विषभक्षणमुत्पाद्य मृतिं जनयति। यदेश्वरेच्छाविशेषद्वारैव पुण्यापापयोस्तृप्तिमृतिहेतुत्वं तदा तृप्तिस्थळे मृतिस्थळे चेश्वरेच्छाया आवश्यकत्वात्तस्याश्च भोजनाद्यजनकपुण्यापापव्यापारत्वस्य वाच्यत्वाद्भोजनादिजनकपुण्यादेः भोजनादिव्यापारकत्वात्। तथाचेश्वरेच्छाजन्ये तृप्तिमरणे भोजनाद्यजनकपुण्यपापफले स्याताम्। अतः सत्यामपीश्वरेच्छायां भोजनादिजनकपुण्यादिफलत्वमेव तृप्त्यादेर्वाच्यम्। एवं स्वर्गो नरको वा भवत्वितीश्वरेच्छायां सत्यामपि शुभाशुभरूपापूर्वजनकविहितनिषिद्धफलत्वं स्वर्गनरकयोः वाच्यमिति भावः।

## तर्कताण्डवम्

**किञ्च–**

**''देहो ब्रह्मार्थेन्द्रियाद्याः क्रियाश्च**
**तथा दृष्टं पञ्चमं कर्महेतु''।**

**इत्यादिश्रुतौ ब्रह्मादृष्टशब्दाभ्यां;**

**''अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।**
**विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्''।**

**इत्यादिस्मृतौ च कर्तृदैवशब्दाभ्यामीश्वरादृष्टयोः पृथगुक्तिर्न स्यात्।**

## न्यायदीपः

श्रुतिस्मृतिबलाच्चादृष्टमीश्वरप्रीतिश्च द्वयमप्युपेयमित्याह ॥ **किं चेति** ॥ देह इत्युपलक्षणम्। भूम्यादिरपि ग्राह्यः। आद्यपदेन श्रुक्श्रुवादयो ग्राह्याः। क्रियाः हस्तादिचेष्टाः। हस्तादिक्रियाभिः होमादिकर्मजननात्। हेत्विति छान्दसो लिङ्गव्यत्ययः। हेतुरित्यर्थः।

॥ **श्रुताविति** ॥ अष्टादशे गीताभाष्योक्तायास्यश्रुतावित्यर्थः। अधिष्ठानं देहभूम्यादि कर्ता विष्णुः

करणमिन्द्रियश्चुक्श्रुवादयः चेष्टा हस्तादि क्रिया दैवमदृष्टम् इत्यादीत्यादिपदेन–

"शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः"।

इति वाक्यशेषग्रहः ।। **स्मृतौ चेति** ।। गीतायामन्तिमाध्यायोक्तस्मृतौ चेत्यर्थः ।। **ईश्वरादृष्टयोरिति** ।। प्रागुक्तश्रुतिसमाख्याबलात्कर्तृदैवपदयोरीश्वरादृष्टवाचकत्वाङ्गीकारावश्यम्भावादिति भाव।

**तर्कताण्डवम्**

**न हीश्वरोऽप्रसन्नः शुभहेतुः। अकुपितो वाऽशुभहेतुः।**

**किञ्च–**

**"अनादिकर्मभिर्बद्धो जीवः संसारमण्डले।
वासुदेवेच्छया नित्यं भ्रमतीह सुखेतरम्"।**

**इत्यादिश्रुतिषु कर्मशब्दार्थादृष्टेश्वरेच्छयोः पृथगुक्तिः,**

**"द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया"**

**इत्यादिस्मृतौ कर्मशब्दार्थस्यादृष्टस्येश्वरच्छाधीनत्वोक्तिः;**

**"कर्माणि तानि च पृथक्चेतनान्येव सर्वशः।
अचेतनशरीराणि स्वकर्मफलभाञ्जि च"**

**इत्यादिस्मृतिषु कर्मणामभिमानिचेतनोक्तिः; उपनिषत्सु सुवर्णमलदृष्टान्तेन, सर्पकञ्चुकदृष्टान्तेन, राहुचन्द्रदृष्टान्तेन, पुष्करपालाशदृष्टान्तेन च, सुवर्णमलादीनां सुवर्णाद्याश्रितत्ववत्कर्मणामपि जीवाश्रितत्वोक्तिः, स्मृतिषु "अपूर्वं यत्तत्क्रियाफलं धर्माख्यं परब्रह्मणि यज्ञपुरुषे भगवति वासुदेव**

एव भावयान'' इत्याद्युक्तिश्च; न स्यात्।

तस्मात्क्रियाजन्यापूर्वेणेश्वरप्रीतिर्भवतीत्येव युक्तम्।

क्रियाजन्यापूर्वस्येश्वरप्रीतिहेतुत्वसमर्थनम् ॥ ४७ ॥

## न्यायदीपः

नन्वेतावतेश्वरस्य हेतुत्वप्राप्तावपि तत्प्रीतिकोपयोरपि कथं हेतुत्वप्राप्तिरित्यत आह ॥ **न हीति** ॥ अदृष्टस्येश्वरेच्छायाश्च द्वयोरप्यावश्यकत्वमिति भावेन विपक्षेऽनेकस्पष्टवचनविरोधमप्याह ॥ **किश्चानादीत्यादिना** ॥ **इत्यादिस्मृतिष्विति** ॥ समयपादान्ते अनुव्याख्यानोक्तस्मृतिष्वित्यर्थः।

न च कर्मशब्दः क्रियावचन इति युक्तम् अनादित्वायोगात् आशुतरविनाशिनां प्रवाहतोप्यनादित्वायोगात् बद्ध इत्युक्त्ययोगाच्चेति भावेनाह ॥ **कर्मशब्दार्थादृष्टेति** ॥ उक्तिरित्येतेषां न स्यादिति वक्ष्यमाणेनान्वयः ॥ **कर्मेति** ॥ धर्माधर्माविति जिज्ञासाधिकरणसुधोक्त्यनुरोधेनाह ॥ **इत्यादिस्मृतौ कर्मशब्दार्थस्येति** ॥

भक्तिपादान्तेऽनुव्याख्यानोक्तस्मृतिमाह ॥ **कर्माणि तानि चेति** ॥ चेतनोक्तिरित्युपलक्षणम्। ब्रह्मपारस्तोत्रपठनेन ब्रह्महत्याया राजदेहान्निष्कान्तत्वाद्युक्तिश्चेत्यपि ध्येयम्। तस्य क्रियाजन्य-स्थाय्यपूर्वपक्ष एव सम्भवादिति भावः।

॥ **सुवर्णमलेति** ॥ वाजसनेये षष्ठे ''तद्यथा पेशस्करी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वा अन्यन्नवतरं कल्याणतरं रूपं कुरुत'' इति श्रुतवाक्यस्य;

''स्वर्णकारो यथा स्वर्णमलमग्नौ निहत्य च।
शुद्धेन तेन चात्मानं कुरुते रूपमञ्जसा।''

इत्यादिव्याख्यानादिति भावः ॥ **सर्पकञ्चुकेति** ॥ षट्प्रश्नोपनिषदि पञ्चमप्रश्नान्ते ''यथा पादोदरस्त्वचा विनिर्मुच्यते एव ह वै स पाप्मना विनिर्मुक्त'' इति श्रवणादिति भावः।

**॥ राहुचन्द्रेति ॥** छान्दोग्योपनिषद्यष्टमाध्यायान्ते "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी" इति श्रवणादिति भावः।

**॥ पुष्करपलाशेति ॥** छान्दोग्ये चतुर्थेऽध्याये "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत" इति श्रवणात्।

**॥ अपूर्वं यत्तदिति ॥** पञ्चमस्कन्धे सप्तमाध्याये भरतस्त्वित्युपक्रम्य "ईजे च भगवन्तं यज्ञपुरुषं क्रतुभिरुच्चावचैः श्रद्धयाऽऽहिताग्निरग्निहोत्रं दर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना सम्प्रचरत्सु नानायागेषु विरचितक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतयामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एवे" इति श्रुतगद्ये प्रकृतोपयुक्तपदानामेवोद्धारेण प्रदर्शनमिति नान्यथानुवाददोषः शङ्क्यः।

क्रियाजन्यापूर्वस्येश्वरप्रीतिहेतुत्वसमर्थनम् ॥ ४७ ॥

* * *

## ४८. अथ सन्ध्यावन्दनाद्यकरणे दुरितसमर्थनम्।

### तर्कताण्डवम्

**ननु क्षणिकब्रह्महत्यादिक्रियायाः कालान्तरीयनरकजनकत्वार्थं तत्र दुरितापूर्वं कल्प्यताम्। सन्ध्यावन्दनादिनित्याकरणे तु कथं दुरितकल्पनम्। सन्ध्याकालीनं यत्करणं तदभावस्य च स्थायितया नरकार्थं दुरितानपेक्षणात्।**

**यत्तु–**

**"नोपतिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम्।<br>स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः"**

**इत्यादौ नञर्थस्याभावस्य प्रतियोगिन्युत्कटाकाङ्क्षत्वादौ करणेनान्वयः। अनन्तरं करणविशिष्टस्याभावस्य सन्ध्याकालेनान्वयः। न तु अभावोपसर्जनस्य करणस्य। तथा च सन्ध्याकालीनस्य करणाभावस्यास्थायित्वाद्दुरितं कल्प्यमिति।**

**तन्न। कारीर्या आसन्नसमयोपलक्षितवृष्टेरेव फलत्ववदिहापि सन्ध्याकालोपलक्षितस्याकरणस्यैव हेतुत्वात्तस्य च स्थायित्वेन दुरितानपेक्षणादिति चेन्मैवम्।**

**सन्ध्योपलक्षितमकरणं हि नतावदनित्यम्। निवर्तकाभावात्। निर्वर्तकं हि नैतत्कालीनं करणम्। तदसम्भवात्। नाप्यन्यकालीनकरणम्। अविरोधात्। अविहितकाले सन्ध्योपासनेपि नरकानुत्पत्तिप्रसङ्गात्। अकरणस्य नित्यत्वे तु यागे यागध्वंसस्य व्यापारत्वपक्ष इवात्राप्यकरणस्यानन्त्यात् फलानन्त्यं स्यात्।**

## न्यायदीपः

एवं क्रियासर्वसाधारण्येनापूर्वं समर्थ्य नित्याकरणस्थळेऽप्यपूर्वं साधयितुमाक्षिपति ॥ **नन्वित्यादिना मैवमित्यन्तेन** ॥ पूर्ववादिमुखेनैव पक्षान्तरमनूद्यापाकरोति ॥ **यत्त्विति** ॥ नोपतिष्ठति नोपतिष्ठते। छान्दसं परस्मैपदम्। पूर्वां सन्ध्यामिति योज्यम् ॥ **प्रतियोगिनीति** ॥ उपतिष्ठत्युपास्त इतिपदद्वयोक्तानुष्ठानरूपप्रतियोगिनीत्यर्थः।

॥ **करणेनेति** ॥ सन्ध्यानुष्ठानेनेत्यर्थः ॥ **करणविशिष्टस्येति** ॥ सन्ध्यानुष्ठाननिरूपितस्य अभावस्येत्यर्थः ॥ **सन्ध्याकालेनेति** ॥ सन्ध्याकालीनो यः सन्ध्यानुष्ठानाभाव इत्यन्वय इत्यर्थः।

॥ **अभावेति** ॥ अभावं प्रति प्रतियोगितया गुणभूतस्य सन्ध्यानुष्ठानस्य सन्ध्याकालेन

सन्ध्याकालीनं यदनुष्ठानभित्यन्वयोनेत्यर्थः। करणस्योपसर्जनत्वादभावस्यैव प्राधान्यादिति भावः।

अस्त्वेवं त्वदुक्तन्यायेनाभावस्यैव सन्ध्याकालेनान्वयः तथापि स कालो न विशेषणं येनास्थायित्वं तद्विशिष्टाभावस्य स्यात्। किं तूपलक्षणमेवातो नास्थिरत्वमभावस्येति भावेनाह ॥ **कारीर्यामिति** ॥ "वृष्टिकामः कारीर्या यजेते" इति वाक्योक्तकारीरिनामकेष्टौ यथा अव्यवहितकालोपलक्षितवृष्टिफलकत्वं न तु तत्कालविशिष्टवृष्टिफलकत्वं तथेत्यर्थः।

॥ **अकरणस्यैव** ॥ करणाभावस्यैवेत्यर्थः। एवशब्दस्योपलक्षितस्यैवेत्यन्वये तात्पर्यम्। नरकरूपफलस्य निरवधिकत्वापत्त्या ना भावस्य नरकहेतुत्वम्। किं तु तज्जन्यं सावधिकफलजनकमपूर्वमेव कल्यमिति भावेन तद्दोषदार्ढ्यार्थं तदनित्यत्वपक्षं तावन्निराह ॥ **सन्ध्येति** ॥ सन्ध्याकालोपलक्षितं सन्ध्यादिनित्यकर्माननुष्ठानमित्यर्थः।

॥ **एतत्कालीनमिति** ॥ सन्ध्याकालीनमित्यर्थः ॥ **असम्भवादिति** ॥ तत्काले विद्यमानस्य अकारणस्य तत्कालीनकरणेन निवृत्तेरयोगादित्यर्थः। एकस्मिन्नेव काले करणाकरणयोरयोगादिति भावः ॥ **नरकानुत्पत्तिप्रसङ्गादिति** ॥ तदापादकस्य विहितकालसन्ध्याननुष्ठानस्य अविहितकालीनानुष्ठानेन निवर्तितत्वादिति भावः ॥ **यागध्वंसस्येति** ॥ प्राग्व्यक्तमेतत्।

## तर्कताण्डवम्

**किञ्च दुरितापूर्वाभावे प्रायश्चित्तवैयर्थ्यम्। दुरितापूर्वान्यस्य तन्निवर्त्यस्याभावात्।**

**न च प्रायश्चित्ताभावसहकृतमेवाकरणं नरकहेतुः। ब्रह्महत्यादावपि तत्प्रसङ्गादिति दिक्।**

**सन्ध्यावन्दनाद्यकरणे दुरितसमर्थनम् ॥४८॥**

## न्यायदीपः

ननु नरकस्य सावधिकत्वोक्तिपरवचनबलान्नित्यस्याप्यकरणस्य सावधिकफलजननस्वभावः

कल्प्यत इत्यत आह ॥ **किञ्चेति** ॥ **प्रायश्चित्तेति** ॥ अकरणनिमित्तप्रायश्चित्तेत्यर्थः ॥ **अभावादिति** ॥ तथा चाकरणस्यानिवर्त्यतया सत्यपि प्रायश्चित्ते नरकफलं स्यादेवेति भावः। साम्ग्र्यभावादेव कृतप्रायश्चित्तस्य नरकफलाभाव इति चोद्यमति प्रसङ्गेन निराह ॥ **न चेति** ॥ **तत्प्रसङ्गादिति** ॥ न चेष्टापत्तिः। तथात्वे–

"सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति" इति–

"ब्रह्मपारस्तवेनैव निष्क्रान्ता राजदेहतः"

इत्यादौ निवृत्त्याद्युक्तिर्न स्यात्। प्रायश्चित्तस्य प्रतिबन्धकत्वे विहिताकरणस्यापि शुभकर्मप्रतिबन्धकत्वापत्त्या नरकहेतुत्वं न स्यात्।

किञ्च प्रायश्चित्ताभावसहितस्याकरणस्य नरकहेतुत्वेन दुरितापूर्वापलापे ज्योतिष्टोमादिसाध्यमपूर्वमपि न स्यात्। अन्वयव्यतिरेकाभ्यां यागप्रागभावविशिष्टात्माभवस्यैव स्वर्गादिफलहेतुत्वोपपत्तेरात्मनः स्थायित्वेप्यनुष्ठितयागे तस्मिन् यागप्रागभावाभावेन यागप्रागभावविशिष्टात्माभावसम्भवात्। सत्यप्यकरणे प्रायश्चित्तदशायां प्रायश्चित्ताभावसहकृताकरणाभाववत्।

न च यागस्यैव यागप्रागभावाभावरूपत्वात्कृतयागेपि यागनाशानन्तरं प्रागभावोन्मज्जनेन प्रागभावाभावस्याप्ययोग इति वाच्यम्। यागध्वंसस्यापि प्रागभावविरोधित्वात्। न च फलानन्त्यदोषः. प्रायश्चित्ताभावसहकृताकरणादेरपि नरकहेतुत्वे तद्दोषसाम्यात्।

न च प्रायश्चित्तस्य दुरितनाशकत्वरूपफलाभावेपि कर्मान्तराधिकारासम्पादनं फलमस्त्विति वाच्यम्। महापातकातिरिक्तेन क्षुद्रपापेनाधिकाराभावा त्तत्र प्रायश्चित्तवैयर्थ्यात्। अन्यथा यत्किञ्चित्पापवतोपि अकृतप्रायश्चित्तस्यानधिकारापातादित्याद्यभिप्रेत्याह ॥ **दिगिति** ॥

सन्ध्यावन्दनाद्यकरणे दुरितसमर्थनम् ॥ ४८ ॥

* * *

## ४९. अथ व्रीहियवसाध्ये यागे वैजात्यभङ्गः ।

### तर्कताण्डवम्

यत्तु मणौ – वैकल्पिकव्रीहियवसाध्ये यागे तृणारण्यादिजन्यवह्निष्वव वैजात्यमस्त्यन्यथा हि व्यभिचरितयोः व्रीहियवयोरव्यभिचारगर्भितं यागहेतुत्वं न स्यात्। तथा च व्रीहिभिर्यजेतेत्यादिश्रुतिरप्रमाणं स्यात्।

न चैवं विजातीययागसाध्यं स्वर्गादिफलं प्रति द्वारभूतेऽपूर्वेपि वैजात्यं स्यादिति शङ्क्यम्। विद्यमानमपि यागगतं वैजात्यमनादृत्य ज्योतिष्टोमत्वेनैव स्वर्गसाधनत्वस्य श्रुत्या बोधितत्वात्। व्रीहिर्भिर्यजेतेत्यादौ तु व्रीहित्वादेरादरादिति।

तन्न। शक्तिवादिनो मम मते तृणारण्यादावप्येकशक्तिकत्वेन अनुगमस्योक्ततया व्रीह्यादावप्येकशक्तिकत्वेनानुगमे व्यभिचाराभावात्।

व्रीहियवसाध्ये यागे वैजात्यभङ्गः ॥४९॥

### न्यायदीपः

एवमपूर्वं समर्थ्य तस्यैकजातीययागसाध्यत्वेनैवैकजात्यं न पुनर्विजातीययागजन्यत्वेप्यैकजात्यमिति भावेन मण्युक्तयागवैजात्यमनूद्य निराह ॥ **यत्तु मणाविति** ॥ **वैकल्पिकेति** ॥ "व्रीहिभिर्यजेत, यवैर्यजेते" इत्यादिवाक्यश्रुतयोः व्रीहियवयोराग्नेययागे विकल्पेन साधनत्वं "एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात्प्रधानस्ये" इति द्वादशाध्यायतृतीयपादे समर्थितत्वात् वैकल्पिकव्रीहियवेत्युक्तम् ।

**।। अन्यथा हीति ।।** ऐकजात्येहि व्रीह्यभावेपि यवैः यवाभावे च व्रीहिभिर्यागोत्पत्त्या व्यतिरेकव्यभिचरितयोरित्यर्थः। ज्योतिष्टोमत्वेनेति दृष्टान्तार्थमुक्तम्। ज्योति-ष्टोमत्वेनैव दर्शपूर्णमासत्वेनैव रूपेणाग्नेयादेः स्वर्गसाधनत्वस्य "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति श्रुत्या बोधितत्वादित्यर्थः।

नन्वेवं व्रीहियवयोरौषधद्रव्यत्वेनैव साधनताबोधोस्तु। तथा च तज्जन्ययागे वैजात्यं मास्त्वित्यत आह **।। व्रीहिभिरिति ।। आदरादिति ।।** अन्यथा अतिप्रसङ्गादिति भावः **।। उक्त-तयेति ।।** तृणादीनामेकशक्तित्वसाधनवादे।

व्रीहियवसाध्ययागे वैजात्यभङ्गः ।। ४९ ।।

***

## ५०. अथ साधनस्योत्कर्षादिना फलेप्युत्कर्षादि।

### तर्कताण्डवम्

**यत्र तु साधने यागादौ गुरुत्वलघुत्वरूपोत्कर्षापकर्षयोः श्रवणेऽपि फले स्वर्गादौ तदश्रवणं तत्रैक रूप एव स्वर्गे द्वयोर्न विकल्पः। किं तु लघूपाये सति गुरुपायोपदेष्टुर्वेदस्य अप्रामाण्यपरिहाराय प्रयासाधिक्येपि समफलप्रदस्येश्वरस्य वैषम्यनैर्घृण्यपरिहाराय च फलेप्युत्कर्षापकर्षौ श्रुतार्था-पत्तिसिद्धौ।**

**उक्तं हि ब्राह्मे–**

**"साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः" इति।**

**अन्यैरपि–**

**"कर्मणामल्पमहतां फलानां च स्वगोचरे।**
**विभागःस्थानसामान्यादविशेषेऽपि चोदितः"**

**इति।**

## न्यायदीपः

नन्वेवं "दर्शपूणहमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ श्रुतेष्टिसोमयोरेकरूपफलकयोरपि व्रीहियववद्विकल्पः स्यादित्यत आह ।। **यत्र त्विति** ।। **एकरूप एवेति** ।। सप्तम्यन्तः स्वर्गविशेषणम्।

।। **फलप्रदस्येति** ।। रातिर्दातुः परायणम्। "फलमत उपपत्तेः" इति श्रुतिसूत्रादिसिद्धत्वात्। फलप्रदस्येश्वरस्येत्युक्तम्।। **श्रुतार्थापत्तीति** ।। साधनतारतम्यान्यथानुपपत्तिरूपेत्यर्थः।

ब्राह्मे ब्रह्मपुराणे ।। **अन्यैरपीति** ।। मीमांसकैरपीत्यर्थः। उक्तमित्यनुषङ्गः। "फलस्य कर्मनिष्पत्तेः तेषां लोकवत्परिमाणतः फलविशेषःस्या" दित्यर्थवादाधिकरणसिद्धान्तगुणसूत्रे कर्मणामिति भट्टकारिका।

।। **पलानां चेति** ।। अल्पमहतामित्यन्वयः ।। **स्थानेति** ।। यथा सङ्ख्यारूपस्थानप्रमाणसाम्येन विभागः विवेकः कार्यः। अल्पकर्मणामल्पफलं महाकर्मणां महाफलमित्येवं रूपेण विभाग इत्यर्थः।

विशेषाश्रवणात्कथमेतदित्यत उक्तम्।। **विशेषेपीति** ।। **चोदित इति** ।। आह च मणिकृदप्य-पूर्ववादसिद्धान्ते ज्योतिष्टोमादौ श्रुतस्वर्गफलत्वेपि गुरूपायत्वेनाननुष्ठानलक्षणाप्रामाण्यापत्त्या फलभूमा कल्प्यत इति।

## तर्कताण्डवम्

**एवं देशकालपात्राद्युत्कर्षादिनाऽपि फलोत्कर्षा-दिकं द्रष्टव्यम्। यत्र तु शक्तिव्यवस्थया वा वर्णव्यवस्थया वा कालादिव्यवस्थया वानुकल्पो यथा–**

"सहस्रगुः शतं दद्याद्दश दद्याच्च गोशती।
एकां गां दशगुर्दद्यात्सर्वे तुल्यफलाः स्मृताः।
एकमेव तु शूद्राणां प्रभुकर्मसमादिशत्।
एतेषामेव वर्णानां शुश्रूषामनसूयया।"
"कृते यद् द्वादशाब्देन तत् त्रेतायां हायनेन तु।
द्वापरे तच्च मासेन अहोरात्रेण तत् कलौ।"

**इत्यादौ तत्र फलेनोत्कर्षादिकमिति दिक्।**

**साधनस्योत्कर्षादिना फलेऽप्युत्कर्षादि ॥५०॥**

**न्यायदीपः**

उक्तस्यापवादमाह ॥ **यत्र त्विति** ॥ तस्य विवरणमित्यादावित्यन्तेन। अनुकल्पो नाम मुख्यस्याभावेन्यस्य चोदनम्। शक्तिव्यवस्थया अनुकल्पस्थलमाह ॥ **सहस्रगुरिति** ॥ सहस्रं गावो यस्यसहस्रगुः। एवमग्रेपि। दशेति गाव इति योज्यम्।

वर्णव्यवस्थया तमाह ॥ **एकमेवेति** ॥ **एतेषामिति** ॥ ब्रह्मक्षत्रियवैश्यानामित्यर्थः। समादिशदित्यन्वयः। कालव्यवस्थया तमाह ॥ **कृत इति** ॥ हायनेन वत्सरेण। नोत्कर्षादिकं कल्प्यमिति पदविभागः। एवं यत्र मुख्याभावे प्रतिनिध्युपादानं सोमाभावे पूतीकस्य व्रीहीणामभावेन नीवाराणां खादिराभावे कदरस्योपादानम्। तत्रापि न फलापकर्षकल्पनम्।

ननु मुक्तौ साधनतारतम्ये सति न फलतारतम्यमित्यत आह ॥ **दिगिति** ॥ अन्यत्र विस्तृतं तदिति भावः।

साधनस्योत्कर्षादिना फलेप्युत्कर्षादिकम् ॥५०॥

***

## ५१. अथ गयाश्राद्धादिजन्यापूर्वस्य पित्रादिगतत्वनियमभङ्गः

### तर्कताण्डवम्

यत्तु मणौ गयाश्राद्धादावपूर्वस्यौत्सर्गिकं कृतिसामानाधिकरण्यं वैधेन पित्राद्युद्देशेन प्राप्तव्यभोगसामानाधिकरण्येन अपोद्यते। यदि तु तत्रापि कृतिसामानाधिकरण्यं तर्हि मुक्तेपि पितरि गयाश्राद्धादिफलं स्यात्। पुत्रगतस्य गयाश्राद्धादिजन्यापूर्वस्यानाशात्। एवं

"सविष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति"

इत्यादौ पुत्रानृतभाषणादिना पितुरपि नरकस्मरणेन पुत्रसमवेतानृतभाषणजन्यदुरितेन मुक्तस्यापि पितुर्नरकं स्यात्। कृतिसमानाधिकरणस्य दुरितस्य पुत्रे सत्त्वात्। भोगसामानाधिकरण्ये तु मुक्ते पितरि दोषरूपसहकार्यभावेन अपूर्वोत्पत्तिप्रसक्तेरभावान्नातिप्रसङ्ग इत्युक्तम्।

### न्यायदीपः

एवमपूर्वस्य कल्प्यत्वं साधनोत्कर्षादिनाऽतिशयितत्वादिकं च समर्थ्येदानीं तस्य कर्तृनिष्ठतां व्युत्पादयितुं परोक्तान्यनिष्ठताव्युत्पादनप्रकारमनूद्य निराह ॥ **यत्तु मणावित्यादिना** ॥ इत्युक्तमित्यन्वयः। अपूर्ववादान्ते "विहितक्रियया कर्तृगतव्यापारद्वारा कालान्तरभावि फलं जन्यत इत्युत्सर्ग" इत्यादिनोक्तमित्यर्थः।

॥ **वैधेनेति** ॥ पितृभोगकामो गयाश्राद्धं कुर्यादित्येवमाद्यरूपविधिसम्बन्धिना पित्राद्युद्देशेनेत्यर्थः। आपोद्यते कृतिसामानाधिकरण्यं निरस्यत इत्यर्थः ॥ **फलं स्यादिति** ॥ कुत इत्यतः फलोत्पादकसत्त्वादिति भावेनाह ॥ **पुत्रेति** ॥

स्वपक्षे तु नैतद्दोषद्वयमित्याह ॥ **भोगसमानाधिकरण्ये त्विति** ॥ **दोषेति** ॥ रागद्वेषाख्य-दोषरूपेत्यर्थः ॥ **नातिप्रसङ्ग इति** ॥ गयाश्राद्धादिफलभाक्त्वादिप्रसङ्गो नेत्यर्थः। न चैवं गयाश्राद्धादेः वैफल्यमिति शङ्क्यम्। अदृष्टोत्पत्तौ स्वरूपसतो दोषस्याङ्गस्य वैगुण्येन वैफल्यस्योचिततत्वादिति भावः।

तर्कताण्डवम्

**तन्न। पितृभोजकस्य पुत्रगतगयाश्राद्धानृतभाषणादिजन्यापूर्वस्य पितृमुक्तेः प्राक्तनत्वे भोगं विनैव पितृगतब्रह्मसाक्षात्कारेणैव नाशस्य**

**"एवं है वास्य सर्वे पाप्मानः प्रदूयन्ते"**

**इत्यादिश्रुतिसिद्धत्वात्पुत्रगतस्याप्यपूर्वस्य पितृ-भोजकत्वेन तदीयत्वात्। पराचीनं तु न सम्भवत्येव ब्रह्मसाक्षात्कारानन्तरभाविकर्मणामश्लेषस्य**

**"एवंविदि पापं कर्म न श्लिष्यत"**

**इत्यादिश्रुतिसिद्धत्वात्। पुत्रकृतानामप्य-नृतभाषणादीनां पितृभोजकत्वांशे तदीयत्वात्।**

**तस्मात् कारीर्यादिजन्यापूर्वस्य कृतिसामानाधिकरण्येऽपि सस्यजीवेषु पुष्टिरूपफलवद्गयाश्राद्धादिजन्यापूर्वस्य पुत्रगतत्वेपि पित्रादौ तृप्त्यादिकं युक्तम्। ग्रामकामेष्ट्यादौ ग्रामादेरिवान्यसमवेतस्यापि पितृतृप्त्यादेः पुत्रेणोद्दिष्टतया पुत्रफलत्वात्। एवं जातेष्ट्यादावपि द्रष्टव्यम्।**

**गयाश्राद्धादिजन्यापूर्वस्य पित्रादिगतत्वनियमभङ्गः ॥५२॥**

## न्यायदीपः

कृतिसामानाधिकरण्येप्यतिप्रसङ्गं निराह ॥ **पितृभोजकेति** ॥ पितृगतसाक्षात्कार-निवर्त्यतोपपादनाय पितृभोजकस्येत्युक्तम्।

ननु श्रुतावस्यापि ज्ञानिसम्बन्धिन एव नाश उच्यत इत्यत आह ॥ **पुत्रेति** ॥ पराचीनं मुक्तितः पश्चात्तनमित्यर्थः। गयाश्राद्धादिजन्यमपूर्वमिति योज्यम्। पितृभिः सह मज्जतीत्युक्त्या पुत्रस्यापि भोजकत्वात्पितृभोजकत्वांश इत्युक्तम्। कथं व्यधिकरणभोगजनकत्वमपूर्वस्येतिशङ्कां दृष्टान्तोक्त्या परिहन्नुपसंहरति ॥ **तस्मादिति** ॥ **ग्रामकामेष्टीति** ॥ "वैश्वदेवीम् साङ्ग्रहणीं निर्वपेद् ग्रामकाम" इति वाक्योक्तेत्यर्थः।

॥ **एवं जातेष्ट्यादावपीति** ॥ "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रेजाते" इति विधाय "य एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती" इति श्रुतपुत्रगतपूतत्वादिफल-जनकत्वमिष्टिकर्तृपितृगतस्याप्यपूर्वस्य युक्तमिति द्रष्टव्यमित्यर्थः।

गयाश्राद्धादिजन्यापूर्वस्य पित्रादिगतत्वनियमभङ्गः ॥ ५१ ॥

समाप्तः अपूर्ववादः

* * *

---

# आख्यातवादः

## ५२. अथाऽख्यातस्योदयनोक्तकृत्यर्थत्वभङ्गः ।

### तर्कताण्डवम्

आख्यातार्थस्त्वधःसन्तपनादिरूपधात्वर्थानुकूलव्यापार एव, न तु यत्नरूपा कृतिरेवेति नियमः। चैत्रः पचति रथो गच्छतीत्यादौ चेतनाचेतनसाधारण्येनाख्यातस्य प्रयोगात्। आख्यातेन धात्वार्थानुकूलव्यापारस्यैव प्रतीतेश्च। कृतेस्तदर्थत्वेऽचेतने आख्यातो गौणः स्यात्। न च मुख्यसम्भवे तद्युक्तम्।

अत्राहोदयनः। कृतिरेवाख्यातार्थः। पचति पाकं करोतीति कृत्यर्थककरोतिनाऽऽख्यातार्थस्य विवरणात्। किं करोतीति कृत्यर्थकप्रश्नस्य पचतीत्याख्यातेन प्रतिवचनाच्च। न हि भिन्नार्थं विवरणं भवति। न च प्रश्नोत्तरे व्यधिकरणे भवतः।

### न्यायदीपः

प्रसङ्गादाह ।। **अख्यातार्थस्त्विति** ।। तिङ्प्रत्ययार्थस्त्वित्यर्थः। पूर्वं लिङर्थनिरूपणेनाख्यातार्थस्मरणादिति ध्येयम्।। **धात्विति** ।। विक्लत्यादिफलजनकाधःसन्तपनादिरूपपच्यादिधात्वर्थानुकूलशरीरस्पन्दादिरूपो व्यापार इत्यर्थः।

कुत इत्यतः शब्दार्थनिर्णयस्य प्रयोगप्रत्ययाधीनत्वादिति भावेन स्वोक्तार्थे तावाह ।। **चैत्र इति** ।। **व्यापारस्यैव प्रतीतिश्चेति च** ।। एतच्चोत्तरभङ्गे विवरिष्यते ।। **अत्रेति** ।। आख्यातार्थविषये

व्याख्यानरूपं प्रश्नप्रतिवचनरूपं च प्रमाणमाह ॥ **पचति पाकं करोतीत्यादिना** ॥ विवरणस्यान्यथोपपत्तिमाशङ्क्य निराह ॥ **न च पचतीत्यादाविति** ॥

## तर्कताण्डवम्

**नच पचतीत्यादावाख्यातोक्तेन व्यापारेण कृतेराक्षेपादाक्षिप्तकृतेर्व्याख्यानपरं विवरणमिति वाच्यम्। अचेतनव्यापारसाधारण्येन व्यापारत्वेनोपस्थितस्य व्यापारस्य चेतनासाधारणकृत्यनाक्षेपकत्वात्। तदुक्तम्–**

**"भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः।**
**तया विवरणध्रौव्यादाक्षेपानुपपत्तितः"**

**इतीति। तन्न। व्यापारत्वेनोपस्थितेनापि व्यापारेण योग्यताबलाच्छिद्रेतरघटवत्पर्यवसितस्य वा पाकाद्यर्थकपच्यादिसमभिव्याहारबलादाक्षिप्तस्य वा यत्नस्य करोतिना विवरणसम्भवात्। न च शक्यमेव विव्रियते इति नियमः। लाक्षणिकादेरपि योग्यताबलाद् विवरणसम्भवात्।**

## न्यायदीपः

॥ **आक्षेपादिति** ॥ व्यापाररूपकार्येण तत्कारणस्याक्षेपादित्यर्थः ॥ **तदुक्तमिति** ॥ कुसुमाञ्जलौ पञ्चमे स्तबके उक्तमित्यर्थः ॥ **तयेति** ॥ भावनया करोतिनोक्त्येत्यर्थः। आक्षेपानुपपत्तिरसिद्धेत्याह ॥ **व्यापारत्वेनेति** ॥ **योग्यतेति** ॥ चेतननिष्ठव्यापारस्य प्रयत्नरूपत्वाद्योग्यताबलादित्युक्तम्। घटेन जलमाहरेत्यादौ योग्यताबलाच्छिद्रेतरेणेत्यर्थपर्यवसानं यथा तथेहापि पाकानुकूलव्यापारस्य योग्यताया कृतित्वे पर्यवसानात्पाकानुकूलव्यापारस्य पचिसमभिव्याहारलभ्यस्य यत्नेन विनायोगेन तेन तदाक्षेपाद्वा तद्विवरणसम्भवादित्यर्थः।

विवरणान्यथानुपपत्त्या तस्य शक्यत्वमित्यत आह ॥ **न चेति** ॥ शक्यः शक्तिविषयः

**॥ लाक्षणिकादेरिति ॥** गङ्गायां घोष इत्यादौ गङ्गातीरे घोष इति सिंहश्चैत्र इत्यादौ सिंहसदृश्चैत्र इत्यादिविवरणदर्शनादिति भावः। करोतेः कृत्यर्थत्वमुपेत्योक्तम्।

## तर्कताण्डवम्

किं च करोतेरपि न कृतिरर्थः। किं तु क्रियैव। रथो गच्छति गमनं करोति इच्छति इच्छां करोति निद्राति निद्रां करोतीत्यादौ कृत्यसम्भवेऽपि करोतिना व्याख्यानात्।

न च यत्ने शक्तस्यैव करोतेर्निद्रां करोतीत्यादौ व्यापार-मात्रे लक्षणेति वाच्यम्। व्याख्येये लक्षणादिप्राप्तस्यापि तात्पर्यविषयस्य वाचकपदैर्विवरणार्थत्वाद्व्याख्यानस्य। अन्यथा पचतीत्येतद्व्याख्याने कृञोपि व्यापारमात्रे शक्तस्य कृतौ लक्षणा स्यात्। अत एव व्यापारविषयस्य धात्वर्थविशेषस्य अनिर्धारणेन किं करोतीति प्रश्ने पचतीति धात्वर्थविशेषेणोत्तरं च युक्तम्।

अथ क्रियाजन्यत्वाविशेषेपि कृतिजन्यत्वाजन्यत्वाभ्यां घटाङ्कुरयोः कृताकृतव्यवहारदर्शनात्तृजन्तकृधातुनिष्पन्नस्य कर्तृपदस्य यौगिकस्य कृत्याश्रयवाचकत्वाच्च कृञो यत्नार्थ-कत्वम्। तदुक्तम्–

> "कृताकृतभिागेन कर्तृरूपव्यस्थया।
> यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना"।

इति चेन्न। इच्छां करोति प्रयत्नं करोति निद्रां करोति बीज-मङ्कुरं करोतीत्यादौ यत्नजन्यत्वाभावेपि कृतव्यवाहरात्। प्रत्युत नैयायिकानां घटाङ्कुरयोः कृतिजन्यत्वसाम्येऽपि

शरीरव्यापारजन्यत्वाजन्यत्वाभ्यामेव कृताकृतव्यवहारदर्शनात् कृञ्धातोः व्यापाररूपक्रियार्थत्वमेव युक्तम्। कर्तृपदमपि न यौगिकम्।

यौगिकत्वे हि न तावत्कृधातोः कृतिरर्थः। तृचश्चाश्रयोऽर्थः। तथात्वे हि कृत्याश्रयः कर्तृपदार्थः स्यात्। न च तद्युक्तम्। पक्तेत्यनेन पाकाश्रयप्रतीतिप्रसङ्गात्। पाककृत्याश्रयाप्रतीतिप्रसङ्गाच्च।

नापि तृचोपि कृतिरर्थः। तस्य धात्वर्थकृत्या सह विषयत्वेन जनकत्वेन वाऽन्वयासम्भवात्। अभेदान्वये च कृतिरित्येव धीः स्यात्। न तु कृत्याश्रय इति। पक्तेत्यत्रापि पाककृतिरित्येव धीः स्यात्। न तु पाककृतिमानिति। तस्मादगत्या तृचः कृतिमानर्थो वक्तव्यः। तेन पक्तेत्यत्र पाककृतिमानिति धीर्युक्ता। तथा च पाककर्तेत्यत्र धातोः कृतिरर्थश्चेत्तृजर्थेन कृत्याश्रयेण सह कृधात्वर्थस्यान्वयः स्यात्। न हि कृत्याश्रयस्य पुनः स्वकृत्यान्वयः। तस्मात् कर्तृपदं कृत्याश्रये वा क्रियाश्रये वा रूढमेव। न तु यौगिकमिति न तेन व्याख्यानात् कृञः कृत्यर्थत्वसिद्धिरिति।

आख्यातस्योदयनोक्तकृत्यर्थत्वभङ्गः ॥५२॥

## न्यायदीपः

वस्तुतस्तु तदेव नेत्याह ॥ **किं चेति** ॥ **क्रियैवेति** ॥ व्यापारमात्रमेवेत्यर्थः ॥ **अन्यथेति** ॥ व्याख्यानेपि लक्षणाश्रयण इत्यर्थः। एवं प्रतिवचनगतिमुक्त्वा प्रश्नगतिमाह ॥ **अत एवेति** ॥

किं चेत्यादिनोक्तमसिद्धमिति शङ्कते ॥ **अथेति** ॥ **तदुक्तमिति** ॥ तत्रैव कुसुमाञ्जलौ

पञ्चमपरिच्छेदे उक्तमित्यर्थः। कर्तृरूपव्यवस्थया चेति च शब्दोध्याहार्यः ॥ **यत्न एव कृतिरिति** ॥ यत्न एव करोत्यर्थः इत्यर्थः।

नन्वेवमाख्यातस्य कृतिवाचकत्वे भावनाख्यातार्थ इति भज्येतेत्यत उक्तं पूर्वापरस्मिन्निति। एकं पदमिदम्। विषयसप्तमी। पूर्वापरीभूतव्यापारकलापविषयिणी सैव कृतिः भावनेत्युच्यत इत्यर्थः। मणौ वर्धमाने च प्रदर्शितानेव शेषाद्व्यनक्ति॥ **इच्छां करोतीत्यादिना** ॥ **कृतव्यवहारादिति** ॥ इच्छा कृता निद्रा कृतेति व्यवहारादित्यर्थः।

दोषान्तरं च स्वयमाह ॥ **प्रत्युतेति** ॥ कार्यमात्रे ईश्वरकृतिजन्यत्वं न्यायमते स्वीक्रियत इति नैयायिकानामित्युक्तम्। यदपि कर्तृरूपव्यवस्थयेति तदपि मण्याद्युक्तदिशा निराह॥ **कर्तृपदमपीति** ॥ डुकृञ् करणे इत्यस्माण्ण्वुल्तृचाविति कर्तरि विहिततृच्प्रत्यये गुणे च कर्तेति निष्पन्नं रूपमिति नाङ्गीकर्तुं शक्यं किं तु रूढमित्येवोपेयमिति वक्ष्यन् यौगिकत्वे प्रसक्तपक्षत्रयं क्रमान्निराह ॥ **न तावदित्यादिना तस्माद्रूढमेवेत्यन्तेन** ॥ **पाकाश्रयप्रतीतिप्रसङ्गादिति** ॥ कर्तेत्यत्रोक्तरीत्येति भावः। परीत्योक्तं कृत्याश्रय इति। स्वरीत्योक्तं क्रियाश्रय इति। व्यापाराश्रय इत्यर्थः।

आख्यातस्योदयनोक्तकृत्यर्थत्वभङ्गः ॥५२॥

***

## ५३. अथाख्यातस्य मण्युक्तयत्नार्थत्वभङ्गः।

### तर्कताण्डवम्

**मणौ तु – आख्यातस्य कृतिरेवार्थो न तु व्यापारः। पचतीत्यत्र पाकानुकूलयत्नस्यैव प्रतीतेः। व्यापारेण यत्नाक्षेपे तु प्रतीतिद्वयानुभवः स्यात्।**

**किं च व्यापारत्वरूपगुरुशरीरोपाध्यपेक्षया लघुत्वेन यत्नत्वजातिरेव प्रवृत्तिनिमित्तम्। शक्तिग्राहकप्रमाणेन**

लघुनि शक्तिग्रहात्। अचेतने त्वाख्यातो लाक्षणिकः। अन्यथा क्वापि लक्षणा न स्यात्। तस्माल्लडाख्यातं यत्नवाचकं आख्यातत्वाल्लिङाख्यातवदित्युक्तम्।

तन्न। आख्यातस्य चेतनाचेतनसाधारणधात्वर्थानुकूलव्यापारमात्रे प्रयोगे सत्यपि लाघवमात्रेण कृतित्वस्य प्रवृत्तिनिमित्तत्वकल्पने हि कारणादिशब्देष्वपि कारणत्वरूपोपाध्यपेक्षया सत्ताजातिरेव लघुत्वात्तत्र प्रवृत्तिनिमित्तं सत्तारहितसामान्यादौ तु कारणपदं लाक्षणिकमिति स्यात्।

## न्यायदीपः

यच्च मणौ शब्दखण्डान्ते आख्यातवादे उदयनमतमनूद्य भट्टमुखेन दूषयित्वोच्यत इत्यादिना स्वयं सिद्धान्तितं तच्च नेति भावेन तदनूद्य निराह ॥ **मणौ त्विति** ॥ **यत्नाक्षेपे त्विति** ॥ व्यापारस्य कार्यत्वात्तेन स्वकारणीभूतयत्नाक्षेपे त्वित्यर्थः। रथो गच्छतीत्यादौ कथमित्यत आह ॥ **अचेतन इति** ॥ **अन्यथेति** ॥ यद्यचेतनेप्याख्यातस्य मुख्यार्थलाभाय व्यापारशक्तिकल्पना तर्हि शक्त्यतिरिक्तवृत्त्यन्तरोच्छेदः स्यात्। गङ्गायां घोष इत्यादावपि तीरादिसाधारण्येनैव गङ्गादिशब्दशक्तिग्रहः स्यात् इत्यर्थः ॥ **प्रयोगे सत्यपीति** ॥ रथो गच्छति चैत्रो गच्छतीत्यादिप्रयोगे सतीत्यर्थः।

## तर्कताण्डवम्

न च सत्तायाः कारणपदाद्धीरेव नास्तीति वाच्यम्। पचि-समभिव्याहृताख्यातेन यत्नस्येव सामान्यादीतरत् कारणमित्यत्र सामान्यादीतरशब्दसमभिव्याहृतकारणपदेन सत्तायाः प्रतीतेः। पचतीत्यादावपि यत्नधीरेव नेति वक्ष्यमाणत्वाच्च।

यदि च सामान्यादीतरेत्यादावाक्षेपादेव सत्ताधीस्तर्हि

**पचतीत्यादावपि यत्नधीराक्षेपादित्यस्तु। एवं च प्रतीतिद्वया-पादनमिष्टमेव। न च वैपरीत्यं शङ्क्यम्। यत्नस्य सामग्र्यैकदेशभूतकारणमात्रत्वेन स्वजन्यव्यापारा-नापेक्षकत्वात्। व्यापारस्य च कार्यत्वेन स्वकारणयत्ना-क्षेपकत्वात्।**

**न च पचतीत्यादौ यत्नातिरेकेण व्यापारधीरेव नास्तीति न तेन यत्नाक्षेप इति वाच्यम्। यत्नविरामेपि तत्कार्यस्य अधःसन्तपनरूपधात्वर्थानुकूलस्य शरीरव्यापारस्य सत्त्व-कालेपि पचतीति प्रयोगात्। यत्नस्य सत्त्वेऽपि आमवातादि-शिथिलीकृतकळेबरस्य व्यापाराभावकाले पचतीत्य-प्रयोगाच्च।**

## न्यायदीपः

यच्च मणौ शब्दखण्डान्ते आख्यातवादे उदयनमतमनूद्य भट्टमुखेन दूषयित्वोच्यत इत्यादिना स्वयं सिद्धान्तितं तच्च नेति भावेन तदनूद्य निराह ॥ **मणौ त्विति** ॥ **यत्नाक्षेपे त्विति** ॥ व्यापारस्य कार्यत्वात्तेन स्वकारणीभूतयत्नाक्षेपे त्वित्यर्थः।

रथो गच्छतीत्यादौ कथमित्यत आह ॥ **अचेतन इति** ॥ **अन्यथेति** ॥ यद्यचेतनेप्याख्यातस्य मुख्यार्थलाभाय व्यापारशक्तिकल्पना तर्हि शक्त्यतिरिक्तवृत्त्यन्तरोच्छेदः स्यात्। गङ्गायां घोष इत्यादावपि तीरादिसाधारण्येनैव गङ्गादिशब्दशक्तिग्रहः स्यात् इत्यर्थः ॥ **प्रयोगे सत्यपीति** ॥ रथो गच्छति चैत्रो गच्छतीत्यादिप्रयोगे सतीत्यर्थः।

ननु – प्रयोगप्रत्ययाभ्यां शक्तिग्रहात्कारणपदेन सत्ताया अप्रतीतेः कथं सा कारणपदनिमित्तं स्यादित्याशङ्क्य निराह ॥ **न चेति** ॥

ननु – सामान्यादीतरस्य कारणत्वं न सत्ताभावो युक्तमिति सत्ताया आक्षेपादेन तत्र धीरित्यत

आह ।। **यदि चेति** ।। व्यापाररूपस्याख्यातार्थस्य सत्त्वेपि यत्नधीस्तु व्यापाररूपकार्येण स्वकारणीभूतयत्नाक्षेपादित्यर्थः।

प्रतीतिद्वयानुभवः स्यादिति प्रागुक्तं दोषं निराह ।। **एवं चेति** ।। **वैपरीत्यमिति** ।। यत्न एवाख्यातार्थो व्यापरस्त्वाक्षेपलब्धार्थ इति वैपरीत्यमित्यर्थः। वैषम्यादित्याह ।। **यत्नस्यैति** ।। **सामग्र्यैकदेशेति** ।। व्यापाररूपकार्यस्य यत्नमात्रं न सामग्री सत्यपि यत्ने कार्यानुकूलव्यापारा-नुपलम्भात्। किं तु व्यापाररूपकार्यं प्रति या सामग्री तदेकदेशभूतकारणमात्रं, तथा च कथं तेन कार्याक्षेपः सामग्र्या एव कार्याक्षेपकत्वात्। अत एव पद्धतौ कारणं तु समग्रमेव कार्यमनुमाप-यतीत्युक्तमिति भावः।

धीरेव नास्तीति वदन्तं प्रति प्रयोगरूपकार्यान्वयव्यतिरेकबलात्तद्धीरस्तीत्यनुमीयत इति भावेनाह ।। **यत्नविरामेति** ।। शरीरव्यापारस्य शरीरकृतव्यापारस्य।

## तर्कताण्डवम्

**न चाक्षिप्तत्वेनाशाब्दे यत्ने पचतीत्यत्र शाब्दस्य वर्त-मानत्वस्यान्वयः कथमिति शङ्क्यम्। शाब्दवर्तमानत्वा-न्वितेन धात्वर्थेन वा धात्वर्थानुकूलव्यापाररूपेणाख्यातार्थेन वा वर्तमानत्वविशिष्टस्यैव यत्नस्याक्षेपात्।**

**वस्तुतस्तु पचतीत्यादौ यत्नोपि धात्वर्थानुकूलव्यापा-रत्वेनैव प्रतीयते, न तु यत्नत्वेनेति न यत्नस्याक्षेपोपि।**

## न्यायदीपः

यत्नस्याक्षेपपक्षे बाधकमाशङ्कते ।। **न चाक्षिप्तत्वेनेति** ।। आक्षिप्तत्वेन हेतुना शाब्द इत्यर्थः। शाब्दस्याशाब्देनान्वयो नास्त्येवेत्याह ।। **शाब्देति** ।। शाब्दंयद्वर्तमानत्वं पचतीत्यादौ ''वर्तमाने लट्'' इतिविहितलट्प्रत्ययेन प्रतीतं तदन्वितेन पच्यादिरूपधात्वर्थेन वा शाब्दवर्तमानत्वान्वितेन आख्यातार्थेन वेत्यर्थः। एतच्चाभ्युपेत्योक्तमिति भावेनाह ।। **वस्तुतस्त्विति** ।।

## तर्कताण्डवम्

यच्चोक्तं रथो गच्छतीत्यादावाख्यातो लाक्षणिक इति। तन्न। न हि गङ्गाशब्दस्य पूर इवाख्यातस्य यत्ने प्रयोग-प्राचुर्यादिना शक्तिः क्लृप्ता। येन तीर इव व्यापारे शक्य-सम्बन्धाल्लक्षणा स्यात्।

तस्माद्धात्वर्थानुकूलव्यापारस्य प्रवृत्तिनिमित्तत्वेन सर्वत्र मुख्यत्वसम्भवे चेतने मुख्यस्त्वचेतने त्वमुख्य इति वृत्ति-द्वयकल्पनमयुक्तमिति।

आख्यातस्य मण्युक्तयत्नार्थत्वभङ्गः ॥५३॥

## न्यायदीपः

न च मुख्ये सम्भवति गौणार्थत्वं युक्तमिति पूर्वभङ्गे स्वोक्तं समर्थयितुं ''अन्यथा क्वापि लक्षणा न स्या''दिति प्रागुक्तदोषं च निराह॥ **यच्चेति**॥ यत्तु सुधायां साङ्ख्यपरीक्षायामाद्याधिकरणे।

''स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः।''

इत्येतद्व्याख्यानावसरे वृक्षस्तिष्ठतीत्यादौ कर्तृव्यवहारो गौण इति वचनं तत्त्विच्छाधीनकृति-मत्त्वं कर्तृत्वमित्युपेत्य। व्यापारवत्त्वं कर्तृत्वमिति पक्षे त्वविरुद्धमिति ज्ञेयम्।

अख्यातस्य मण्युक्तयत्नार्थत्वभङ्गः ॥५३॥

✻✻✻

## ५४. अथाख्यातस्य रत्नकोशकारोक्तोत्पत्त्याद्यर्थत्वभङ्गः ।

### तर्कताण्डवम्

**रत्नकोशकारस्तु–**

**धात्वर्थोऽधःसन्तपनादिव्यापारः। आख्यातार्थस्तु उत्पत्तिरेव। सा च धात्वर्थेनाधेयतया समानाधिकरण-प्रातिपदिकार्थेन तु कार्यतयाऽन्वेति। अत एव चैत्रः पचति पाकमुत्पादयतीति विवरणम्। आख्यातेनोत्पत्तिमात्रे उक्तेऽपि उत्पत्तिं प्रति कारणत्वरूपस्योत्पादकत्वस्य अन्वय-तयाऽप्रतीतेः।**

### न्यायदीपः

**।। रत्नकोशकारस्त्विति ।।** आहेति वक्ष्यमाणेनान्वयः। यद्यप्येतन्मतं यत्तु रत्नकोशकृतोक्त-मित्यादिना मणावेवानुद्य निरस्तम्। तथाऽपि गौरवादिरूपमण्युक्तदोषमप्रीयमाणः शिष्यव्युत्पादनार्थं निष्कृष्य तदुक्तमनूद्य पुनरिहनिरस्यत इत्यदोषः। धात्विति। पच्यादिधात्वर्थ इत्यर्थः **।। आधेय-तयेति ।।** पाकाश्रितोत्पत्तिरित्येवंरूपेणेत्यर्थः।

**।। समानाधिकरणेति ।।** पचाति चैत्र इत्यादौ चैत्रादिरूपप्रातिपदिकार्थेन कार्यतया चैत्रनिष्पाद्या पाकोत्पत्तिरिति वा पाकोत्पत्तिकारणं चैत्र इति वान्वेतीत्यर्थः। किं मानमत्रेत्यत आह **।। अत एवेति ।।** आख्यातादेरुत्पत्त्याद्यर्थत्वादेवेत्यर्थः। अन्यथैवंरूपेण तस्य व्याख्यानशब्दितं विवरणं न नस्यादिति भावः।

ननूत्पत्तिमात्रस्याख्यातार्थस्य चैत्रादिप्रातिपदिकार्थेन कार्यतालाभः कथमित्यत आह **।। आख्यातेनेति ।। अन्वयतयेति ।।** चैत्रादिपदसमभिव्याहारबलेन कार्यकारणभावो वाक्यार्थरूपेण भासत इत्यर्थः।

## तर्कताण्डवम्

यद्वोत्पादनैवाऽऽख्यातार्थः। सा च धात्वर्थेन विषयितया प्रातिपदिकार्थेनाश्रिततयाऽन्वेति। एवं च धात्वर्थोत्पादकता चेतनेऽचेतने सर्वत्राप्यस्तीति सर्वत्राप्याख्यातो मुख्य एव। व्यापारस्य यत्नस्य चाख्यातार्थत्वे च यतते जानातीत्यादौ यत्नज्ञानविषयकयत्नव्यापारयोरसम्भवेनाख्यातस्तत्र शब्दसाधुरेव स्यात्। उत्पत्त्यर्थकत्वे तु यत्नज्ञानयोरप्युत्पत्तिसम्भवादाख्यातोऽर्थसाधुः। न चार्थसाधुत्वसम्भवे शब्दसाधुत्वं युक्तम्।

## न्यायदीपः

॥ **उत्पादनैवेति** ॥ उत्पादकनिष्ठो धर्मविशेष उत्पादना पचति चैत्र इत्यादौ पाकविषयकोत्पादनवांश्चैत्र इत्यर्थः इत्युपेत्याह ॥ **सा चेति** ॥ प्रातिपदिकार्थेन चैत्रादिना। एवमुक्तौ को लाभ इत्यतः रथो गच्छति, चैत्रो गच्छतीत्यादावाख्यातस्य मुख्यार्थलाभ इत्याह ॥ **एवं चेति** ॥ परपक्षे बाधकमाह ॥ **व्यापारस्येति** ॥ स्वपक्षे तत्रोपपत्तिमाह ॥ **उत्पत्त्यर्थकत्वे त्विति। अर्थसाधुरिति** ॥ अर्थविषयेपि साधुर्न तु पूर्वत्रेव शब्दमात्र इत्यर्थः ॥

## तर्कताण्डवम्

यद्यपि मन्मतेऽपि उत्पादयतीत्यादावुत्पादार्थकधातूत्तराख्याते शब्दसाधुत्वम्। तथाऽपि त्वन्मते जानातीच्छति यतते निद्रातीत्यादिषु बहुषु शब्दसाधुत्वमिति विशेषः। पचतीत्यादौ वर्तमानयत्नलाभस्तु वर्तमानोत्पत्त्यन्वितधात्वर्थेनाक्षेपादित्याह।

तदपि न। उत्पत्तेराख्यातार्थत्वे तया सह चैत्रस्य जनकत्व

**रूपोऽन्वय इति चैत्रः पचतीत्यनेन चैत्रः पाकोत्पत्त्युत्पादक इति धीः स्यात्। न तु पाकोत्पादक इति। पाकमुत्पादयतीति त्वदुक्तविवरणविरोधश्च स्यात्। पक्षद्वयेप्यचेतनेपि ज्ञानोत्पादके इन्द्रियलिङ्गशब्दादौ जानातीति प्रयोगश्च स्यात्। इन्द्रियादेरप्युत्पत्तिं प्रति जनकतयोत्पादनां प्रत्याश्रयत्वेनान्वयसम्भवात्। चैत्रो घटं जानातीत्युक्ते घटज्ञानवान्न वेति संशयश्च स्यादचेतनस्यापि ज्ञानोत्पादकत्वादिति।**

**आख्यातस्य रत्नकोशकारोक्तोत्पत्त्याद्यर्थत्वभङ्गः ॥५४॥**

## न्यायदीपः

ननूत्पादनैवाख्यातार्थ इति मतेपि घटमुत्पादयतीत्यादावुत्पादनादिविषयकोत्पादनाभावाच्छब्दसाधुत्वमेवेति को विशेष इत्यत आह ॥ **यद्यपीति** ॥ **मन्मतेपि** ॥ रत्नकोशकारमतेऽपीत्यर्थः ॥ **त्वन्मते** ॥ यत्नाद्यर्थकत्ववादिमते।

नन्वेवं लडादिस्थळे वर्तमानादियत्नलाभो न स्यादित्यत आह ॥ **पचतीत्यादाविति** ॥ वर्तमानोत्पत्त्यन्वितेत्युक्त्या शाब्दस्य वर्तमानत्वस्य कथमाक्षिप्तयन्तान्वय इति निरस्तम्। शाब्दोत्पत्त्यैव अन्वयोपगमात्।

॥ **अन्वय इति** ॥ इति शब्दो हेत्वर्थः ॥ **त्वदुक्तविवरणविरोध इति** ॥ पाकोत्पत्तिमुत्पादयतीत्येव विवरणापत्तेरिति भावः। पक्षद्वयेपीति। उत्पत्तिराख्यातार्थ उत्पादनैवाख्यातार्थ इति पक्षद्वयेपीत्यर्थः ॥ **उत्पादनां प्रत्याश्रयत्वेनेति** ॥ उत्पादकनिष्ठधर्मविशेषस्यैवोत्पादनारूपत्वात्। त्वया च कर्त्रसाधारण्येनोत्पादनैवाख्यार्थ इत्युक्तत्वेन करणानामप्युत्पादकत्वेनोत्पादनाश्रयत्व-सम्भवादिति भावः। उत्पादकत्वेनैव प्रातिपदिकार्थस्यान्वये दोषान्तरं चाह ॥ **चैत्रो घटमिति** ॥ कुत इत्यत आह ॥ **अचेतनास्यापीति** ॥ ज्ञानहीनस्यापि चक्षुरादेरित्यर्थः ॥

आख्यातस्य रत्नकोशकारोक्तोत्पत्त्याद्यर्थत्वभङ्गः ॥५४॥

***

## ५५.अथाख्यातस्य प्राभाकरोक्तसङ्ख्यामात्रवाचित्वभङ्गः ।

### तर्कताण्डवम्

प्रभाकरास्तु – फलानुकूलोऽधः सन्तपनादिरूप-व्यापारो धात्वर्थः। आख्यातवाच्या तु सङ्ख्यैव। तेन चैत्रः पचति रथो गच्छतीत्यत्र चैत्ररथयोर्धात्वर्थान्वय एव प्रतीयते न तु कृत्याश्रयत्वं नापि तदनुकूलव्यापाराश्रयत्वमिति सर्वत्रापि धात्वर्थाख्यातार्थौ मुख्यौ। पचतीत्यत्र यत्नधीस्तु धात्वर्थेनाक्षेपादित्यहुः।

तन्न। चैत्रादेर्धात्वर्थान्वयो हि न तावदाश्रयत्वम्। अधः सन्तपनादेश्चैत्रानाश्रितत्वात्।

नापि जनकत्वम्। तस्य काष्ठादावपि सत्त्वेन काष्ठानि पचन्तीति प्रयोगस्यापि मुख्यत्वप्रसङ्गात्।

नापि धात्वर्थजनककृत्याश्रयत्वम्। रथो गच्छतीत्यादौ कृत्यभावेन गौणत्वप्रसङ्गात्।

### न्यायदीपः

॥ **प्रभाकरास्त्विति** ॥ आहुरित्यन्वयः। एतन्मतमप्याख्यातवादे मणौ एतेनेत्यादिनानूद्य इति गुरुमतमपास्तमित्यादिना दूषितमपि तदुक्तदूषणायारोचमानः स्वयमनूद्य दूषयतीत्यदोष इति ध्येयम्।

॥ **फलेति** ॥ तण्डुलविक्लित्यादिरूपफलेत्यर्थः। धात्वर्थः पच्यादिधात्वर्थः। आदिपदेन उत्तरदेशसंयोगादिरूपफलानुकूलश्चलनादिरूपो व्यापारो गम्यादिधात्वर्थ इति ग्राह्यम्। सङ्ख्यैव, सा च कर्तृनिष्ठेति भावः। एवकारेण व्यापारमात्रं व्यावर्त्यं न तु वर्तमानत्वाद्यपि। तेन लडाद्युक्तं वर्तमानत्व मित्यादिवक्ष्यमाणग्रन्थाविरोधः।

उक्तार्थे हेतुमाह ।। **तेनेति** ।। आख्यातादेः सङ्ख्यादिवाचित्वेन कारणेनेत्यर्थः ।। **सर्वत्रापीति** ।। चेतनेऽचेतने चेत्यर्थः ।। **धात्वर्थेनेति** ।। व्यापाररूपधात्वर्थस्य चेतननिष्ठस्य यत्नेन विनानुपपत्तेस्तेन तदापेक्षपादित्यर्थः ।

## तर्कताण्डवम्

**किं च यदि सङ्ख्यामात्रमाख्यातार्थः स्यात्तदा लडाद्युक्तं वर्तमानत्वादिकं केनान्वेतु। न तावद्धात्वर्थेन। तथात्वे ह्यधःसन्तपनादिरूपे धात्वर्थेऽनागते तदनुकूले व्यापारे च वर्तमाने पक्ष्यतीत्येव स्यात्। न तु पचतीति। नापि सङ्ख्यया। तथात्वे ह्ययमपाक्षीदित्यादौ कर्तृगतसङ्ख्याया विद्यमानत्वेन पचतीति स्यात्।**

**तस्मात्प्रतीत्यनुरोधाद्धात्वर्थानुकूलव्यापार एव आख्यातार्थः। तद्गतमेव च वर्तमानत्वमाख्यातेनोच्यत इति युक्तम्।**

## न्यायदीपः

एवं धात्वार्थान्वयं चैत्रादेर्निरस्य सङ्ख्यामात्रवाचित्वं चाख्यातस्य निराह ।। **किञ्चेति** ।। **सङ्ख्यामात्रमिति** ।। व्यापारो यदि नाख्यातार्थ इति मात्रपदार्थः । वर्तमानत्वं वर्तमानत्वादीत्यर्थः ।। **प्रतीत्यनुरोधादिति** ।। व्यापारस्य वर्तमानत्वादेरेव पचतीत्यादिप्रयोगेन प्रतीतेस्तदनुरोधादित्यर्थः ।। **धात्वर्थेति** ।। फलानुकूलोऽधःसन्तपनादिरूप एव पच्यादिधात्वर्थः । तदनुकूलो व्यापारस्तु शरीरस्पन्दादिरूप एवाख्यातार्थ इत्यर्थः । तथैव धात्वर्थादेरग्रे वक्ष्यमाणत्वात् ।

## तर्कताण्डवम्

**ननु वर्तमानत्वस्य व्यापारेणान्वये यथा एकैकस्य**

व्यापारस्य वर्तमानत्वेन पचतीति प्रयोगः तथैकैकस्य व्यापारस्याना-गतत्वेनातीतत्वेन च पचतीति प्रयोगकाल एव पक्ष्यत्य-पाक्षीदिति प्रयोगः स्यादिति चेन्न। यावतां मध्य एकैकस्य विद्यमानत्वेन व्यवहारः तावतां सर्वेषां प्रागभावे ध्वंसे च पक्षत्यपाक्षीदिति प्रयोगव्यवस्थापनात्। व्यवहारानुरोधेन हि सर्वत्र निमित्तकल्पनमिति।

**आख्यातस्य प्राभाकरोक्तसङ्ख्यामात्रवाचित्रभङ्गः ॥५५॥**

## न्यायदीपः

यत्तु मणावथ पाकानुकूलैककृतिकाले पचतीतिवदित्यादिना कृतेराख्यातार्थत्वे बाधकमाशङ्कितं तद्व्यापारपक्षे सममिति भावेनोक्तार्थे बाधकमाशङ्क्य निराह ॥ **नन्वित्यादिना** ॥ **एकैकस्येति** ॥ स्थालीस्थापनमधःसन्तपनं तण्डुलप्रक्षाळनं स्थाल्यां तण्डुलप्रक्षेपणं दर्व्यापरिलोडनमित्यादिव्यापारेष्वेकैकस्येत्यर्थः। एकदा सर्वमेळनासम्भवेन सर्वसमुदायस्य वर्तमानत्वेन पचतीतिप्रयोगस्यायोगादेकैकस्येत्युक्तम्। कुत एषा कल्पनेत्यत आह ॥ **व्यवहारेति** ॥

आख्यातस्य प्राभाकरोक्तसङ्ख्यामात्रवाचित्वभङ्गः ॥५५॥

***

## ५६. अथ सङ्ख्याया वाच्यगामित्वनियमः।

## तर्कताण्डवम्

एवं कर्तृकर्मणी अपि लकारवाच्ये। चैत्रः तण्डुलान् पचति, चैत्रेण पच्यन्ते तण्डुला इत्यादौ कर्तृकर्मणोश्चैत्र-तण्डुलयोराख्यातोक्तसङ्ख्यान्वयनियमदर्शनात्। तस्य

**चाख्यातार्थत्वं विनानुपपत्तेः। अन्यथा तण्डुलान् पचतीत्यत्र तण्डुलान् पचन्तीति, चैत्रेण पच्यन्ते तण्डुला इत्यत्र च चैत्रेण पच्यत इति च सङ्ख्याविनिमयः स्यात्।**

## न्यायदीपः

यत्तु मणौ – "स्यादेतत्। चैत्रस्तण्डुलं पचती" इत्यादिना "इति वैयाकरणा" इत्यन्तेन कर्तृकर्मणोरपि लकारार्थत्वमाशङ्क्य तन्नेत्यादिना दूषितं तदप्ययुक्तमितिभावेनाख्यातार्थनिरूपण-प्रसङ्गादाख्यातार्थत्वं कर्त्रादेः साधयति ।। **एवमिति** ।।

यद्यपि "लः कर्मणि च भावेचाकर्मकेभ्यः" इति सूत्रेण कर्मणि भावे चकारात् कर्तरि लकारा विहिताः। तथापि भावार्थे विवादाभावात् कर्तृकर्मणीत्येवोक्तम्। कुत इत्यत आख्यातोक्तसङ्ख्या-न्वयानुपपत्तिरूपप्रमाणादिति भावेनाह ।। **चैत्र इति** ।। **अनुपपत्तेरिति** ।। कुत इत्यत आख्यातावाच्येपि सङ्ख्यान्वयेऽवाच्येष्वनेकेष्वन्वयः स्यात्। एकत्रैवेति नियमो न स्यादिति भावः।

कर्तृकर्मणोश्चैत्रतण्डुल्योराख्यातोक्तसङ्ख्यान्वयनियम एवासिद्ध इत्यत आह ।। **अन्यथेति** ।। प्रागुक्तनियमाभाव इत्यर्थः ।। **विनिमय इति** ।। आख्यातोक्तसङ्ख्या-न्वयस्यावाच्यत्वादिति भावः।

## तर्कताण्डवम्

**नन्वाख्यातस्य सङ्ख्यावाचित्वमेव नास्ति। यद्बलात् कर्तृकर्मवाचित्वं कल्प्येत। प्रथमान्तकर्तृकर्मवाचकपदं विना आख्यातप्रयोगाभावेन चैत्रः पचतीत्यादौ सुब्विभक्त्यैव सङ्ख्याप्रतीतेरुपपत्तेः। न चैवं विनिगमनाविरहात् सुब्वि-भक्तेरेव सङ्ख्यावाचित्वं त्यज्यतामिति वाच्यम्। चैत्रो दण्डी इत्यादावाख्याताभावेऽपि सुब्विभक्त्यैव सङ्ख्याप्रतीतेरिति चेत्। मैवम्।**

"चन्द्रे कळङ्कः सुजने दरिद्रता
विकासलक्ष्मीः कमलेषु चञ्चला।
मुखाप्रसादः सधनेषु सर्वदा
यशो विधातुः कथयन्ति खण्डितम्"

**इत्यादौ बहुत्ववाचकसुब्विभक्तेरभावेऽपि कथयन्तीति तिङ्विभक्त्यैव बहुत्वप्रतीतेः।**

## न्यायदीपः

पक्षधराद्युक्तचोद्योत्तराभ्यामेवाख्यातस्य सङ्ख्यावाचित्वं निर्धारयति ॥ **नन्वित्यादिना** ॥ कथं तर्हि सङ्ख्याप्रतीतिरित्यत आह ॥ **सुब्विभक्त्यैवेति** ॥ आख्यातेनापि सङ्ख्याभिधाने पौनरुक्त्यापत्ते-रिति भावः।

ननु यत्र सुबन्तप्रयोगं विना केवलाख्यातप्रयोगः तत्र कथमित्यतस्तादृशप्रयोग एव नेति भावेनोक्तं प्रथमान्तेत्यादि। इत्यादावित्यादिपदेन चैत्रेण पच्यन्ते तण्डुला इत्यादिग्रहः।

ननु पौनरुक्त्यभयादन्यतस्य सङ्ख्यावाचित्वत्यागेऽवश्यम्भाविन्याख्यातस्यैव तत् कुत इत्याशङ्क्य निराह ॥ **न चैवमिति** ॥ **चन्द्र इति** ॥ विधातुः स्रष्टुः यशः खण्डितं प्रतिहतं कथयन्ति। चन्द्रगतकळङ्कादयो यशोहानिं कथयन्ति, अकुशलोऽयं विधाता चन्द्रादिष्वनर्हमेव कळङ्कादिक-मकरोदित्यादिरूपेणेत्यर्थः।

## तर्कताण्डवम्

**किं च कर्तुराख्यातवाच्यत्वे तस्य प्रातिपदिकार्थेन चैत्रेण सह चैत्रो दण्डीत्यादिवदभेदान्वयः सम्भवति। कर्तुरवाच्यत्वे त्वाख्यातोक्ताकेवलैव सङ्ख्या प्रातिपदि-कार्थेन चैत्रेणान्वेतीति वाच्यम्।**

न च तद्युक्तम्। चैत्रस्यादावेवान्तरङ्गसुब्विभक्त्यैव सङ्ख्यान्वितत्वेनोक्ततया इतरानाकाङ्क्षत्वेनाख्यातोक्त-सङ्ख्यानन्वयापातात्।

न च सुब्विभक्त्याख्याताभ्यामेकैव सङ्ख्याप्रतीयते। तथा च सुब्विभक्त्युक्तया सङ्ख्ययैवान्वयः। न तु तिङ्विभक्त्युक्तयान्वय इति विभागो न युक्त इति वाच्यम्। एकस्याः सङ्ख्यायाः शीघ्रया सुब्विभक्त्यैवाभिहितत्वेन मन्थरायाः तिङ्विभक्तेर्वैयर्थ्यप्रसङ्गात्।

न च समूहालम्बनायाः सर्वपदार्थस्मृतेरेकत्वेन पूर्वापर-भावाभावान्न वैयर्थ्यमिति वाच्यम्।

"यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते।
तेन तेनान्वितः स्वार्थः पदैरेवाभिधीयते"

इति न्यायेन सुब्विभक्तिप्रातिपदिकार्थयोः प्रथममन्वयात्। अन्यथाऽवान्तरवाक्यार्थज्ञानाभावेन शास्त्रपाठादिकं न स्यात्। शैघ्र्यमन्थरत्वाभ्यां श्रुतिवाक्यादेर्बलाबलव्युत्पादनं च न स्यात्।

न च पचति चैत्र इत्यत्राख्यातेनैव प्रथमं सङ्ख्योप-स्थापितेति वाच्यम्। एवमपि चैत्रः पचतीत्यत्राख्यात-सङ्ख्यानन्वयासमाधानात्। मन्मते तु प्रातिपादिकाख्याता-र्थयोः चैत्रकर्त्रोरभेदान्वय उभयत्राप्यबाधितः।

## न्यायदीपः

न चात्र सुब्विभक्तेरश्रवणेप्येते पदार्था इत्यध्याहृतसुब्विभक्तिरस्तीति वाच्यम्। तिङ्विभक्त्या

बहुत्वप्रतीत्यैव बहुवचनान्तपदाध्याहारादिति भावः। अभेदान्वयानुपपत्त्या च कर्त्राद्यर्थत्वं लकारस्येत्याह ॥ **किं चेति** ॥ सुब्विभक्त्या सङ्ख्यान्वितत्वेनोक्तत्वे बीजमन्तरङ्गेति।

सङ्ख्याद्वयं नेत्याशङ्क्य पररीत्या निराह ॥ **न चेति** ॥ **मन्थराया इति** ॥ पृथक्पदोपात्तत्वेन कर्तृगतसङ्ख्यावाचित्वस्य विलम्बितत्वादिति भावः। पौर्वापर्यमेवास्तीत्याह ॥ **यद्यदिति** ॥ **इति न्यायेनेति** ॥ मीमांसकन्यायेनेत्यर्थः।

॥ **शास्त्रपाठादिकमिति** ॥ एकस्मिन्नेव दिने कृत्स्नशास्त्रपाठायोगेन प्रतिदिनं खण्डशः खण्डश एव पाठ्यत्वादिति भावः ॥ **शैघ्र्येति** ॥ अन्यतेत्यनुषङ्गः। तृतीयेध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थान समाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादित्यधिकरणे–

"प्रत्यक्षे चानुमाने च यथा लोके बलाबलं।
शीघ्रमन्थरगामित्वात्तथैव श्रुतिलिङ्गयोः"।

इति वार्तिकोक्तदिशेति भावः। श्रुतिलिङ्गादेरितिवक्तव्ये श्रुतिवाक्ययोरित्युक्तिः प्रकृताभिप्रायेण। चैप्रातिपदिकगतसुब्विभक्त्युक्तसङ्ख्यान्वयस्य प्रकृतिप्रत्ययसमभिव्याहाररूपपदश्रुतिगम्यत्वादा-ख्यातोक्तसङ्ख्यान्वयस्य पदान्तरसमभिव्याहाररूपवाक्यस्यत्वादिति भावः।

॥ **इत्यत्रेति** ॥ पूर्वमाख्यातश्रवणादिति भावः। कथं तर्हि त्वन्मतेप्युभयवाच्यसङ्ख्याया एकत्वाद्वैयर्थ्यमन्यतरस्येत्यत आह ॥ **मन्मते त्विति** ॥ कर्त्रादिरप्याख्यातार्थ इति मन्मत इत्यर्थः ॥ **उभयत्रेति** ॥ सुब्विभक्त्या पूर्वं सङ्ख्याबोध इति पक्षे आख्यातेन पूर्वं सङ्ख्याबोध इति पक्षे चेत्यर्थः। आख्यातेन सङ्ख्याविशिष्टकर्तृसामान्ये बोधिते सति चैत्रादिपदेन तद्विशेषबोधेन सामान्यविशेषयोः समभिव्याहारेणाभेदावगतावेकैव सङ्ख्या पर्यवस्यति। कर्ता चैत्र इत्यादाविवेति भावः।

## तर्कताण्डवम्

**ननु – कर्तुराख्यातवाच्यत्वे कर्तृत्वमेव प्रवृत्तिनिमित्तं वाच्यम्। कर्तृत्वं च मन्मते कृतिव्यापारयोः विषयितया पाकादिधात्वर्थान्वयो न स्यात्। प्रवृत्तिभूत निमित्तभूतयोः**

**तयोः पदार्थैकदेशत्वेनान्वयाप्रतियोगित्वादिति चेन्न। त्वयापि पक्ता पाचकः पाककर्तेत्यादौ कृतेः पदार्थैक-देशत्वेऽपि धात्वार्थान्वयस्य स्वीकृतत्वेन तद्वत्पचतीत्यत्रापि धात्वर्थान्वयस्य सम्भवात्।**

**यदि च पाचक इत्यादेः पाकविषयककृतिमानिति नार्थः किं तु कृतिमान् पाकस्येति। तर्हि पचतीत्यस्यापि स एवार्थोस्तु।**

## न्यायदीपः

यत्तु मणौ वस्तुतः पचीत्यत्र यत्नवतः शक्यत्वे धात्वर्थस्य विषयत्वेन कृतावन्वयो न स्यादित्यादिनोक्तं बाधकं तदाशङ्कते ॥ **नन्विति** ॥ **विषयितयेति** ॥ धात्वर्थविषयकतयेत्यर्थः ॥ **पदार्थैकदेशत्वेनेति** ॥ कृतिमतो वा व्यापारवतो वा आख्यातार्थत्वेन कृत्यादेरेकदेशत्वादित्यर्थः। पदार्थः पदार्थेनान्वेति न तु तदेकदेशेनेति न्यायात्। अन्यथा राजपुरुषमानयेत्यादौ राज्ञोप्यानयनान्वया-पत्तेरिति भावः।

॥ **पक्ता पाचक इति** ॥ "ण्वुल्तृचाविति" सूत्रेण कर्तरि तृच्प्रत्ययस्य ण्वुल्प्रत्ययस्य च विधानेन तत्र कर्त्रर्थत्वावश्यम्भावात्।

न च तत्रापि कृतिरेवार्थ इतिवाच्यम्। व्युत्पत्तिप्रतीतिव्यवहाराणां कर्तर्येव सत्त्वेन तद्विरोधात्। पाककर्तेत्यादौ सर्वथाप्यपरिहाराच्चेति भावः ॥ **पाकस्येतीति** ॥ पाकसम्बन्धीत्यर्थः। तथा च पदार्थस्यैव पदार्थेनान्वयो न तु तदेकदेशेनेति भावः।

## तर्कताण्डवम्

**किं च न वयं व्यापारविशिष्टे एकैव शक्तिरिति ब्रूमः। येन व्यापारस्य पदार्थैकदेशत्वेनान्वयो न स्यात्। किं तु**

व्यापारे आश्रये च शक्तिद्वयम्। व्यापाराश्रयत्वं त्वन्वयतया भाति। न च शक्तिद्वयकल्पने गौरवम्। आख्यातत्वेन व्यापारे भावकर्मविहिताख्यातभिन्नाख्यातत्वेन कर्तरि च शक्तिरिति शक्ततावच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वात्। अन्यथा त्वन्मतेप्याख्यातत्वेन कृतौ लट्त्वेन वर्तमानत्वे शक्तिर्न स्यात्।

तस्माद्व्यापारस्य शक्त्यन्तरेण स्वातन्त्र्येणोपस्थितत्वाद् धात्वर्थेन सह विषयितया कर्त्रा चाधेयतयान्वय इति न किं चिदनुपपन्नम्।

एतेन कर्तुर्व्याच्यत्वं विना न सङ्ख्यान्वयानुपपत्तिः। यथा कर्तुर्वाच्यत्वे तस्य प्रथमान्तचैत्रपदोपस्थाप्येनैव अन्वयनियमः। तथा सङ्ख्याया अपि तदन्वयनियमसम्भवादिति निरस्तम्। अम्बायां भीष्म इवाख्यातोक्तसङ्ख्यायां प्रातिपदिकार्थो निराकाङ्क्ष इत्युक्तत्वात्।

एतेनैवाख्यातोक्तसङ्ख्यायाः स्वभावादेव प्रथमान्तोक्तान्वय इति निरस्तम्। नैराकाङ्क्ष्यस्योक्तत्वात्। उक्तरीत्या अन्यथैवोपपत्तौ स्वभावकल्पनायोगाच्च।

## न्यायदीपः

ननु पचतीत्यादौ धात्वर्थविषयकत्वस्याख्यातार्थे व्यापारेऽनुभवादिसिद्धत्वात्कथं सम्बन्धमात्राङ्गीकार इत्यतः तथैव समाधिमाह ।। **किञ्चेति** ।। कथं तर्हि व्यापारवैशिष्ट्यधीरित्यत आह ।। **व्यापाराश्रयत्वं त्विति** ।। आख्यातत्वेन भावकर्मान्याख्यातत्वेन च वाच्ययोर्व्यापारव्यापारिणोवैशिष्ट्यमन्वयविधया भातीत्यर्थः। यत्तु सङ्ख्यान्वयानुपपत्त्या कर्तुराख्यातवाच्यत्वमित्युक्तं तत्र

मण्युक्तान्यथासिद्धिमनूद्य निराह ॥ **एतेनेति** ॥ **उक्तत्वादिति** ॥ चैत्रस्यादावेवान्तरङ्गसुब्विभक्त्यैवेत्यादिना ग्रन्थेनोक्तत्वादित्यर्थः ॥ **उक्तरीत्येति** ॥ मन्मते त्वित्यादिनोक्तरीत्येत्यर्थः।

## तर्कताण्डवम्

**अथ कर्तुरवाच्यत्वेऽपि न सङ्ख्यान्वयनियमानुपपत्तिः। समानपदोपात्तभावनान्वयिनैव सङ्ख्यान्वयात्। भावना च व्यापारतया न व्यापारवन्तमाकाङ्क्षतीति चैत्रः तण्डुलान् पचतीत्यत्र तण्डुलानां द्वितीयान्तशब्दोपात्तत्वेन कर्मकारकतया व्यापारत्वेनोपस्थापितत्वात्तान्विहाय प्रथमान्तशब्दोपस्थितेन शुद्धेन चैत्रेणैवान्वेति।**

**एवं चैत्रेण तण्डुलाः पच्यन्त इत्यत्र चैत्रस्य तृतीयान्तशब्देन कर्तृकारकतया व्यापारवत्त्वेनोपस्थितत्वात्तं विहाय प्रथमान्तशब्दोपस्थितैः तण्डुलैरेवान्वेति। अत एव यं यं भावनाऽनुधावति तं तं सङ्ख्यापीतिस्थितिरिति चेन्न।**

## न्यायदीपः

सम्प्रदायस्त्वित्यादिना मण्युक्तान्यथासिद्धिं चाशङ्कते ॥ **अथेति** ॥ **समानेति** ॥ एकपदोपात्ता या भावना तयान्वयि यद्वर्तते तेनान्वेतीत्यर्थः।

भावना नाम साधनकलापगोचरो यत्नविशेषः। तदन्वयि किम्। येन सङ्ख्यान्वेतीत्युक्तमित्यत आह ॥ **भावना चेति** ॥ शुद्धेन चैत्रेणैवान्वेतीति सम्बन्धः। तत्र हेतुर्व्यापारवन्तं नाकाङ्क्षतीति। इति शब्दो हेतौ। तत्र हेतुर्व्यापारतयेति। भावनाया व्यापाररूपतया व्यापारयुक्तं नाकाङ्क्षतीति कृत्वा शुद्धेन व्यापाररहितेन चैत्रेणैवान्वेतीति।

कुत्रेत्यत उक्तम् ॥ **चैत्रः तण्डुलान् पचतीत्यत्रेति** ॥ कर्मकारेण कुतो नान्वेतीत्यत उक्तम्

॥ **द्वितीयान्तेति** ॥ ''कर्मणि द्वितीय'' इति कर्मकारके द्वितीया विहिता क्रियां कुर्वद्धि कारकं व्यापारवदेव च क्रियां कुर्वद्भवतीति कर्मकारकं व्यापारयुक्तत्वेनैवोपस्थाप्यत इति कर्मभूतान् तण्डुलान्विहायेत्यर्थः। शुद्धेनेत्यत्र हेतुः प्रथमान्तशब्दोपस्थापितेनेति। ''प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथम'' इति शुद्धे प्रातिपदिकार्थ एव प्रथमाया अनुशासनादिति भावः। कर्ममि प्रयोगेप्याह ॥ **एवमिति** ॥ **तृतीयान्तेति** ॥ ''कर्तृकरणयोस्तृतीय'' इति कर्तरि तृतीयाविधानादिति भावः।

## तर्कताण्डवम्

**भावनानीताया अपि सङ्ख्याया निराकाङ्क्षेण प्रातिपदिकार्थेनानन्वयस्योक्तत्वात्।**

**किं चैवं चैत्रः तण्डुलान् पचतीत्यत्रापि तण्डुलानां भावनाविषयभूतपाकविषयतया परम्परया भवानान्वयेन सङ्ख्यान्वयः स्यात्।**

**न च सङ्ख्या साक्षाद्भावनान्वयिनान्वेतीति वाच्यम्। धात्वर्थेनाप्यन्वयापातात्।**

**न चाश्रयत्वेन भावनान्वयिनान्वेतीति वाच्यम्। तण्डुलाः पच्यन्त इत्यत्र तण्डुलानन्वयप्रसङ्गात्।**

## न्यायदीपः

॥ **भावनानीताया इति** ॥ भावनया नीता भावनानीता तस्याः। भावना यत्र गच्छति तत्र सङ्ख्यामपि नयतीत्युक्तत्वाद्भावनानीताया इत्युक्तम्॥ **उक्तत्वादिति** ॥ चैत्रस्यादावेवान्तरङ्गेत्यादिना ग्रन्थेनोक्तत्वादित्यर्थः। सङ्ख्यापि कि यथाकथं चिद्भावनान्वयिनान्वेत्युत साक्षात्तदन्वयिना, अथ आश्रयत्वेन भावनान्वयिना, यद्वा भावनां प्रति विशेष्येण।

आद्य आह ॥ **किं चेति** ॥ द्वितीयमाशङ्क्य निराह ॥ **न चेति** ॥ **अन्वयापातादिति** ॥ सङ्ख्याया

इति योज्यम्। तृतीयमाशङ्क्य निराह ॥ **न चाश्रयत्वेनेति** ॥ आश्रयश्च कर्तैव। न तु कर्मेति भावः।

## तर्कताण्डवम्

न च भावनां प्रति विशेष्येणान्वेतीति नियमः तण्डुलानां च भावनानाश्रयत्वेऽपि पाककृतिविषयाः तण्डुला इति प्रतीतेर्विशेष्यत्वमस्तीति वाच्यम्। चैत्रो जानातीच्छति प्रयतत इत्यादौ चैत्रे धात्वर्थातिरिक्तभावनान्वयाभावेन सङ्ख्यानन्वयापातात्।

तस्मादाख्यातादाश्रयत्वेन कर्तुरुपस्थितौ तस्य सङ्ख्यान्वये च सति समानाधिकरणप्रातिपदिकार्थेनाभेदान्वय इति युक्तम्।

अत एव सुप्यते चैत्रेणेत्यादौ सङ्ख्यान्वययोग्ययोः सतोरपि कर्तृकर्मणोरवाच्यत्वान्न सङ्ख्यान्वयप्रत्ययः। प्रत्ययो वा शाब्देन स्वापेनैवान्वयो वाच्य इति स्वापद्वित्वबहुत्वाभ्यां द्विवचनबहुवचने स्याताम्। न च तत्र द्विवचनबहुवचनयोरसाधुत्वादेवाप्रयोगः। अर्थस्य सत्त्वेन असाधुत्वस्य वाङ्मात्रत्वात्।

किं च स्वापे सङ्ख्यान्वयप्रत्ययेऽपि भावोत्पन्नलकारेण आश्रयत्वेन धात्वर्थरूपभावोपस्थितौ तत्र सङ्ख्यान्वये च सति सङ्ख्यावतार्थेन भावेन धात्वर्थस्य स्वापस्याभेदान्वय इति।

सङ्ख्याया वाच्यगामित्वनियमः ॥५६॥

### न्यायदीपः

उक्तदोषपरिजिहीर्षया परिहारं व्यञ्जयन् चतुर्थमाशङ्क्य प्रत्याह ॥ **न च भावनां प्रतीति** ॥ **धात्वर्थातिरिक्तेति** ॥ ज्ञानेच्छाप्रयत्नविषयभावनाया एवाभावादिति भावः। कथं तर्ह्यन्वय इत्यत आह ॥ **तस्मादिति** ॥ **आश्रत्वेनेति** ॥ भावनाश्रयत्वेन व्यापारश्रयत्वेन वेत्यर्थः। यद्वा कर्त्रर्थाश्रयेण लकारविधानादाश्रयत्वेन लकाराद्युत्पत्तिनिमित्तत्वेनेत्यर्थः। वाच्यत्वेनेति यावत्। यद्वा सङ्ख्यां प्रत्याश्रयत्वेनेत्यर्थः।

आख्यातोपस्थितकर्तर्येव सङ्ख्यान्वय इत्यत्र हेतुमाह ॥ **अत एवेति** ॥ सङ्ख्याया वाच्यार्थ-गामित्वनियमादेवेत्यर्थः ॥ **सुप्यत इति** ॥ ञिष्वप् शय इत्यस्य भावे रूपं सुप्यते चैत्रेणेति। इत्यादा-वित्यादिपदेन सकर्मकर्तरिप्रयोगग्रहः। अत एव सतोरपि कर्तृकर्मणोरित्युक्तिः। यद्वा आद्यस्य चतुर्थे पादे गतिबुद्धीत्यत्र–

"कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम्"।

इति मञ्जर्याद्युक्तेस्तदभिप्रायेण कर्मोक्तिः। प्रत्ययः प्रतीतिः ॥ **भावोत्पन्नेति** ॥ "लः कर्मणि च भाव चाकर्मकेभ्य" इति भावार्थ विहितलट्प्रत्ययरूपलकारेणेत्यर्थः। भावो नाम–

"धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयत"

इत्युक्तेर्धात्वर्थ एव ॥ **आश्रयत्वेनेति** ॥ पूर्ववदेव सङ्ख्यां प्रतीत्यर्थो ध्येयः।

सङ्ख्याया वाच्यगामित्वनियमः ॥ ५६ ॥

***

## ५७. अथ कर्तृकर्मणोराख्यातार्थत्वसमर्थनम्।

### तर्कताण्डवम्

**एतेन कर्तृकर्मत्वे एवाख्यातस्य शक्ये न तु तद्धर्मिणौ,**

तयोः प्रातिपदिकादेव लाभात्। अनन्यलभ्ये च शक्ति-कल्पनादिति निरस्तम्। कर्तुः प्रातिपदिकार्थेनाभेदान्वयस्यैव व्युत्पादितत्वादभेदान्वययोग्यस्य च कर्तुरन्येनालाभात्।

किं चैवमनभिहितयोः कर्तृकर्मणोः तृतीयाद्वितीये भवतः। तेन चैत्रः तण्डुलान् पचतीत्यत्र चैत्रेण तण्डुलान् पचतीति न भवति। एवं चैत्रेण तण्डुलाः पच्यन्त इत्यत्र चैत्रेण तण्डुलान्पच्यत इति न भवतीति व्युत्पादकव्याकरण-मप्यनुकूलितं भवति। अन्यथा कर्तृकर्मसङ्ख्याभिधाना-नभिधानाभ्यामेवाभिहितानभिहितकार्योपपादने तद्विरोधः स्यात्।

अपिचैवं चैत्रः पचतीति शब्दयोर्भिन्नप्रवृत्तिनिमित्ता-नामेकस्मिन्नर्थे वृत्तिरूपं सामानाधिकरण्यं सिध्यति। अन्यथाख्यातस्य कर्तृत्ववाचकत्वे एकत्रोभयोर्वृत्त्यभावेन सामानाधिकरण्यमेकसङ्ख्यावाचित्वेन कथञ्चिन्नेयं स्यात्।

## न्यायदीपः

॥ **कर्तुरन्येनालाभादिति** ॥ आख्यातादन्येनेत्यर्थः। आख्यातस्य कर्त्राद्यर्थकत्वे व्याकरणा-नुरोधोपि साधक इत्याह ॥ **किं चैवमिति** ॥ द्वितीयाध्यायस्य तृतीये पादे अनभिहित इत्यधिकृत्य "कर्मणि द्वितीया, कर्तृकरणयोस्तृतीयेति" तिङाद्यनुक्ते कर्मणि द्वितीया, तिङाद्यनुक्ते कर्तरि करणे च तृतीयेति तिङाद्यनभिहितयोः कर्तृकर्मणोरित्यर्थः।

॥ **तेनेति** ॥ तिङाद्यनभिहिते कर्तरि कर्मणि च तृतीयादिकं भवतीति कथनेनेत्यस्य इति न भवतीत्येवंरूपाभ्यां द्वाभ्यां क्रमेणान्वयः ॥ **व्याकरणमिति** ॥ कर्मणि द्वितीयेत्यादिव्याकरण-सूत्रमित्यर्थः। अन्यथेत्यस्य विवरणम्॥ **कर्तृकर्मेत्यादि** ॥

## तर्कताण्डवम्

तस्मात् पाचक इत्यादाविव पचतीत्यत्रापि सङ्ख्यायाः कर्त्रैवान्वयः। न तु भिन्नपदोपात्तनिराकाङ्क्षप्रातिपदिकार्थेन अन्वयः। तस्मात्कर्तृकमणी एव लकारवाच्ये।

अत एव भगवत्पादैः "कर्तृकर्मव्यपदेशाच्चेति, आत्मानं परस्मै शंसतीति श्रुतौ शंसतीत्याख्यातेन जीवस्य शंसनकर्तृत्वमुच्यत" इत्युक्तम्।

मिथ्यात्वानुमानखण्डने च "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतौ दृश्यत इत्याख्यातेन ब्रह्मणो दृक्कर्मत्वमुच्यत इति सूचितम्।

कर्तृकर्मणोराख्यातार्थत्वसमर्थनम् ।।५७।।

## न्यायदीपः

अन्यदप्यानुगुण्यमाह ।। **अपि चैवमिति** ।। बहुवचनान्तेन न्यायोपपादनमात्रम्। न प्रकृताभिप्रायेणेति ज्ञेयम्। तथा च चैत्रत्वं चैत्रपदनिमित्तं, आख्यातस्य च कतृत्वं निमित्तमिति भिन्नप्रवृत्तिनिमित्तयोश्चैत्रपचतिशब्दयोर्न्यायसिद्धसामानाधिकरण्यमपि सिद्धं भवतीत्यर्थः। अन्यथेत्यस्यैव व्याख्या आख्यातस्येत्यादि।

।। **उभयोरिति** ।। प्रवृत्तिनिमित्तयोरभावेन तद् बोधनेन सामानाधिकरण्यायोगादेकसङ्ख्येत्युक्तम्। यद्वोभयोरित्यस्य सङ्ख्ययोरित्यर्थः। तथा च यथाश्रुत एवान्वयः।

कर्त्रादेराख्यातवाच्यत्वे सम्मतिमाह ।। **अत एवेति** ।। व्यपदेशादित्युक्ततात्पर्यकथनं कर्तृत्वमुच्यत इत्युक्तमिति। एवमग्रेपि ध्येयम्।

कर्तृकर्मणोराख्यातार्थत्वसमर्थनम्।।५७।।

* * *

## ५८. अथ धातोर्मण्डनोक्तफलवाचित्वभङ्गः ।

### तर्कताण्डवम्

एवं विक्लृत्त्यादिरूपफलजनकोऽधःसन्तपनादिव्यापार एव पच्यादिधात्वर्थः। उक्तधात्वर्थानुकूलशरीरस्पन्दादिराख्यातार्थः।

मण्डनस्तु – (क्लृप्ति)विकृतिरेव धात्वर्थः। तज्जनकोऽधःसन्तपनादिरेवाख्यातार्थः। तथाहि। व्यापारमात्रस्य पच्यादि-धात्वर्थत्वे गमनादावपि पच्यादिप्रयोगः स्यात्। विक्लृत्त्या-दिफलोपहितस्य तु धात्वर्थत्वे फलमुपलक्षणं चेदुपलक्ष्यताञ्चछेदकानतिप्रसक्तरूपाभावात्स एवातिप्रसङ्गः। विशेषणं चेन्नगृहीतविशेषणान्यायेन प्रथमोपस्थितत्वाल्लाघवाच्च फलमेव धात्वर्थः।

न च व्यापारविगमे फलदशायां पचतीति स्यान्न त्वपाक्षीदिति तदा धात्वर्थस्य फलस्य सत्त्वादिति वाच्यम्। तदा धात्वर्थस्य सत्त्वेप्याख्यातार्थस्य धात्वार्थानुकूलव्यापारस्य अतीतत्वेन तदा पचतीत्यादिव्यापारवर्तमानत्ववाचकाख्यातप्रयोगस्य अनुचितत्वात्। प्रत्युत व्यापारस्य अतीतत्वादपाक्षीदित्यतीताख्यातप्रयोग एवोचितः।

### न्यायदीपः

परोक्तं निरसितुं स्वमतं निष्कृष्य दर्शयति ।। **एवं चेति** ।। विक्लृत्तिस्तण्डुलोदरवयवशिथिलता ।। **मण्डनस्त्विति** ।। आहेति वक्ष्यमाणेनान्वयः।

**।। धात्वर्थः फलमिति ।।** मण्डनाचार्या इत्यादिनानूद्यैतन्मतं मणौ निरस्तमपि व्युत्पादनार्थमधिकदोषोक्त्यर्थं च पुनरत्रोपन्यस्तमित्यदोषः। तत्र परिशेषरूपयुक्तिं वक्तुमाह **।। तथाहीति ।।**

धात्वर्थः फलं न चेत्तर्हि स किं व्यापारमात्रं फलोपरक्तो वा। तत्रापि फलोपलक्षितव्यापारो वा फलविशिष्टव्यापारो वेति हृदि विकल्प्याद्य आह **।। व्यापारमात्रस्येति ।।** द्वितीयमनूद्य तत्राप्याद्यं निराह **।। विक्लृत्यादिफलेति ।। स एवेति ।।** गमनादावपीत्युक्त एव। द्वितीय आह **।। विशेषणं चेदिति ।।** फलस्य धात्वर्थत्वे बाधकमाशङ्क्य निराह **।। न चेति ।।**

## तर्कताण्डवम्

**एतेनाकाशस्य स्पन्दजन्यसंयोगविभागरूपधात्वर्थाश्रयत्वादाकाशो गच्छति पतति त्यजतीति स्यादिति निरस्तम्। आकाशे धात्वर्थस्य सत्त्वेपि व्यापाराभावेन व्यापारवर्तमानत्वाद्यर्थकस्य गच्छत्यगच्छदित्याद्याख्यातप्रयोगस्य अप्रसङ्गात्।**

## न्यायदीपः

नन्वेवं तुल्यन्यायतया गच्छतीति गमिधातोरुत्तरदेशसंयोगः, पततीति धातोरधोदेशसंयोगः, त्यजतीति धातोर्विभागोर्थ इति स्यात्। तथाच गगनेप्युक्तसंयोगादिसम्भवेन गच्छतीत्यादिप्रयोगः स्याद्विवक्षितधात्वर्थस्य तत्रापि सत्त्वादित्यत आह **।। एतेनेति ।।** एतेनेत्युक्तं व्यनक्ति **।। आकाश इत्यादिना ।। व्यापारेति ।।** परिस्पन्दादिरूपव्यापाराभावनेत्यर्थः।

## तर्कताण्डवम्

**एतेनैव फलस्य विक्लृत्यादेर्धात्वर्थत्वे तस्य धात्वर्थस्य अक्रियात्वात्तण्डुलादेः क्रियाजन्यफलभागित्वरूपं कर्मत्वं न स्यादिति निरस्तम्। परसमवेतव्यापारजन्यफलभागित्व-**

**मेव हि कर्मत्वम्। स च व्यापारस्त्वाख्यातार्थो वा धात्वर्थो वेत्यन्यदेतत्। तस्मात्फलमेव धात्वर्थ इत्याह।**

**तन्न – फलस्य धात्वर्थत्वे हि ओदनकामः पचेतेत्यत्र विधि-प्रत्ययेन विक्लृत्तिरूपधात्वर्थ एवेष्टसाधनत्वं बोधनीयम्। न च तद्युक्तम्। फलस्य स्वयमिष्टत्वेन तत्साधनत्वायोगात्। प्रवृत्त्यविषयत्वाच्च। न ह्युपायमकृत्वा फलं साक्षात् साधयितुं शक्यम्।**

**तस्मात् फलसाधने प्रवृत्तिविषयेऽधःसन्तपनादिव्यापार एव विधिप्रत्येयेनष्टसाधनत्वं बोध्यमिति फलानुकूलव्यापार एव धात्वर्थः।**

## न्यायदीपः

बाधकान्तरं च प्रत्याह ॥ **एतेनैवेति** ॥ **क्रियात्वादिति** ॥ अन्यथा तद्वाचिनो धातुत्वं न स्यात्। ''भूवादयो धातव'' इत्यत्र क्रियावाचिनामेव धातुत्वोक्तेरिति भावः। सिद्धान्तरीत्याह ॥ **धात्वर्थो वेति** ॥

॥ **अन्यदेतदिति** ॥ तथाचाख्यातार्थभूताधःसन्तपनादिव्यापारजन्यविक्लृत्त्यादिफलाधारत्वात् तण्डुलानां कर्मत्वं युक्तमेवेति भावः।

इष्टसाधनत्वं विधिप्रत्ययार्थ इत्युपपादितत्वात्तदन्वयाद्ययोगरूपबाधकमाह ॥ **फलस्य धात्वतर्थत्व इति** ॥ पचतेः स्वरितेत्त्वात्कतृगामिक्रियाफले सति ''स्वरितञितः कर्त्रभिप्राये क्रियाफले'' इति पचेतेत्यात्मनेपदम्।

॥ **प्रवृत्त्यविषयत्वाच्चेति** ॥ फलस्येत्यनुषङ्गः। प्रवृत्ति-विषयस्यैव विधिप्रत्ययेनेष्टसाधनतया बोधनीयत्वात्प्रवृत्तिहेतुत्वात्तद् बोधस्येति भावः। प्रवृत्त्य-विषयत्वं व्यनक्ति ॥ **नहीति** ॥

## तर्कताण्डवम्

नन्विष्टसाधनत्वं न धात्वर्थे बोध्यते। किं तु लडर्थभूत-वर्तमानत्ववदाख्यातार्थेऽधःसन्तपनादौ बोध्यते। नचाख्यातार्थस्य व्यापारस्य धात्वर्थेन फलेन सह जनकतया अन्वितत्वेनेष्टसाधनत्वस्य लाभाद्विधिप्रत्ययवैयर्थ्यं स्यादिति वाच्यम्। अन्वयतया तल्लाभेपि प्रकारत्वेन तल्लाभार्थत्वाद् विधेः।

इष्टसाधनत्वप्रकारकमेव हि ज्ञानं प्रवर्तकमिति चेन्न। एवं हीष्टसाधनत्वान्वितस्याधःसन्तपनादेः प्रथमान्तोक्त-चैत्रेण आधेयत्वेनान्वयो नास्तीति चैत्रः पचतीति न स्यात्। जन्यतया अन्वयमात्रेण तथात्वे तु काष्ठं पचतीत्यपि स्यात्।

तस्मात्फलानुकूलोऽधःसन्तपनादिः धात्वर्थः। तदनु-कूलस्पन्दादिश्चाख्यातार्थः। स च कर्त्राधेयतयान्वेतीत्येव युक्तम्।

## न्यायदीपः

यदि विधिप्रत्ययबोध्यमिष्टसाधनत्वं धात्वर्थान्वयि स्यात्तदा स्यादयं दोषः। न चैवम्। किन्त्वाख्यातार्थान्वयीति शङ्कते॥ **नन्विति**॥ बाधकमाशङ्क्य निराह॥ **नचेति**॥ **अन्वयतयेति**॥ प्रकृतिप्रत्ययसमभिव्याहारलभ्यस्यान्वयरूपत्वादेकप्रत्ययश्रुत्या विशेषणविशेष्यभावापन्नता-बोधितयोः प्रकारप्रकारिरूपत्वादिति भावः।

किम्प्रकारत्वज्ञानेनेत्यत आह॥ **इष्टसाधनत्वेति**॥ **अन्वयोनास्तीति**॥ अधः सन्तपनादेः व्यापारस्य चैत्राधारकत्वाभावादिति भावः। तर्हि जनकाकाङ्क्षया तदन्वयोस्त्वित्यत आह॥ **जन्य-तयेति**॥

## तर्कताण्डवम्

**नच फलमनन्तर्भाव्यव्यापारमात्रस्य शक्यत्वे त्यजति-गच्छत्योरेकार्थत्वापत्तिः, फलस्य धात्वर्थप्रवेशे तु फलस्य शक्यत्वपक्ष इवेष्टसाधनत्वान्वयानुपपत्तिः, न हि फलविशिष्टं फलसाधनं भवतीति वाच्यम्। फलस्य प्रवृत्ति-निमित्तत्वेन विशेष्यतया धात्ववाच्यत्वात्। विशेष्य एव चापरपदार्थान्वयात्। केवलव्यापारस्यैव च विशेष्यत्वात्।**

## न्यायदीपः

प्रथमान्तेनाधेयतयान्वयार्थं सन्तपनादिव्यापारामात्रस्य धातुवाच्यत्वे बाधकमाशङ्क्य निराह ॥ **न च फलमिति** ॥ **एकार्थत्वेति** ॥ परिस्पन्दादिव्यापारमात्रस्योभयत्रतुल्यत्वादिति भावः ॥ **फलस्येति** ॥ उत्तरदेशसंयोगजनकपरिस्पन्दो गमिधात्वर्थः। विभागजनकपरिस्पन्दस्त्यजि-धात्वर्थः। इत्येवंरूपेण धात्वर्थप्रवेशे त्वित्यर्थः।

ननु प्रवृत्तिनिमित्तस्यापि वाच्यत्वं पूर्वं शक्तिग्रहवादे साधितमित्यत आह ॥ **विशेष्यतया धात्ववाच्यत्वादिति** ॥ ननु यथाकथञ्चिदपि धातुवाच्यत्वात्फलविशिष्टेपि व्यापारे कथं विधिप्रत्ययो-क्तेष्टसाधनत्वान्वय इत्यतो विशेषणे फले नास्त्येवेत्याह ॥ **विशेष्य एवेति** ॥ **अपरपदार्थेति** ॥ अपरशब्दार्थेत्यर्थः।

## तर्कताण्डवम्

**किञ्च यदि च फलस्य धातुवाच्यत्वं, फलाभावे व्यापारकाले पाको वर्तत इति न स्यात्। तदाख्यातस्य अप्रयुक्तत्वेन तदर्थव्यापारवर्तमानत्वमादाय वर्तत इति प्रयोगनिर्वाहासम्भवात्। न चाद्यापि फले शक्तिः क्लृप्ता। येन पाको वर्तत इत्यत्र पाकशब्दो लाक्षणिकः स्यात्।**

**किं चैवं व्यापारविगमे फलकाले पाको वर्तत इति कदाचित्प्रयोगः स्यात्। पाकशब्दमुख्यार्थस्य विक्लृत्तेः सत्त्वादिति।**

**धातोर्मण्डनोक्तफलवाचित्वभङ्गः ॥५८॥**

## न्यायदीपः

केवलं फलमेव धात्वर्थ इति पक्षे व्यापारे प्रयोगान्वयव्यतिरेकरूपं बाधकमाह ॥ **किञ्चेति** ॥ नन्वेतच्चोद्यं न च व्यापारविगम इत्यादिग्रन्थोक्तदिशा तुल्यन्यायतया परिहृतमित्यत आह ॥ **तदाख्यातस्येति** ॥ तर्हि पाक इति प्रयोगः पाकानुकूलव्यापारे लाक्षणिकोस्त्वित्यत आह ॥ **न चाद्यापीति** ॥ अन्वयमुक्त्वा व्यतिरेकं चाह ॥ **किञ्चैवमिति** ॥

धातोर्मण्डनोक्तफलवाचित्वभङ्गः ॥५८॥

***

## ५९. अथ उपसर्गाणां वाचकत्वसमर्थनम्।

## तर्कताण्डवम्

**एवं प्रजयतीत्यादौ प्रतिनोपसर्गेण प्रकर्षादिरूपार्थविशेषप्रतीतेः प्रादेः प्रकर्षादौ शक्तिरेव। न तु मण्याद्युक्तं धातुगतशक्त्यवच्छेदकत्वरूपमुपसन्दानत्वापरपर्यायं द्योतकत्वम्। गवादिशब्दानां स्वार्थ इव प्रादेरपि प्रकर्षादावावापोद्वापाभ्यां शक्तिग्रहात्।**

**प्रकृष्टजयप्रत्ययस्य च जयमात्रे क्लृप्तशक्तिकजिधातुसमभिव्याहारेणोपपत्तौ धातावेव प्रोत्तरजित्वेन प्रकृष्टजये**

**शक्तिकल्पने गौरवात्।**

## न्यायदीपः

यत्तु मणौ – शब्दखण्डे उपसर्गास्तु द्योतका न वाचका इत्यादिना द्योतकत्वमुक्तं तन्नेतिभावेन धात्वर्थनिरूपणप्रसङ्गात्तत्संसृष्टोपसर्गार्थमपि निरूपयति ॥ **एवमिति** ॥ कुत इत्यत आह ॥ **गवादीति** ॥ आवापोद्वापाभ्यामन्वयव्यतिरेकाभ्यामित्यर्थः। प्रादेरन्वये प्रकर्षादिधीस्तद्व्यतिरेके तदभावधीरित्येव-मावापोद्वापाभ्यामिति भावः।

नन्वावापोद्वापयोः शक्ततावच्छेदकत्वेनोपपत्तिरस्त्वित्यत आह ॥ **प्रकृष्टजयप्रत्ययस्य चेति** ॥ **शुक्लगवीति** ॥ समासान्तस्यानित्यत्वात्साधुः।

## तर्कताण्डवम्

**अन्यथा शुक्लां गामानयेत्यादावपि गोशब्द एव शुक्लोत्तरगोशब्दत्वेन शुक्लगवि शक्तिकल्पनाप्रसङ्गाच्च। न च सार्थकत्वेन क्लृप्तस्य धातोरेव नानार्थत्वं कल्प्यम्। न तु स्वातन्त्र्येणार्थानवबोधकत्वेन निरर्थकस्य प्रादेरर्थवत्त्वमिति वाच्यम्। व्यतिस इत्यादावुपसर्गस्यापि स्वातन्त्र्येणान्वय-बोधकत्वदर्शनात्।**

**अस्वातन्त्र्यमात्रेण निरर्थकत्वे चशब्दैवशब्देवशब्दा-दीनां प्रकृतिप्रत्ययादीनां च नैरर्थक्यप्रसङ्गात्। धातोरेवाक्षा-दिवन्नानार्थत्वेऽर्थविशेषबोधने उपसर्गानपेक्षाप्रसङ्गात्।**

## न्यायदीपः

ननु – शुक्लशब्दस्यापि गोशब्दस्येव लोकेर्थवत्त्वं क्लृप्तं न तु प्रदेरूपसर्गस्यतो वैषम्यान्न प्रतिबन्दीति भावेनाशङ्क्य निराह ॥ **न च सार्थकत्वेनेति** ॥ जयार्थत्वं प्रकृष्टजयार्थत्वमित्येवंरूपेण

नानार्थत्वमित्यर्थः ॥ **स्वातन्त्र्येणेति** ॥ धातुपरित्यागेनेत्यर्थः ॥ **व्यति स इति** ॥ वि-अतीत्युपसर्ग-द्वयपूर्वकादस भुवीत्यस्मात् "कर्तरि कर्मव्यतिहारे" इत्यात्मनेपदे "श्नसोरल्लोप" इत्यकारलोपे "तासस्त्योर्लोप" इति सकारलोपे प्रत्ययसकारस्य "सात्पदाद्योरिति" षत्वाभावे च व्यतिस इति रूपम्। व्यतिभवस इत्यर्थः ॥ **उपसर्गस्येति** ॥ जातावेकवचनम्। तत्र धातोरश्रवणेप्युपसर्गप्रत्यय-मात्रश्रवणेप्यर्थबोधदर्शनादित्यर्थः।

तत्रापि स्मृतधातोरेवार्थबोधकत्ववादिनं प्रत्याह ॥ **अस्वातन्त्र्यमात्रेणेति** ॥ **चशब्दैव-शब्दादीनामिति** ॥ चशब्दस्यैवकारस्य इवशब्दस्य तुशब्दहिशब्दादीनां प्रत्येकमर्थबोधकत्वा-दृष्टेरिति भावः।

## तर्कताण्डवम्

**नचोपसर्गस्यापि शक्तत्वे धात्वपेक्षा न स्यादिति वाच्यम्। प्रकृतिप्रत्ययाभ्यां प्रत्ययप्रकृत्योरिवोपसर्गेण साधुत्वार्थमेव धातोरपेक्षणेनार्थबोधनार्थमनपेक्षणात्। धातुस्त्वर्थविशेषबोधनार्थमेवोपसर्गसापेक्षः।**

**अन्यथा चकारादिरपि समभिव्याहृतशब्दान्तरस्य, प्रकृतिरपि प्रत्ययस्योपसन्दानं स्यात्।**

**किञ्चैवं धातोः प्रोत्तरजित्वेन प्रकृष्टजये शक्तिश्चेत् प्रशब्दस्यैव जिपूर्वत्वेन तत्र शक्तिः किं न स्यात्। तस्मादा-वापोद्वापाभ्यां जिधातोर्जय इव प्रशब्दस्यापि प्रकर्षे शक्तिरेव। एवं चेत् प्रतिष्ठत इत्यत्र प्रकृष्टगतिनिवृत्तिधीरेव स्यात्, न तु गतिधीरिति चोद्यं तूभाभ्यां समाधेयम्।**

## न्यायदीपः

॥ **प्रकृतिप्रत्याभ्यामिति** ॥ न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्यय इति प्रकृतिः स्वस्य

साधुत्वार्थमेव प्रत्ययसाहाय्यमपेक्षते न तु स्वार्थबोधनार्थम्। प्रत्ययोपि स्वस्य साधुत्वार्थमेव प्रकृतिमपेक्षते। यथा तथैवोपसर्गेणापि "उपसर्गाः क्रियायोगे" इति सूत्रेण प्रादीनां क्रियावाचियोगे सत्येवोपसर्गसञ्ज्ञोक्त्योपसर्गाणां क्रियाविनाभावेन साधुत्वार्थमेव धात्वपेक्षा न त्वर्थबोधायेत्यर्थः।

ननु – जिप्रभृतिधातुरपि स्वयमेव प्रकृष्टजयादिवाचकः उपसर्गं तु स्वस्य साधुतार्थमेवापेक्षते। न तु प्रकृष्टत्वादिरूपार्थविशेषबोधनाय। येनोपसर्गाणामप्यर्थवत्त्वं स्यादित्यत आह ॥ **धातुस्त्विति** ॥ उपसर्गव्यतिरेकेण केवलधातुप्रयोगस्यापि दर्शनेन तेन विना धातोः साधुत्वं नेत्यस्याभावादिति भावः ॥ **उपसन्दानं स्यादिति** ॥ द्योतकः स्यान्नत्वर्थविशेषस्य वाचकः स्यादित्यर्थः।

नन्वन्वयव्यतिरेकाभ्यां जिधातोर्जयरूपार्थवत्त्वं क्लृप्तमिति न वैपरीत्यं युक्तमित्याशङ्कां परिहरन्नुपसंहरति ॥ **तस्मादिति** ॥ उक्तार्थे बाधकमाशङ्क्य निराह ॥ **एवं चेदिति** ॥ **प्रतिष्ठत इति** ॥ "समवप्रविभ्यःस्थः" इत्यात्मनेपदम् ॥ **गतिनिवृत्तिधीरिति** ॥ "ष्ठा गतिनिवृत्ता"विति धातुपाठादिति भावः ॥ **उभाभ्यामिति** ॥ उपसर्गस्यावाचकत्ववादिना वाचकत्ववादिना चेत्यर्थः।

## तर्कताण्डवम्

**यदि तव ष्ठाधातुः प्रोत्तरो गत्यर्थस्तदनुत्तरस्तु गति-निवृत्त्यर्थ इति नानार्थस्तर्हि ममापि प्रशब्दः ष्ठाधातुपूर्वो गत्यर्थस्तदपूर्वस्तु प्रकर्षार्थ इति नानार्थोस्तु।**

**ननु तथात्वे प्रतिष्ठत इत्यत्र प्रत्ययार्थस्य गमनान्वयो न स्यात्। प्रशब्दस्याप्रकृतित्वात्। प्रत्ययस्य च प्रकृत्य-र्थान्वितस्वार्थबोधकत्वनियमात्। धातुस्तु प्रकृतिरिति मन्मते न दोष इति चेन्न। त्वयैवाख्यातार्थभूतायां सङ्ख्यायामस्य नियमस्य त्यागात्।**

## न्यायदीपः

प्रतिष्ठत इत्यत्र गमनं धात्वर्थ एवेत्यादिना मण्युक्तं समाधिमनूद्य समं तन्ममापीत्याह

**।। यदीत्यादिना ।।** गमनस्य प्रशब्दार्थत्वे भावनान्वयो न स्यादिति मण्युक्तं बाधकमाशङ्कते **।। ननु तथात्व इति ।।** गतेः प्रशब्दार्थत्व इत्यर्थः **।। प्रत्ययार्थस्येति ।।** लट्प्रत्ययार्थस्य प्रयत्नस्य व्यापारस्य वा गमनेन सह जनकत्वरूपान्वयो न स्यादित्यर्थः । कुत इत्यत आह **।। प्रशब्दस्येति ।। मन्मत इति ।।** प्रोत्तरस्थाधातोरेव गमनमर्थः, प्रशब्दस्तूपसन्दानमात्रमिति मते दोषो नास्ति, कुतः धातुस्तु प्रकृतिरिति हेतोरित्यर्थः ।

यद्वा धातुस्तु प्रकृतिः गमनवाचक इति मन्मत इति यथान्यास एव योजना **।। अस्य नियमस्येति ।।** प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमस्येत्यर्थः । प्रातिपदिकार्थ एवान्वयस्वीकारादिति भावः । व्यक्तमेतत्कर्त्रादेर्लकारवाच्यत्वसमर्थनवादे । न च सङ्ख्यान्वयप्रत्ययार्थस्य प्रकृत्यर्थान्वितत्वनियम इति वाच्यम् । विनिगमनविरहात् । वर्तमानत्वस्य यत्नान्वयस्वीकाराच्च ।

## तर्कताण्डवम्

**किञ्च प्रत्ययार्थान्वयेपि प्रयोजकीभूतं प्रकृत्यर्थत्वं – न तावत्प्रकृतिजन्यधीविषयत्वम् । घटमानयेत्यादावाकाशादेः कारणत्वसम्बन्धेन प्रकृतिजन्यधीविषयत्वेन कर्मत्वान्वयप्रसङ्गात् ।**

**नापि प्रकृतिवृत्तिविषयत्वम् । गम्भीरायां नद्यां मत्स्य इत्यादौ गम्भीरनद्याः सप्तम्यर्थानन्वयप्रसङ्गात् । न हि विशिष्टं नदीवृत्तेर्विषयः ।**

## न्यायदीपः

अस्तु वायं नियमस्तथापि गतेः प्रशब्दार्थत्वोपि न प्रत्ययार्थानन्वयानुपपत्तिः । उपसर्गार्थस्यापि प्रकृत्यर्थत्वमस्त्येवेति वक्तुं प्रकृत्यर्थत्वेन प्रसक्तं पक्षद्वयं तावदपाकरोति **।। किञ्च प्रत्ययार्थेति ।।**

परमतेनाह **।। आकाशादेः कारणत्वसम्बन्धेनेति ।।** तन्मते शब्दस्य जन्यत्वेन घटादिशब्दान् प्रत्याकाशस्य कारणत्वात् **।। विशिष्टं नदीति ।।** गाम्भीर्ययुक्तनदी न नदीपदवृत्तेर्विषयः । येन नद्यामित्यत्र

श्रुतसप्तम्यर्थान्वयः स्यादित्यर्थः। यद्वान्विते वृत्तेस्त्वयानङ्गीकाराद्गाम्भीर्यवैशिष्ट्यस्य समभिव्याहार-लभ्यत्वाद् विशिष्टनदी न वृत्तेर्विषय इत्यर्थः।

### तर्कताण्डवम्

**किन्तु वृत्तिसहकारेण प्रकृतिप्रयोज्यधीविषयत्वमात्रम्। अस्ति च तत्प्रशब्दार्थेपि गमने। तस्य प्रशब्दशक्तिसहकारेण ष्ठाधातुरूपप्रकृतिप्रयोज्यधीविषयत्वात्। भवति हि प्रशब्दशक्तिजन्यापि गमनधीः ष्ठाधातुप्रयोज्या। धात्वभावे असाधुत्वेन प्रशब्दस्याख्यातस्य च प्रयोगासम्भवात्।**

**यद्वाऽश्वकर्णादिशब्दस्य वृक्षविशेष इति प्रोत्तरस्य ष्ठाधातोर्गमने रूढत्वाद्धातुवत्प्रशब्दोपि शक्त्याश्रयकोटि-निविष्ट एव न तूपसन्दानम्।**

### न्यायदीपः

प्रकृत्यर्थत्वं निष्कृष्य वदन्प्रकृते तदस्तीत्याह ॥ **किं त्वित्यादिना** ॥ धातुप्रयोज्यत्वं व्यनक्ति ॥ **धात्वभाव इति** ॥ प्रयोगनिर्वाहकत्वेन धातोरन्यथोपयोगे प्रत्ययस्यापि प्रकृतिसाधुत्वार्थता-पत्तेर्धातोरप्यर्थवत्त्वावश्यम्भवादित्यनुशयेनाह ॥ **यद्वेति** ॥ **रूढत्वादिति** ॥ मुख्यार्थधीद्वारा गत्यर्थप्रतीतेरभावेन शीघ्रमेव गच्छतीत्यादाविव प्रतिष्ठत इत्यादावपि गत्यर्थप्रतीतेरिति भावः।

एतेन – प्रतिष्ठित इत्यत्र विरोधिलक्षणया धोतोर्गमनोपास्थितिः तात्पर्यग्राहकः प्रशब्द इति मण्युक्तं निरस्तम्। गतिप्रतीतौ मुख्यार्थधीविलम्बाभावात्। विवरिष्यते चायं लक्षणापक्षनिरासोग्रे।

### तर्कताण्डवम्

**केचित्तु – प्रतिष्ठत इत्यत्र प्रशब्दो निषेधार्थः। एवं च प्रशब्दार्थेन निषेधेन धात्वर्थस्य गतिनिवृत्तेः प्रतियोगित्वेन**

अन्वयाद्गतिनिवृत्तिनिषेधधीरस्तु।

न चैवं गतिनिवृत्तिनिषेधस्य अप्रकृत्यर्थत्वादाख्याता- र्थान्वयो न स्यादिति शङ्क्यम्। गम्भीरायां नद्यामित्यत्र गम्भीरनद्योरन्वयानन्तरं विशिष्ट एवार्थे नद्युत्तरसप्तम्यर्था- न्वयवत्तण्डुलान्पचतीत्यत्र तण्डुलविशिष्टपाके भावना- न्वयवच्च प्रशब्दार्थधात्वर्थयोर्निषेधप्रतियोगिनोरन्वया- नन्तरं विशिष्टे गतिनिवृत्तिनिषेधे भावनान्वयसम्भवात्। गतिनिवृत्तिरूपप्रतियोग्यनुल्लेखस्तु प्रळयविरामविमल- स्थित्यादिशब्दजन्यप्रतीताविव शब्दस्वभावाद्युक्त इत्याहुः।

## न्यायदीपः

उक्तार्थे बाधकमाशङ्क्य निराह ।। **नचैवमिति** ।। अप्रकृत्यर्थत्वात्धातुरूपप्रकृत्यर्थत्वा-भावात्। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमादिति भावः। तर्हि प्रतियोग्युल्लेखः स्यादित्यत आह ।। **गतिनिवृत्तिरूपेति** ।। **स्थितीति** ।। गतिनिवृत्तिरूपत्वेपि न तथोल्लेख इति भावः।

अत्र पक्षे यद्यप्यनेकसंविधानसोपक्षतया कुसृष्टित्वं रूढपक्षस्यैव ऋजुत्वमित्यस्त्यरुचिबीजम्। तथापि मण्युक्तलक्षणानिरासायैतत्पक्षावतार इति ज्ञेयम्।

## तर्कताण्डवम्

ननु – गतिनिवृत्तौ क्लृप्तशक्तिकस्य ष्ठाधातोः प्रोत्तरस्य गमने लक्षणैवास्तु। विरोधरूपस्य सम्बन्धस्य सत्त्वात्। कृतं प्रशब्दस्य शक्तिकल्पनया अनन्यलभ्यस्यैव शक्यत्वात्। तथा च प्रजयतीत्यात्रापि जयमात्रे शक्तस्य जिधातोः प्रकृष्टजये लक्षणैवास्त्विति चेन्न। अनुभवति परिणमत इत्यादौ विरोधरूपस्यापि शक्यसम्बन्धस्याभावात्। तत्र

**कथञ्चिच्छक्यसम्बन्धकल्पने प्रशब्दस्यैव कथञ्चिच्छक्य-समबन्धकल्पनेन गमने लक्षणास्तु।**

## न्यायदीपः

अथवा प्रतिष्ठत इत्यत्रेत्यादिना मण्युक्तलक्षणापक्षं चानूद्य प्रत्याह ॥ **नन्विति** ॥ **अनुभवतीति** ॥ सत्तार्थस्य भूधातोरुपसर्गयोगेनानुभवार्थत्वं प्रतीयते। तत्रानुभस्य सत्ताविरोधित्वाभावात्। परिणमत इत्यत्रापि प्रह्वीभावार्थकस्य नमेः परीत्युपसर्गयोगेन विकाररूपार्थकत्वं प्रतीयते। स च न प्रह्वीभावविरोधीति भावः ॥ **तत्र कथञ्चिदिति** ॥ अनुभवस्य वस्तुसत्ताधीनत्वादिनेत्यर्थः ॥ **प्रशब्दस्यैवेति** ॥ यत्नादिप्रकर्षेण गतेर्जायमानत्वात्प्रकर्षरूपशक्यार्थेन गतेः कथं चिज्जन्य-जनकत्वादिरूपसम्बन्धसम्भवात्। आवापोद्वापाभ्यां प्रोपसर्गादेव गतिप्रतीतिदर्शनादिति भावः।

न चैवं प्रशब्दस्यैव गत्यर्थत्वे धात्वपेक्षा न स्यादिति शङ्क्यम्। शब्दसाधुत्वार्थमेव तदपेक्षणेनार्थ-बोधने तदपेक्षाभावस्योक्तत्वात्। तादृशस्यापि प्रकृत्यर्थत्वथनेनाख्यातार्थान्वयस्यापि प्रागेवोक्तत्वादिति भावः।

## तर्कताण्डवम्

**किञ्च प्रजयतीत्यादौ क्लृप्तशक्तिकजिशब्दलक्षणयैव प्रशब्दार्थलाभेन तच्छक्त्यपलापे क्लृप्तशक्तिकप्रत्यय-लक्षणयैव धात्वादिप्रकृत्यर्थलाभे धात्वादिशक्त्यपलापः स्यात्।**

**किञ्च प्रशब्दस्य प्रकर्षे शक्तिरन्वयव्यतिरेकसिद्धा। प्रकृष्टजयस्तु पदान्तरसमभिव्याहारलभ्य इति न तत्र धातो-र्लक्षणा।**

**किञ्च सम्भूयैकार्थबोधकत्वरूपैकवाक्यत्वरक्षार्थं गङ्गाशब्दादौ लक्षणा कल्प्यते। प्रशब्दस्य निरर्थकत्वे च**

कथमेव वाक्यत्वम्। यद्रक्षणार्थं लक्षणा कल्प्यते। उपसन्दानतयैकार्थबोधकत्वेनैवैकवाक्यत्वे च गङ्गाशब्दस्याप्युपसन्दानत्वेनैकवाक्यत्वं स्यात्।

किञ्च प्रकृष्टजये धातोर्लक्षणा चेत्प्रशब्दापेक्षा न स्यात्।

## न्यायदीपः

प्रशब्दस्य शक्यार्थ एव नेति वदन्तं प्रत्याह ॥ **किञ्चेति** ॥ **धात्वादिशक्त्यपलाप इति** ॥ ननु विनिगमनाविरहेण वैपरीत्यस्यापि सम्भवाद् द्वयोरप्यन्वयव्यतिरेकाभ्यां क्लृप्तशक्तिकत्वान्नान्यतरशक्त्यपलाप इति चेत्तर्ह्युपसर्गस्यापि क्लृप्तशक्तिकत्वान्नापलापः कार्य इति सममिति भावः।

यदपि प्रकृष्टजये लक्षणैवास्त्विति तन्निराह ॥ **किञ्चेति** ॥ लक्षणबीजाभावाच्च प्रजयतीत्यादौ लक्षणा न युक्तेत्याह ॥ **किञ्च सम्भूयेति** ॥

## तर्कताण्डवम्

न च यथा बहुव्रीहिस्थगोशब्दस्य बहुव्रीहिर्लक्ष्येऽन्यपदार्थे तात्पर्यग्राहकस्तथा धातोः प्रशब्दो लक्ष्ये प्रकृष्टजये तात्पर्यग्राहक इति वाच्यम्। तथात्वे तद्वदेव नियतलक्षणात्वेन प्रपूर्वस्य जिधातोः प्रकृष्टभङ्गादौ लक्षणाभावप्रसङ्गात्।

यदि तु – प्रशब्दः प्रकृष्टभङ्गादावपि तात्पर्यग्राहकस्तर्हि प्रशब्दमात्रस्यानियतत्वात्तात्पर्यनियमार्थं प्रकरणादिकमावश्यकमिति प्रशब्दवैयर्थ्यम्।

किञ्च – प्रकृष्टजये लक्षणा चेज्जयत्वप्रकारिकाधीर्न स्यात्। लक्ष्यस्य शक्यतावच्छेदकरूपेणाप्रतीतेः।

अत एवाजहत्स्वार्थायामपि लक्षणायां काकस्यापि न काकत्वेन धीः। किन्तु दध्युपघातकत्वेनैव।

## न्यायदीपः

मण्युक्तमुपसर्गप्रयोजनमाशङ्क्य निराह ॥ **न च यथेति** ॥ चित्रगुरित्यादिस्थगोशब्दस्य यत्तात्पर्यमन्यपदार्थे तद्ग्राहको यथा बहुव्रीहिः तथा धातोस्तात्पर्यग्राहकः प्रशब्द इत्यर्थः। तद्वदेव बहुव्रीहेरिवैकार्थविशेषलाक्षणिकत्वनियमेनेत्यर्थः।

॥ **प्रशब्दमात्रस्येति** ॥ तस्य प्रकृष्टजयादावनेकार्थतात्पर्यग्राहकत्वेन तन्मात्रस्येह प्रकृष्ट-जयोऽर्थः। इह च प्रकृष्टभङ्गोर्थ इत्यर्थविशेषतात्पर्यनिर्णयाक्षमत्वात् तत्प्रकारणादिरूपतात्पर्य-निर्णायकान्तरसापेक्षत्वे तेनैव पूर्णत्वाद्व्यर्थः प्रशब्द इत्यर्थः ॥ **शक्यतावच्छेदकेति** ॥ प्रजयतीत्या-दावपि विशेष्यवाचकस्य धातोर्विशिष्टे लक्षणैवेति मण्युक्त्या जयत्वस्य शक्यतावच्छेदकत्वादिति भावः।

## तर्कताण्डवम्

तस्मादुपसर्गाः स्वार्थे शक्ता एव। वैयाकरणानामुपसर्गे निरर्थकत्वप्रसिद्धिस्तु स्वातन्त्र्येणार्थानवबोधकत्वमात्रेण। एतदेवाभिप्रेत्योक्तं भगवत्पादैः–

‘‘समिति ह्युपसर्गेण परमुख्यार्थतोच्यते।’’ इति;

‘‘उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति।
अतिक्रमं वदन्तं तमुपशब्दो निवारयेत्।’’

इति च।

उपसर्गाणां वाचकत्वसमर्थनम् ॥ ५९ ॥

## न्यायदीपः

नन्वेवमाद्यस्य द्वितीयपादे "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यत्र "निपातस्य अनर्थकस्य प्रतिपदिकत्वं वक्तव्य"मित्यादिमहाभाष्योक्तेः, कैयटे च पस्पशादिमग्रन्थे निपातानां द्योतकत्वं वाक्यपादीये निर्णीतमित्याद्युक्तेस्तद्विरोध इत्यत आह ॥ **वैयाकरणानामिति** ॥ अन्यथा "अतिरतिक्रमणे च" "सुः पूजायाम्" इत्याद्युक्तिर्न स्यादिति भावः।

॥ **समिति हीति** ॥ वाक्यमुपासनापादीयानुव्याख्याने समन्वयसूत्रस्थसमित्यस्यार्थोक्तिपरम्। उपसक्रमणं चेति वाक्यं त्वानन्दमयनयानुव्याख्याने "एतमन्नमयमात्मानमुपसङ्क्रम्य" इति श्रुतिस्थोपशब्दव्याख्यानपरम्।

उपसर्गाणां वाचकत्वसमर्थनम् ॥ ५९ ॥

समाप्तः आख्यातवादः

* * *

---

# वृत्तित्रयवादः

## ६०. अथ रूढ्यादिवृत्तित्रयलक्षणम्।

### तर्कताण्डवम्

**अस्य च शब्दस्य वृत्तिस्त्रिधा। अभिधालक्षणा गौणी चेति। तदुक्तमनुव्याख्याने–**

**"तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता।**
**उपलक्षणा च गौणी च तिस्रः शब्दस्यवृत्तयः"**

**इति। तत्राद्या मुख्यवृत्तिरित्युच्यते। द्वितीयतृतीये त्वमुख्य-वृत्ती इति।**

### न्यायदीपः

एवं प्रकृतिप्रत्ययोपसर्गादिशब्दार्थनिर्णये सति तदर्थबोधोपायरूपप्रवृत्तिचिन्तावसरः। तत्र–

"प्रयोगमात्रबाहुळ्यं रूढितिरत्यभिधीयते"।

इत्यानुमानिकपादीयानुव्याख्यानसुधायां "मुख्यवृत्तिरपि त्रेधा भवति। योगो रूढिर्योगरूढि"रित्यादि-वाक्यानि विवृण्वानो वृत्तिसामान्यलक्षणमग्रे विवक्षुर्विभागेन तावन्निर्दिशति ॥ **अस्य चेति** ॥ यस्य शब्दस्यान्विितार्थाभिधायकत्वादिरूपोर्थोऽभिहित अस्येति सङ्गतिं सूचयति। जात्यभिप्रायमेकवचनम्।

यद्वास्येति लौकिकेष्वर्थेषु व्यवह्रियमाणस्य न तु विष्णावित्यर्थः। विष्णौ व्यवह्रियमाणशब्देषु वृत्तिभेदस्य चन्द्रिकायां व्युत्पादनात्। अतो न वक्ष्यमाणोपष्टम्भकानानुगुण्यमिति ध्येयम्। गौण्या लक्षणातो ज्यायस्त्वेप्यनुव्याख्यानानुरोधेनायं निर्देशः ॥ **तदुक्तमिति** ॥ आनुमानिकपादे। अन्यत्र तिस्रः शब्दस्य वृत्तय इत्यन्वयः। गौणी चेत्यनन्तरमिति शब्दोऽध्याहार्यः।

ननु – तत्र मुख्यतेत्येवोच्यते नत्वभिधेति तत्कथं सम्मतिरित्यत आह ॥ **तत्राद्येति** ॥ मुख्यते-त्युक्त्या लब्धार्थमाह ॥ **द्वितीयतृतीये त्विति** ॥

## तर्कताण्डवम्

**वृत्तिश्च शब्दस्य तात्पर्यरूपमर्थप्रतिपादकत्वम्। न तु मण्युक्तरीत्या शाब्दबोधानुकूलपदार्थोपस्थितिहेतुः पदार्थ-सम्बन्धः। वाक्यस्थं पदं न स्मारकमित्युक्तत्वेन शाब्दा-न्वयबोधानुकूलायाः स्मृतिरूपायाः पदार्थोपस्थितेरभावात्। अयं शब्दोनेन सम्बन्धेनात्रार्थे वर्तत इति सम्बन्धस्य वृत्ति-हेतुत्वव्यवहाराच्च। गङ्गायां घोष इत्यादौ गङ्गाशब्दस्य प्रवाहे वृत्त्यभावव्यवहाराच्च।**

## न्यायदीपः

का नाम वृत्तिरित्यतस्तत्सामान्यलक्षणमुक्त्वा तत्साधयति ॥ **वृत्तिश्चेति** ॥ अत एव प्रागेवानुक्तिः। प्रतिपादकत्वं प्रतिपत्तिजनकत्वम् ॥ **मण्युक्तेति** ॥ शक्तिवादे ॥ **शाब्देति** ॥ शाब्दबोधपदं अन्वयबोधपरम्। शाब्दान्वयबोधानुकूला या पदार्थोपस्थितिस्मृतिरूपा तद्धेतुः पदपदार्थनिरूपितः सम्बन्ध इत्यर्थः।

॥ **उक्तत्वेनेति** ॥ भाट्टभिमताभिहितान्वयभङ्गे। तथाचासम्भाविलक्षणमिति भावः। प्रकारा-न्तरेण मण्युक्तलक्षणस्य वृत्तावसम्भवमाह ॥ **अयमिति** ॥ **अनेनेति** ॥ शक्तिसम्बन्धेन लक्षणा-सबन्धेनेति शक्त्यादिपरामर्शः। वर्तते वृत्तिमान्भवतीत्यर्थः।

ननु – गजेन धानवानित्यादौ गजरूपधनवानित्यर्थवत् शक्तिसबन्धरूपवृत्तिमानित्यर्थोस्त्विति वादिनं प्रत्याह ॥ **गङ्गायामिति** ॥ लाक्षणिकस्थळे प्रवाहादौ वृत्तिहीनेपि गङ्गादिशब्दे शाब्दबोधानुकूल-तीरादिपदार्थोपस्थितिहेतुभूतस्य तीरसम्बन्धस्य प्रवाहे सत्त्वेन त्वदुक्तलक्षणसत्त्वाद्गङ्गादिपदेपि प्रवाहे वृत्तिः स्यात्। न चेष्टापत्तिः। तथा व्यवहाराभावात्। प्रत्युत वृत्यभावव्यवहार एवास्तीति त्वदुक्त-

लक्षणमतिव्याप्तमिति भावः।

## तर्कताण्डवम्

तत्र शक्त्या प्रतिपादकत्वमभिधा। न तु मण्युक्तरीत्या शक्तिरेव। गङ्गायां घोष इत्यत्रापि गङ्गाशब्दस्य तीरे शक्तिसद्भावेन तदभिधत्त इति व्यवहारापातात्। तत्र शक्तेर्मूकीभूतत्वान्न तथा व्यवहार इति। अप्रतिपादकत्वातिरिक्तस्य मूकीभावस्याभावेन प्रतिपादकत्वस्यैवाभिधात्वसिद्धेः।

अभिधाऽपि त्रेधा। रूढिर्योगो योगरूढिश्चेति। तत्राखण्डशक्त्या प्रतिपादकत्वं रूढिः। यथा घटादिशब्देषु।

न च तेप्यौणादिकप्रत्ययान्तत्वाद्योगिका इति शङ्क्यम्। अर्थानुगमादर्शनेन व्याकरणस्य साधुत्वमात्रपरत्वात्। अन्ततः प्रकृतिप्रत्ययोरपि स्वार्थे रूढेराश्रयणीयत्वाच्च। न तु समुदायशक्ती रूढिः। एकाक्षरप्रत्ययादौ समुदायाभावात्। योगविवक्षया प्रयुक्ते मण्डपादिशब्दे रूढिव्यवहारापाताच्च। अवयवशक्तिसापेक्षावृत्तिर्योगः। यथा कुम्भकारौपगवराजपुरुषादिशब्देषु।

## न्यायदीपः

एवं सामान्यलक्षणविभागाविशेषोद्देशौ च प्रदर्श्याभिधालक्षणं तावदाह ॥ **तत्र चेति** ॥ वृत्तित्रयमाध्ये ॥ **तीरे शक्तिसद्भावेनेति** ॥ प्रवाहगोचरशक्तेस्तीरं प्रत्यप्रतिहतत्वेन शब्दगतशक्तिमात्रस्य अभिधात्वे तीरमभिधत्तं इति स्यात्। शक्त्याभिधायकत्वमभिधेति पक्षे तु नायं दोषः। तीरप्रतिपादने प्रवाहशक्तेरकिञ्चित्करत्वादिति भावः। शक्तिरेवेत्यस्य ज्ञानजननसामर्थ्यमेवेत्यर्थः। तीरे शक्तीत्यस्य

तीरज्ञानजनने सामर्थ्यसद्भावेपीत्यर्थ इत्येके ॥ **अखण्डेति** ॥ अवयशक्त्यर्थाप्रतिपादके योगेऽतिव्याप्तिनिरासायाखण्डेत्युक्तिः। अखण्डा वृत्ती रूढिः अवयववृत्तिर्योगः इति प्रमाणलक्षणटीकोक्तेरपि अयमेवार्थो ध्येय इति भावः।

रूढ्यभावमाशङ्क्य निराह ॥ **नचेति** ॥ **मण्डपादीति** ॥ मण्डं पिबतीत्यर्थविवक्षया प्रयुक्तेपि शब्दे गृहविशेषविषयसमुदायशक्तेः सत्त्वादिति भावः। यद्वा मण्डशब्दपशब्दयोरपि प्रत्येकसमुदाय-रूपत्वेन समुदायशक्तेस्तत्रापि भावादिति भावः।

॥ **वृत्तिरिति** ॥ अर्थप्रतिपादकत्वं योग इत्यर्थः। कृदन्ततद्धितान्तसमासशब्दानां त्रिविधानां यौगिकानां सुधोक्तानामेवोदाहरणानामुक्तिर्यथा कुम्भकारेत्यादि। कुम्भं करोतीति कुम्भपदे कर्मण्युपपदे ''डुकृञ् करणे'' इत्यस्मात् ''कर्मण्यण्'' इत्यण्प्रत्यये कुम्भकारेति रूपम्। उपगोरपत्यमित्यपत्यार्थे ''तस्यापत्यम'' इत्यण्प्रत्यये औपगवेति रूपम्।

## तर्कताण्डवम्

**न चात्रापि व्याकरणं साधुत्वमात्रपरम्। अर्थानुगम-दर्शनात्। यद्यपि कुम्भप्रातिपदिककरोतिधात्वण्प्रत्ययाः स्वस्वार्थेन्यानपेक्षा रूढा एव। तथापि समुदायः कुम्भकर्तृरूपे विशिष्टेऽर्थेवयवशक्तिसापेक्षः। न त्वश्वकर्णादिशब्दो वृक्ष-विशेष इव तन्निरपेक्ष इति यौगिकः।**

**न च वाक्यस्यापि स्वार्थबोधने स्वावयवभूतपदशक्ति-सापेक्षत्वाद् योगवृत्तिः स्यादिति वाच्यम्। अवयवशब्देन पदावयवस्य विवक्षितत्वात्। न त्ववयवशक्तिरेव योगः। एकैकस्या अवयवशक्ते रूढित्वात्। शक्तिमेलनस्यावयवे समुदाये चाभावात्। रूढिविवक्षया प्रयुक्ते मण्डपादिशब्दे योगव्यवहारापाताच्च। अवयवशक्तिसापेक्षसमुदायशक्त्या अर्थप्रतिपादकत्वं योगरूढिर्यथा पङ्कजादिशब्देषु। अयं**

**ह्यवयवशक्त्या पङ्कजनिकर्तृत्वं, समुदायशक्त्या पद्मत्वं च बोधयति। न तु वृत्त्यन्तरं योगरूढिः। निरसिष्यमाणत्वात्।**

## न्यायदीपः

शाकटायनाभिमतं योगवृत्त्यभावमाशङ्क्य प्रत्याह ॥ **न चात्रापीति** ॥ घटादिशब्देष्विवेत्यपेरर्थः।

ननु – कुम्भादिपदानां प्रत्येकं रूढत्वात्कथं यौगिकत्वमित्याशङ्कामनूद्य प्रत्याह ॥ **यद्यपीति** ॥ योगलक्षणस्यातिव्याप्तिमाशङ्क्य निराह ॥ **न च वाक्यस्यापीति** ॥ **पदावयवस्येति** ॥ न चैवं राजपुरुष इत्यादौ योगिकत्वं न स्यात्। पदसमुदायरूपत्त्वात्तस्येति वाच्यम्। ऐकपद्यमैकस्वर्यमैकविभक्तिकत्वं समासप्रयोजनमित्युक्त्या समस्तस्याप्येकपदत्वेन तदवयवस्यापि पदावयवत्वसत्त्वादिति भावः।

पक्षान्तरं निराह ॥ **न त्विति** ॥ किमवयवशक्तिरेकैकैव योगो अथ तत्समुदाय इति कल्पौ क्रमेण निराह ॥ **एकैकस्या इति** ॥ **योगव्यवहारापातादिति** ॥ तत्राप्यवयवशक्तेः सत्त्वात्। सिद्धान्ते तु तत्सत्त्वेपि तत्रावयवशक्तेतत्राप्यवयवशक्तेः सत्त्वात्। सिद्धान्ते तु तत्सत्त्वेपि तत्रावयवशक्तेर्मूकीभावेन तया समुदायस्यार्थप्रतिपादकत्वाभावान्न दोष इति भावः।

॥ **अवयवेति** ॥ अवयवशक्तिसापेक्षया समुदायशक्त्येत्यर्थः। केवलरूढ्यादावतिव्याप्ति-निरासाय द्वयोरुक्तिः ॥ **वृत्त्यन्तरमिति** ॥ योगवृत्तिरूढिवृत्तिभ्यामन्या नेत्यर्थः। किन्तु तत्समाहाररूपैवेति भावः ॥ **निरसिष्यमाणत्वादिति** ॥ योगरूढिसमर्थनवादान्ते। "नन्वयववृत्तिर्योगः रूढिस्त्वखण्डवृत्ति-रित्यादिना ग्रन्थेनेति भावः।

## तर्कताण्डवम्

**यत्तु सुधायाम्–**

**"प्रयोगमात्रबाहुळ्यं रूढिरित्यभिधीयते"।**

**इत्यनुव्याख्यानानुसारेणयस्य यत्रावयवार्थमुख्यार्थसादृश्य-सम्बन्धानपेक्षः प्रयोगस्तस्य तत्र रूढिः। तत्रावयवार्था-**

**नपेक्षत्वोक्त्या योगयोगरूढिभ्यां मुख्यार्थसादृश्यसम्बन्धानपेक्षत्वोक्त्या गौणलक्षणाभ्यां च व्यवच्छेद इत्युक्तम्। तदखण्डशक्तौ प्रमाणमप्युक्तः प्रयोगोऽसाधारणत्वाल्लक्षणं च भवतीत्यभिप्रेत्य। न तु शक्तिर्नास्तीति। अनुव्याख्याने–**

**"शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते"।**

**इति गवादिशब्देष्वपि शक्त्युक्तेः–**

**"बहुळातिप्रयोगतः। रूढमित्येव साध्यं स्यात्"**

**इति प्रयोगेण रूढिसाधनाच्च। सुधायामपि–**

**"प्रयोगयुक्तसादृश्यम्"**

**इत्यनुव्याख्यानस्थप्रयोगशब्दस्य सामर्थ्यमर्थ इत्युक्तत्वाच्च।**

## न्यायदीपः

उक्तरूढिलक्षणे योगरूढिलक्षणे चानुमानिकपादीयसुधोक्तिं विवृण्वान एव तद्विरोधमाशङ्क्य तत्तात्पर्योक्त्या निराह ॥ **यत्त्विति** ॥ तदिति वक्ष्यमाणेनान्वयः। सुधावाक्यानां विशकलितानां निष्कृष्य अनुवादः **यस्य यत्रेत्यादि** ॥ **अवयवार्थेति** ॥ अवयवार्थानपेक्षः मुख्यार्थसादृश्यानपक्षे मुख्यार्थसम्बन्धानपेक्ष इत्यर्थः ॥ **तदिति** ॥ इत्यभिप्रेत्येत्यन्वयः।

॥ **उक्तः प्रयोग इति** ॥ अवयवार्थमुख्यार्थसादृशसम्बन्धानपेक्ष इत्युक्तः प्रयोगः अनुमानविधया अखण्डशक्तौ प्रमाणमपि लक्षणं च भवतीत्यभिप्रेत्येत्यर्थः। तत्र हेतुरसाधारणत्वात् अतिव्याप्त्यादिशून्यत्वादिति।

एवमभिप्रायोक्तौ बीजमाह ॥ **शक्त्युक्तेरिति** ॥ जिज्ञासाधिकरण उक्तेरित्यर्थः। प्रमाणमपीत्युक्तार्थे ज्ञापकमाह ॥ **बहुलेति** ॥ **रूढिसाधनाच्चेति** ॥ अनुव्याख्यान इत्यनुषङ्गः। आनन्दमयनयानुव्याख्यान इत्यर्थः। न तु शक्त्यभावमभिप्रेत्येत्युक्तार्थे ज्ञापकमाह ॥ **प्रयोगयुक्तेति** ॥ आनुमानिक-

पादीयानुव्याख्यान इत्यर्थः। समग्रश्लोकोऽग्रे व्यक्तः। प्रयोगः सामर्थ्यमित्युक्तस्य प्रयोगशब्दस्य सामर्थ्यमर्थ इत्युक्तत्वादिति फलितानुवादः।

## तर्कताण्डवम्

यदपि सुधायां ''प्रवृत्तिनिमित्तापेक्षा वृत्ति र्योगः'' इत्युक्तं तत्र प्रवृत्तिनिमित्तशब्देनावयवार्थोऽभिप्रेतः। रूढेरपि घटत्वादिनिमित्तापेक्षत्वात्। सुधायामेव रूढिलक्षणे प्रवृत्तिनिमित्तपदस्थानेऽवयवार्थपदप्रयोगाच्च।

अत एवानुव्याख्याने ''तस्माद्'' इत्यादिश्लोके वृत्ति-तद्विशेषरूढ्यादिलक्षणानां प्रतिपादकत्वगर्भितत्वस्य विवक्षितत्वादेव गौणीलक्षणलक्षणपरे–

''प्रयोगयुक्तसादृश्यं सम्बन्धोवाप्यमुख्यतः।
वृत्तिहेतुरितिज्ञेयः पूर्वायोगे परग्रहः''।

इति श्लोके सादृश्यसम्बन्धयोः प्रतिपादकत्वरूपवृत्ति-हेतुत्वोक्तिः, सुधायां सम्बन्धं निमित्तीकृत्य वृत्तिर्लक्षणे-त्याद्युक्तिश्च घटते।

केचित्तु – शाब्दबोधानुकूलः शब्दस्यार्थेन सम्बन्धो वृत्तिः, अखण्डशक्तीरूढिः, सखण्डशक्तिर्योगः अवयव-शक्तिसापेक्षा समुदायशक्तिर्योगरूढिरिति शाब्दबोधानु-कूलसम्बन्धसामान्यस्यैव वृत्तित्वं तद्विशेषाणमखण्ड-शक्त्यादीनामेव च रूढ्यादित्वं तस्मादित्यादिश्लोके विवक्षितम्। वृत्तिहेतुरित्यत्र वृत्तिशब्दःप्रयोग परो न तु ''तिस्रः शब्दस्य वृत्तय'' इत्यत्रेव सम्बन्धपर इत्याहुः।

**तस्मादभिधा रूढ्यादिभेदेन त्रिविधा।**

**रूढ्यादिवृत्तित्रयलक्षणम् ॥ ६० ॥**

**न्यायदीपः**

स्वोक्तयोगलक्षणेपि सुधाविरोधमाशङ्क्य निराह ॥ **यदपीति** ॥ इत्युक्तं – आनुमानिकपादे "प्रोयगमात्रबाहुळ्य" मित्येतदवतारिकायामुक्तमित्यर्थः ॥ **रूढिलक्षणे इति** ॥ यस्य यत्रावयार्थे-त्याद्युक्तलक्षण इत्यर्थः।

अत एवेत्यस्य विवरणं विवक्षितत्वादेवेत्यन्तम्। घटत इत्यनेनान्वयः ॥ **इत्यादिश्लोक इति** ॥ "तस्मात्परममुख्यत्व" मित्यादिप्रागुदाहृतश्लोक इत्यर्थः ॥ **गौणेति** ॥ गौणलक्षणयोर्लक्षणपर इत्यस्य श्लोक इत्यनेनान्वयः। श्लोकार्थस्तु – प्रयोगयुक्तस्य सामर्थ्ययुक्तस्य मुख्यार्थस्य तस्य सादृश्यं सम्बन्धो वा मुख्यतः शब्दवृत्तिहेतुः गौणलक्षणा वृत्तिहेतुः पूर्वस्य मुख्यस्यायोगे गौणग्रहः गौणस्याप्ययोगे लशणाग्रहः इति।

॥ **केचित्त्विति** ॥ अत्रारुचिबीजं तु सम्बन्धादिपक्षे प्रागुक्तमेव दूषणं ध्येयम्।

रूढ्यादिवृत्तित्रयलक्षणम् ॥ ६० ॥

***

## ६१. अथ योगरूढिसमर्थनम्।

**तर्कताण्डवम्**

**अत्र केचित् – पङ्कजादिशब्दास्तामरसे पद्मशब्दवद्रूढा एव। कोशेषु पद्मपर्यायत्वेन पाठात्। योगस्य कुमुदादावति-प्रसक्तत्वेनानतिप्रसङ्गाय रूढेरपि स्वीकारे आवश्यकत्वाद्**

**रूढ्यैवोपपत्तेश्च। "सप्तम्यां जनेर्ड" इत्याद्यनुशासनं च "गमेर्डो" इत्यादिवच्छब्दसाधुत्वमात्रपरमित्याहुः।**

**तन्न। पङ्कजपदेनौपगवादिपदैरिवावयवार्थस्य पङ्कजनिकर्तृत्वस्यापि प्रतीतेः। गोशब्देन तु गमनकर्तृत्वस्याप्रतीतेः। कोशपाठस्येन्द्रपर्यायशचीपत्यादिशब्दानामिव यौगिकत्वेऽप्युपपत्तेः।**

## न्यायदीपः

यत्तु सुधायां विरोधाद्वैफल्याच्च योगरूढिरयुक्तेति केचिदित्यादिना आनुमानिकपादे योगरूढिमाक्षिप्य तत्समाधानं कृतं तद्विवरितुमाह ॥ **अत्र केचिदिति** ॥ अभिधात्रैविध्यविषये योगरूढ्यपलापवादिन इत्याहुरित्यन्वयः। कोशेषु अमरादिनिघण्टुग्रन्थेषु।

योगवादिनोपि रूढिरावश्यकीत्याह ॥ **योगस्येति** ॥ नन्वेवं योगवृत्त्यपलापे पाणिनिस्मृतिविरोध इत्यत आह ॥ **सप्तम्यामिति** ॥ सप्तम्यन्ते उपपदे जनीप्रादुर्भावे इत्यस्माद्धातोः कर्तरि डप्रत्यये पङ्के जायत इति पङ्कजमिति तृतीयाद्यपादे व्युत्पादनापर्यायानुशासनं च गमेर्धातोर्डोप्रत्ययो भवतीत्यौणादिकगोशब्दव्युत्पादनवत्साधुत्वमात्रपरमित्यर्थः। न हि गोशब्दे अवयवार्थनिमित्तकत्वमस्ति। तथात्वे महिष्यादावपि गोशब्दप्रयोगापत्तिरिति भावः।

यत्तु सप्तम्यामित्यादि तत्तावदुद्धरति ॥ **पङ्कजपदेनेति** ॥ **अप्रतीतेरिति** ॥ गोत्वप्रतीतेरेवानुभवात् प्रतीत्यनुरोधेनैव वृत्तिकल्पनात् गोशब्दस्य केवलरूढत्वेपि पङ्कजादिपदानां योगरूढत्वमेवोपेयमिति भावः। कोशपाठान्यथानुपपत्तिमुद्धरति ॥ **कोशेति** ॥ "वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः" इति यौगिकस्यापि रूढेन्द्रादिशब्दपर्यायत्वेन यथापाठस्तथोपपत्तेरित्यर्थः।

## तर्कताण्डवम्

**प्राभाकरास्त्वाहुः – "पङ्कजपदे रूढिः पद्मत्वभानार्थं वा कुमुदाद्यभानार्थंवा। आद्येपि भानं स्मृतिरनुभूतिर्वा।**

नाद्यः। पद्मत्वस्य पङ्कजपदाशक्यत्वेप्यदृष्टादिना वा पद्मत्वाधिकरण एव नियतप्रयोगरूपसम्बन्धयुक्तेनाशक्तेनैव पदेन वोद्बुद्धसंस्कारादेव स्मृतेः।

नान्त्यः। उक्तरीत्या स्मृतं पद्ममादायव्यक्तिवचनन्यायेन पङ्कप्रातिपदिकजनिधातुडप्रत्ययरूपैरवयवैः पङ्कजनिकर्तृ-पद्ममित्याद्यनुभवसम्भवात्।

नचैवं गामानयेत्यादौ गोशब्दस्यापि गवि शक्तिर्न स्यादिति वाच्यम्। तथात्वे गोशब्दवैयर्थ्यात्। इह तु पङ्कज-पदमुक्तकर्तृत्वस्योपस्थित्यर्थम्।

नचैवमदृष्टादिनेति पक्षे पङ्कजपदप्रयोगकाले कदाचि-ददृष्टादिना कुमुदस्यापि स्मृतौ तदादायावयवैः पङ्कजनिकर्तृ कुमुदमित्यनुभूयेतेति वाच्यम्। तत्काले पद्मस्यैव नियत-स्मृतिदर्शनेन फलबलेन पद्मसंस्कारस्यैवोद्बोधकल्पनात्।

न च प्रयोगसम्बन्धपक्षे पङ्कजपदेन प्रयोगविषये पद्म-त्ववत् तद्व्यापकस्य कुसुमत्वादेस्तद्व्याप्यस्य पुण्डरीक-त्वादेरपि सत्त्वात्तयोरपि स्मृतिः स्यादिति वाच्यम्। तयोः प्रयोगेण सह समनियमाभावात्।

नापि कुमुदाद्यभानार्थमिति द्वितीयः। पङ्कजं कुमुद-मानयेत्यादौ कुमुदादेरपि भानात्।

किञ्च तदप्रतीत्यर्थं तत्प्रत्यायकयोगाभाव एव कल्प्यः। न तु पद्मत्वे रूढिः। तस्मात् पङ्कजपदं पद्मे यौगिकमेव'' इति।

## न्यायदीपः

**॥ प्राभाकरास्त्विति ॥** रूढ्यपलापमाहुरित्यर्थः। तत्प्रकारमाह **॥ पङ्कजेति ॥** यद्यप्येतन्मतं अत्र मीमांसका इत्यादिनानूद्य मणावेव योगरूढिवादे दूषितम्। तथापि तदुक्तदूषणप्रकारमप्रीयमाणः स्वयं निष्कृष्य तन्मतमनूद्य प्रकारान्तरेण दूषयितुमिमं प्रयत्नमकरोदित्यदोषः।

अदृष्टादेः कल्प्यत्वं मन्वानः पक्षान्तरमाह **॥ पद्मत्वाधिकरण एवेति ॥ उक्तेति ॥** अदृष्टादिना वेत्युक्तरीत्येत्यर्थः **॥ व्यक्तीति ॥** व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमादिति न्यायेनेत्यर्थः।

न्यायस्यायमर्थः। किञ्चिद्व्यक्तितात्पर्यकाणां शब्दानां बुद्धिस्थव्यक्तिविशेषपरत्वादिति। यथाग्नेय्यग्नीध्रमुपतिष्ठत "इत्यत्राग्नेर्ढक्" इति सूत्रविहितढक्प्रत्ययान्ताग्नेयीशब्दे ज्योतिष्टोमप्रकरण-सन्निहितैवाग्निपकाशिका अग्नआयाहिवीतय इत्यादिका ऋगुपस्थाप्यत इत्युक्तं तृतीयाध्याय-द्वितीयाष्टमाधिकरणे, यथावा घटेन जलमाहरेत्यादौ सन्निहितं घटादि तथा पङ्कजपदमपि किञ्चिद्व्यक्ति-तात्पर्यकतया प्रयुक्तमिति पङ्कजपदगतावयवैः पङ्कज् अ इत्येवंरूपैर्बोध्यमानं पङ्कजनिकर्तृत्वं स्मर्यमाणतया बुद्धिस्थे पद्म एव बोध्यते। पङ्कजनिकर्तृपद्ममिति तथाचान्यथैवानुभवोपपत्तौ किं समुदायशक्त्येति भावः।

एवं तर्हि रूढिमात्रविलय इति भावेनाशङ्क्य निराह **॥ नचैवमिति ॥** अदृष्टादिना वा गोत्वाधिकरण एव नियतप्रयोगरूपसम्बन्धयुक्तेन गोशब्देनैव वोक्तरीत्या गोपिण्डस्मृतिसम्भवात् न गोपदस्य गविशक्तिः कल्प्येत्यर्थः। **॥ वैयर्थ्यादिति ॥** गोपदादिना गोत्वादेरनुपस्थितावन्यथोपस्थिते गोपिण्डे अवयवार्थ-समर्पणरूपेणापि सार्थक्यसम्भवाद्गोपदस्य रूढत्वादिति भावः।

पङ्कजादियोगरूढस्थलेप्येवमस्त्वित्यत आह **॥ इह त्विति ॥** पद्मत्वादिस्मृत्यनुभवयोर्या द्वेधोपपत्तिरुक्ता तद्द्वयं क्रमेणाक्षिप्य समाधत्ते **॥ न चैवमिति ॥ न च प्रयोगेति च ॥ तयोरपीति ॥** तथाच – कुसुमं पङ्कजनिकर्तृ पुण्डरीकं पङ्कजनिकर्तृ इत्यपि धीः स्यात्। न तु पद्मं पङ्कजनिकर्तृ इत्येव। पद्मत्वापेक्षयाधिकन्यूनधर्माधिकरणेप्यगवयवार्थान्वयप्रसङ्गः इति भावः।

**॥ समनियमेति ॥** पद्मत्ववत्येव पङ्कजपदप्रयोगः तत्प्रयोगवति पद्मत्वमितिवत्कुसुमत्ववत्येव पुण्डरीकत्ववत्येव वा पङ्कजपदप्रयोगाभावान्न पङ्कजपदप्रयोगविषये तयोः स्मृतिरिति भावः।

## तर्कताण्डवम्

उच्यते। पङ्कजपदस्य पद्मत्वविशिष्टे शक्त्याभावे किं पङ्कजपदशक्यमिति प्रश्ने पद्ममित्यभियुक्तानां प्रतिवचनं कोशकाराणां पद्मपर्यायतया पाठश्च न स्यात्। पङ्कजं पद्ममिति कदाचित्सहप्रयोगश्च स्यात्।

न च प्रतिवचनं ज्ञापकत्वमात्रेण युक्तम्। शक्तेरेव पृष्टत्वात्।

न च कोशपाठो भ्रमराशक्तस्यापि द्विरेफशब्दस्य भ्रमरपर्यायतया पाठ इव युक्तः। स हि रेफद्वययुक्तभ्रमर-शब्दरूपमुख्यार्थसम्बन्धाद् भ्रमरे लाक्षणिक इति वाच्यम्। द्विरेफशब्देन मुख्यार्थानुपपत्त्यपुरस्कारेणैव भ्रमरप्रतीतेः। योगस्य रेफद्वययुक्तशब्दान्तरेतिप्रसक्तत्वेन भ्रमरशब्देपि रूढेरावश्यकतया भ्रमर एव रूढेरौचित्याच्च।

## न्यायदीपः

पद्मं पङ्कजपदशक्यं तच्छक्तिप्रश्नोत्तरविषयत्वात् सामान्यव्याप्त्या सम्मतवत्। पङ्कजपदं वा पद्मे शक्तं तद्वाचकपद्मादिशब्दपर्यायत्वेन कोशेषु पठ्यमानत्वाल्लोके पद्मादिशब्दैः सहाप्रयुज्यमानत्वाद्वा सम्मतवदिति प्रयोगत्रयं मन्वानो हेतूनामप्रयोजकत्वनिरासाय हेतूच्छित्तिरूपबाधकं तावदाह ॥ **पङ्कजपदस्येत्यादिना** ॥

आद्यप्रयोगस्यान्यथोपपत्तिमाशङ्क्य निराह ॥ **न च प्रतिवचनमिति** ॥ **शक्तेरेवेति** ॥ अन्यथा प्रश्नप्रतिवचनयोर्वैरूप्यापत्तेरिति भावः। द्वितीयहेतोर्वा द्वितीयतर्कस्य वान्यथोपपत्तिमाशङ्क्य निराह ॥ **न च कोशपाठ इति** ॥ **पाठ इवेति** ॥ ''द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः'' इत्यमरादौ पाठ इवेत्यर्थः।

भ्रमराशक्तत्वं व्यनक्ति ॥ **नहीति** ॥ द्विरेफशब्द इत्यर्थः। दृष्टान्तासङ्गत्या दूषयति ॥ **द्विरेफेति** ॥ क्लृप्तयोगमुखलक्षणयैवोपपत्तौ समुदायशक्तिकल्पनं गुर्विति वादिनं प्रत्याह ॥ **योगस्येति** ॥ शब्दान्तरे —रामचन्द्रहरिश्चन्द्रादिशब्दे।

## तर्कताण्डवम्

**सहाप्रयोगोप्यनन्यथासिद्ध एव। न हि पङ्कजपदावयवाः क्लृप्तया पङ्कजपदनिष्ठया शक्त्योपस्थितं पद्ममादाय पङ्कजनिकर्तृ पद्ममिति नानुभावयन्ति। किन्तु कल्प्येनादृष्टादिना वाशक्तेनैव पङ्कजपदेन वोपस्थितमेवानुभावयन्तीत्यत्र हेतुरस्ति। येन पद्मपदं प्रयुज्येत।**

**किञ्चास्य पाचकपदवदरूढत्वे पद्मत्वविशिष्टे समुदायव्युत्पत्तेरपेक्षा न स्यात्। अस्ति च सा। अवयवव्युत्पन्नस्यापि पुंसः समुदायाव्युत्पन्नस्य पद्मत्वाप्रतीतेः। अवयवाव्युत्पन्नस्यापि वृद्धव्यवहारादिना समुदायव्युत्पन्नस्य तत्प्रतीतेश्च।**

**नच नियतप्रयोगरूपसम्बन्धग्रहार्थं वृद्धव्यवहारापेक्षा न तु शक्तिग्रहार्थमिति वाच्यम्। गोशब्दादावपि तत्प्रसङ्गात्।**

## न्यायदीपः

तृतीयहेतोरन्यथासिद्धिं निराह ॥ **सहाप्रयोगोपीति** ॥ नन्वदृष्टादिनावेत्युक्तरीतिद्वयेनोपस्थित एवपद्मे पङ्कजपदा वयवार्थान्वयेन पद्मपदाकाङ्क्षाविरहादस्तु पद्मपदस्या सहप्रयोगनियमः। न तु द्वयोः शक्तत्वेन पर्यायतेत्यतः कथमन्यथासिद्धत्वमित्यत आह ॥ **न हीति** ॥ हेतुरस्तीत्यनेनान्वयः।

समुदायव्युत्पत्त्यपेक्षान्यथानुपपत्त्या च पद्मे शक्तिः पङ्कजपदस्येतिभावेनाह ॥ **किञ्चेति** ॥ इष्टापत्तिं निराह ॥ **अस्ति च सेति** ॥

व्यतिरेकान्वयावाह ।। **अवयवेति** ।। एतच्चावयवव्युत्पत्त्यान्यथासिद्धिनिरासायोक्तम्। समुदाये व्युत्पत्त्यभावे वृद्धव्यवहारापेक्षा नस्यादिति बाधकसूचनाय वृद्धव्यवहारादिनेत्युक्तम्। अत एव तदन्यथासिद्धिमाशङ्क्य निराह ।। **न चनियतेति** ।। **तत्प्रसङ्गादिति** ।। शक्तिग्रहार्थत्वाभाव-प्रसङ्गादित्यर्थः।

## तर्कताण्डवम्

**यत्त्वत्रोक्तं तथात्वे गोशब्दवैयर्थ्यं स्यादिति। तन्न। मया तद्वैयर्थ्यस्यैवापादनात्। कृतिराख्यातार्थ इति पक्षे करोतीत्यत्र धातोरिव गोप्रातिपदिकस्य कर्मत्वाद्युप-स्थापकविभक्त्यनुग्रहार्थत्वोपपत्तेश्च। पङ्कजपदाप्रयोगकाले पद्मत्वस्येव गोपदाप्रयोगकालेऽदृष्टादेः संस्कारानुद्बोध-कत्वकल्पनेन गोपदस्य सार्थकत्वसम्भवाच्च।**

**किञ्चावैयर्थ्याय शक्तिकल्पने लाक्षणिकेपि तत्प्रसङ्गः। शक्तिप्रमाणस्य वृद्धव्यवहारस्याभावात्तत्राशक्तिश्चेत् तत्प्रमाणस्यपङ्कजशब्दे भावाच्छक्तिरस्तु।**

**यदि च गवादिशब्देष्वपि न स्मृत्यर्थं शक्तिः किन्त्वनु-भवार्थं तर्हि पङ्कजशब्दे तदर्थमेवास्तु।**

**स्मृतपद्मत्वविशिष्टकर्तृत्वानुभवो योगेनैव चेद्गामा-नयेत्यत्रापि स्मृतगोविशिष्टानयनानुभव आनयेत्यनेनैवास्तु। त्वत्पक्षे लक्षणास्थळवत्।**

## न्यायदीपः

।। **धातोरिवेति** ।। यथा कृधातोरपि तत्र कृतिवाचित्वे वैयर्थ्यात्प्रत्ययानुग्रहार्थत्वं केवलप्रत्यय-

प्रयोगायोगेन धातुसाहित्येनैव प्रत्ययप्रयोगात्तद्वदिहापीत्यर्थः। अदृष्टादिनावेत्यादिनोक्तदिशा जायमान-गोपिंण्डोपस्थितिर्गोपदप्रयोगे सत्येव नान्यथा।

अतोपि सार्थक्यमित्याह ॥ **पङ्कजेति** ॥ **पद्मत्वस्येवेति** ॥ यथा पद्मत्वगोचरस्मृतिजनक-संस्कारोद्बोधकत्वमदृष्टादेवेति कल्प्यते तथेत्यर्थः ॥ **संस्कारेति** ॥ गोत्वगोचरसंस्कारानुद्बोधकत्वे-त्यर्थः ॥ **लाक्षणिकेपीति** ॥ गङ्गायां घोष इत्यादौ गङ्गापदेन विना तीरोपस्थितौ गङ्गापदवैयर्थ्यापत्त्या गङ्गापदस्य तीरे गोपदस्य गोपिण्ड इव शक्तिः स्यात्। तथाच लक्षणोच्छेद इति भावः।

॥ **तत्रेति** ॥ लाक्षणिके गङ्गादिशब्दे शक्तिर्न चेदित्यर्थः ॥ **तत्प्रमाणस्येति** ॥ शक्तिग्राहक-प्रमाणस्य वृद्धव्यवहारस्येत्यर्थः। न हि गवादिशब्दे स्मृत्यर्थं शक्तिः किं त्वनुभवार्थमित्यादिना मण्युक्त-प्रकराशयमनूद्य सममित्याह ॥ **यदि चेत्यादिना** ॥

ननु पङ्कजशब्दसमुदायवृत्तिं विनैव पद्मेवयवार्थविशिष्टानुभवोवयववृत्त्यैव भविष्यतीत्याशङ्क्य एतदपि गोपदे सममिति तत्रापि रूढिर्नस्यादिति भावेनाह ॥ **स्मृतेति** ॥ **त्वत्पक्ष इति** ॥ लाक्षणिकं पदं नानुभावकमितितार्किकमते गङ्गायां घोष इत्यत्र घोषपदस्यैव तीरान्वयानुभावकत्वं यथा तथैवास्तु गोपदस्य पिण्डे शक्तिर्मास्त्विति भावः।

## तर्कताण्डवम्

**ननु व्युत्पत्त्यादेस्तौल्येनानयनपदवद्गोपदमपि स्वार्थानु-भावकम्। अन्यथा वैपरीत्यं स्यात्। गङ्गापदं तु न नदी तीरे व्युत्पन्नमिति चेत्पङ्कजमानयेत्यत्रापि तत्तौल्येन द्वयमप्य-नुभावकम्।**

**ननु पङ्कजपदे यौगिकार्थानुभावकत्वेनापि तदुपपन्नं गोपदे तु न तदस्तीति चेत्तर्हि जातिविशिष्टव्यक्तौ व्युत्पन्नं गोपदमनन्यथासिद्धनियतपूर्ववर्तित्वादिविशिष्टे धर्मिणि व्युत्पन्नं कारणादिपदं च स्वार्थैकदेशस्यैवानुभावकं स्यात्।**

## न्यायदीपः

लक्षणास्थलवैषम्यमाशङ्क्य निराह ।। **नन्विति** ।। ।। **तत्तौल्येनेति** ।। क्रियायामानयनपदस्येव पङ्कजपदसमुदायस्यापि पद्मेष्वुत्पत्तिसाम्येनानयनत्वविशिष्टानयनानुभावकं यथानयनपदं तथा पङ्कजपदमपि पद्मत्वविशिष्टपद्मानुभावकमेव । न तु पद्मत्वेन स्मृतपद्मेवयववृत्त्या पङ्कजनिकर्तृत्वमात्रानुभावकमित्यर्थः ।

गामानयेत्येतद्वैषम्यमाशङ्क्य निराह ।। **ननु पङ्कजेति** ।। **तर्हीति** ।। व्युत्पत्तिबलेन पद्मत्वपङ्कजनिकर्तृत्वोभयविशिष्टानुभवेऽपि एकदेशानुभवाङ्गीकारे सतीत्यर्थः । कारणादीत्यादिपदेन कार्यादिग्रहः ।

## तर्कताण्डवम्

अथ यावत्यर्थेव्युत्पत्तिः स सर्वोप्यनुभाव्यः । व्युत्पत्तिविषयत्वतौल्यादिति चेत्तर्ह्यवयव्युत्पत्तेः पङ्कजादिकमिव समुदायव्युत्पत्तेः पद्मत्वं विषय एवेति तदप्यनुभाव्यमेव ।

इयांस्तु भेदः । गोशब्दे कारणादिशब्देचेकैव शक्तिरिह तु नानेति ।

किञ्च त्वदुक्तरीतिद्वयेन स्मृतकर्तृत्वान्वितपद्मानुभवो रूढ्यैवास्त्विति योगो न सिध्येत् । यदि चावयवमात्रव्युत्पन्नस्य कर्तृत्वप्रतीतेर्योगसिद्धिस्तर्हि समुदायमात्रव्युत्पन्नस्य पद्मत्वप्रतीते रूढिसिद्धिरित्युक्तम् । तस्मादश्वकर्णादिशब्दवद्व्युत्पत्तिद्वयसापेक्षत्वाद्योगरूढोयम् । एतावांस्तु विशेषोऽश्वकर्णादिषु योगरूढी भिन्नविषये इह त्वेकविषये इति ।

अपि च पद्मत्वविशिष्टस्य पङ्कजपदवृत्त्यविषयत्वे पङ्कजमानयेत्यादौ विभक्त्यर्थान्वयः शाब्दानुभवप्रवेशश्च

**नस्यात्। विभक्तीनां प्रकृत्यर्थान्वितस्वार्थाभिधायित्वस्य शाब्देनैव शाब्दान्वयस्य च व्युत्पत्तिसिद्धत्वात्। शिष्टं शब्दाध्याहारप्रस्तावे वक्ष्यते।**

## न्यायदीपः

परमुखेनैव समाधिं वाचयित्वा समं पङ्कजपदमपीत्याह ॥ **अथेति** ॥ ननु केवलरूढगवादिपदैः कथं पङ्कजपदस्य साम्योक्तिरित्यत आह ॥ **इयांस्त्विति** ॥ **इह त्विति** ॥ पङ्कजपदावयवसमुदाय-भेदेनेत्यर्थः।

प्रतिबन्द्यापि योगरूढिं साधयितुं प्रतिबन्दिमुपादत्ते ॥ **किञ्चेति** ॥ **रीतिद्वयेनेति** ॥ अदृष्टादिना वा पङ्कजनिकर्तर्येव नियतप्रयोगसम्बन्धयुक्तेनावयवशक्तिशून्यपदपङ्कजपदेनैवाबुद्धसंस्कारादेव पङ्कजनिकर्तरि स्मृति तत्र समुदायशक्त्या पद्मत्वविशिष्टानुभव इति पूर्वोक्तवैपरीत्यं किं नस्यादित्यर्थः।

प्रतिबन्द्युद्धारमाशङ्क्य सममित्याह ॥ **यदिचेति** ॥ **भिन्नविषय इति** ॥ वृक्षविशेषरूढिः अश्वकर्णसदृशकर्णवति पशुविशेषयोग इति भिन्नविषय इत्यर्थः।

विभक्त्यर्थाद्यन्वयानुपपत्त्या च रूढिसिद्धिमाह ॥ **अपि चेति** ॥ उभयत्र हेतुमाह ॥ **विभक्ती-नामिति** ॥ नन्वन्वयप्रतियोग्यालाभादन्वयानुपपत्तिरित्यन्वयाप्रतियोगिलाभेनैव भाव्यम् न तु तस्य शब्दशक्त्यैव लाभेनैवेति नियम इत्यत आह ॥ **शिष्टमिति** ॥

## तर्कताण्डवम्

**न च पङ्कजपदेन स्मृते पद्मे पद्मत्वस्य प्रकृत्यर्थत्व-शाब्दत्वे स्त इति वाच्यम्। ते हि न यथाकथंचित् प्रकृति-शब्दजन्यधीविषयत्वे। कार्यकारणसम्बन्धात् स्मृते आकाशादौ साहचर्यात् स्मृते पटशब्दे आश्रयाश्रयि-सम्बन्धात् स्मृतायां घटपदनिष्ठायां शक्तौ च तयोः सत्त्वेन विभक्त्यर्थान्वयाद्यापातात्।**

नापि ते नियतप्रयोगसम्बन्धेन प्रकृत्यादिजन्यधीविषयत्वे। शक्तिलक्षणादिसम्बन्धेन तज्जन्यधीविषयेवाच्ये लाक्षणिकादौ विभक्त्यर्थानन्वयाद्यापातात्।

पङ्कजशब्दे शक्तिकार्यस्य विभक्त्यर्थान्वयादेः शक्तिग्राहकप्रयोगेणैव निर्वाहाच्छक्तित्यागे गोशब्दादावपि तेनैव तन्निर्वाहाच्छक्तित्यागापत्तेश्च।

प्रयोगसम्बन्धस्य विभक्त्यर्थान्वयादौ तन्त्रत्वे तस्य लक्षणादिवद्वृत्त्यन्तरत्वापत्तेश्च।

नचेष्टापत्तिः। क्लप्तशक्त्यैवोपपत्तेः। गोशब्दादावपि तस्यैव वृत्त्यन्तरत्वापत्तेश्च। अन्यथाननुगमात्।

ननु गोशब्दादौ शक्तिं विना नियतः प्रयोग एवायुक्तः अन्धपरम्परात्वापातादिति चेत्समं प्रकृतेपि।

तस्मात्क्लृप्तवृत्तिविषयत्वरूपं प्रकृत्यर्थत्वादिकमेव विभक्त्यर्थान्वयादौ तन्त्रम्।

## न्यायदीपः

तदुक्तहेतू प्रकृते स्त इत्याशङ्क्य निराह ।। **न च पङ्कजेति** ।। प्रकृत्यर्थतत्वादिकं किं कार्यकारणसम्बन्धेन प्रकृतिजन्यधीविषयत्वम् अथ साहचर्यसम्बन्धेन उताश्रयाश्रयिसम्बन्धेन वा नियतप्रयोगरूपसम्बन्धेन वा। न चतुष्टयमपि युक्तमिति क्रमेण निराह ।। **ते हीत्यादिना तस्मादित्यन्तेन** ।। ते इति द्विवचनम्। कार्यकारणतया स्मृते आकाशकालादावित्यर्थः।

।। **साहचर्यादिति** ।। आनय पङ्कजं पटवदित्यादिवाक्ये पूर्वस्मात्पङ्कपदात्साहचर्यसम्बन्धेन स्मृते पटपदे इत्यर्थः ।। **तयोरिति** ।। प्रकृत्यर्थशाब्दत्वयोरित्यर्थः। आदिपदस्य शब्दानुभवापातादित्यर्थः

**।। नापि ते इति ।।** प्रकृत्यर्थशाब्दत्व इत्यर्थः।

**।। तस्यैवेति ।।** प्रयोगरूपसम्बन्धत्वेन तु रूढिरूपस्येत्यर्थः **।। अन्यथेति ।।** पङ्कजादिप्रयोग-सम्बन्धेन जन्यधीविषयत्वप्रकृत्यर्थत्वादिकं गवादिशब्दे तु समुदायशक्यतज्जन्यधीविषयत्वं प्रकृत्याद्यर्थत्वमित्यननुगमादित्यर्थः **।। तन्त्रमिति ।।** तथा च पङ्कजमानयेत्यादौ तदभावाद्विभक्त्यर्थान्वय-शाब्दान्वयपद्मत्वविशिष्टश्च न स्यात् इति सुस्थमिति भावः।

## तर्कताण्डवम्

पाचकमानयेत्यत्रापि पाककर्तुः पाचकपदयोगवृत्ति-विषयत्वादेव कर्मत्वान्वयादिकम्। पद्मत्वविशिष्टस्तु न पङ्कजपदयोगविषयः। किं तु कर्तृत्वविशिष्ट एव।

येषां तु तार्किकाणां यौगिकं पदं वाक्यं तेषां वाक्ये वृत्त्यभावात्पाचकस्य कर्मत्वाद्यन्वयो न स्यादेव।

किञ्च योगमात्रं चेत् कुमुदादावपि प्रतीतिप्रयोगौ स्याताम्। न च यिनता पद्मोपस्थितिस्तत्प्रतिबन्धिका। रूढिं विना तस्या एवायोगात्।

नापि पूर्वपूर्वाप्रयोगः प्रतिबन्धकः। प्रयोगहेतौ सत्य-प्रयोगस्यैवायोगात्।

नापि ग्रामग्रामादिशब्दस्येव पङ्कजपदस्य कुमुदेऽसाधु-त्वग्रहः प्रतिबन्धकः। तस्य ग्रामगमनकर्तृजातीय एव असाधुत्वग्रहात्। अस्य तु पङ्कजनिकर्तृजातीये पद्मे साधुत्व-ग्रहात्। प्रतिपदार्थं च साधुत्वग्रहस्य प्रयोगहेतुत्वेन च पाचके पाचकपदप्रयोगो न स्यात्।

## न्यायदीपः

ननु नेदं तन्त्रम्। पाचकादियौगिकशब्दे समुदायशक्त्यविषयस्यापि विभक्त्यर्थान्वयादर्शनाद् यौगिकपदस्य वाक्यरूपतया वृत्त्यभावेनावयववृत्तेरप्यविषयत्वात्तत्रावयववृत्तिविषयत्वेन विभक्त्यर्थान्वये वा पङ्कजादावपि तथात्वमस्त्वित्यत आह॥ **पाचकमिति**॥ शक्यतावच्छेदकरूपेणोपस्थितिर्हि प्रकृत्यर्थे प्रत्ययान्वयः। पद्मत्वस्य च समुदाये शक्त्यभावपक्षे शक्यतावच्छेदकत्वात्तेन रूपेण कर्मत्वाद्यन्वयो न स्यात्। न चेष्टापत्तिः। अनुभवविरोधादिति भावः।

॥ **कर्तृत्वमिति**॥ जनिकर्तृत्वविशिष्टे इत्यर्थः। नन्वस्त्वेवं यौगिके अवयववृत्त्यभ्युपगमवादिनाम् सिद्धान्तिनां मते। न्यायमते तु कथमित्यत आह॥ **येषामिति**॥ कुमुदादौ प्रयोगप्रत्यययोरभावान्यथानुपपत्त्या पङ्कजादौ रूढिं साधयति॥ **किञ्चयोगेति**॥

ननु कुमुदादौ अवयवशक्तौ सत्यामप्यप्रयोगादिप्रतिबन्धादिति चेत्। तत्किं प्रतिबन्धकं मण्याद्युक्तदिशा नियतपद्मोपस्थितिः वृद्धानां तत्राप्रयोगो वा तत्रासाधुत्वग्रहो वा पङ्कोत्तरजपदादिकं वा। आद्यमाशङ्क्य निराह॥ **न चेति**॥

द्वितीयं प्रत्याह॥ **नापीति**॥ तृतीयं निराह॥ **नापीति**॥ **ग्रामगामीति**॥ तृतीये ''कर्मण्यणिति'' सूत्रे कर्मण्युपपदे अण्प्रत्ययो विहितः कुम्भकार इत्यादिरूपसिद्ध्यर्थम्। ग्रामगामीत्यादि त्वसाधु। ग्रामं गच्छतीत्यादौ नेत्युक्तत्वादिति भावः।

ननु जातौ साधुत्वग्रहेपि कुमुदव्यक्तौ तद्ग्रहो नेत्यत आह॥ **प्रतिपदार्थं चेति**॥ **नव इति**॥ नूतन इत्यर्थः।

## तर्कताण्डवम्

**यत्तु नयविवेके यदिशब्दादिकं विधिशक्तेरिव पङ्कोत्तरजपदादिकं कुमुदेऽवयवशक्तेः प्रतिबन्धकं क्लृप्तस्य योगस्य प्रतिबन्धकत्वरूपधर्ममात्रकल्पनं हि लघीयः रूढौ रूढेः योगप्रतिबन्धकत्वशक्तिश्चेति शक्तिद्वयकल्पना तु गरीयसी-**

त्युक्तम्।

तन्न। अवयवमात्रव्युत्पन्नस्यापि कुमुदादावप्रयोगापातात्। रूढिं विना पद्मत्वप्रतीतेरनिर्वाहाच्च। अत एव रसे चक्षुष इव कुमुदेऽवयवशक्तेः कुण्ठनं स्वभावादेवेति निरस्तम्। अवयवमात्रव्युत्पन्नस्यापि कुमुदादावप्रयोगापातात्।

न च यथा धेनुपदे धानकर्मत्वमात्रस्य निमित्तत्वेऽपि गोत्वं शक्तेः प्रयोगस्य चोपाधिः। तथा पद्मत्वमशक्यमेव तयोरुपाधिरिति युक्तम्। कारणादिपदैरिव धेनुपदेनापि विशिष्टस्यैव प्रतीत्या गोत्वविशिष्ट एव तस्य शक्तेः। अन्यथा घटादिपदेपि घटत्वादिरपि तयोरुपाधिः स्यात्।

## न्यायदीपः

चतुर्थं शङ्कते ॥ **यत्त्विति** ॥ **रूढिरिति** ॥ कल्प्येति शेषः। शक्तिश्चेत्यत्रापि कल्प्येति ध्येयम् ॥ **इत्युक्तमिति** ॥ नामधेयपादे तथा निर्मथ्य इति दशमेधिकरणे ॥ **रूढिं विनेति** ॥ तदुपायानुक्तेरिति भावः ॥ **कुण्ठनमिति** ॥ अभिभवोप्रवृत्तिरेव वा।

ननु कुमुदादावप्रयोगो न प्रतिबन्धात्। येनोक्तदोषः। किं तु पद्मत्वरूपस्य प्रयोगोपाधेरभावाद्वा प्रतीतिनियामकस्य वा प्रयोगग्रहरूपस्य वा सकारिणोऽभावाद्वेत्यत आद्यमाशङ्क्य निराह ॥ **न च यथेति** ॥ **धानकर्मत्वस्येति** ॥ पीयमानत्वरूपपानकर्मत्वस्येत्यर्थः। धेट् पाने इत्यस्य ''धेट इच्च'' इति धेटो नुप्रत्यये धातोरिकारादेशे च गुणे च सति धेनुरिति रूपात्।

॥ **निमित्तत्त्वेपि** ॥ प्रवृत्तिनिमित्तत्वेपीत्यर्थः। उपाधिर्नियामक इत्यर्थः। अशक्यमेव पङ्कजादिपदशक्त्यविषय एव। तयोः शक्तिप्रयोगयोर्नियामकः। अतो न कुमुदे तयोः प्रसङ्ग इति भावः। दृष्टान्तासम्मत्या दूषयति ॥ **कारणादीति** ॥ अनन्यथासिद्धनियमतपूर्ववृत्तित्वादिविशिष्टमेव

कारणकार्यादिपदैः प्रतीयते। यथा गोत्वविशिष्टमेव धेनुपदेन प्रतीयत इति प्रतीतिबलाद्गोत्वविशिष्ट एव धेनुपदस्य शक्तिग्रहादित्यर्थः।

## तर्कताण्डवम्

**नच यथाहमादिपदे आत्ममात्रशक्तेपि शक्तिग्रहसहकारितया स्वरूपसदेवोच्चारयितृत्वादिकं धीनियामकम्। तथा पद्मत्वमपीति युक्तम्। तत्रानुच्चारयितरि प्रयोगप्रत्यययोः कदाप्यभावादिह त्वपद्मेपि तयोः पङ्कजं कुमुदमिति दर्शनात्।**

**न च धातोः प्रकर्षादिबोधने प्रादिरुपसर्ग इव पङ्कजपदस्य पद्मबोधने पद्मे प्रयोगग्रहः स्वरूपसदेवोपसन्दानमिति युक्तम्। घटादिशब्देष्वपि तत्प्रसङ्गात्। प्रकर्षादौ तु प्रादिसम्बन्धाद्धातोरेव वा प्रादेरेव वा शक्तिः।**

## न्यायदीपः

द्वितीयमाशङ्क्य प्रत्याह ।। **न च यथेति** ।। **धीनियामकमिति** ।। तत्तदात्मप्रतीतिनियामकम्। तथा पङ्कजपदात्पङ्कजनिकर्तृप्रतीतौ पद्मत्वं नियामकम्। कुमुदे च तदभावान्न पङ्कजपदात्तादृशकर्तृत्वेन कुमुदप्रतीतिरिति भावः।

दृष्टान्तवैषम्येण निराह ।। **तत्रेति** ।। अहमादिपदे ।। **दर्शनादिति** ।। तथा च व्यभिचारान्नपद्मत्वमुक्तकर्तृत्वधीनियामकमिति भावः।

तृतीयमाशङ्क्य पराचष्टे ।। **न च धातोरिति** ।। **उपसन्दानमिति** ।। द्योतकरूपं सहकारीत्यर्थः ।। **तत्प्रसङ्गादिति** ।। तथा च घटपदस्यापि घटे शक्तिर्न स्यादिति भावः।

न्यायमतरीत्याह ।। **धातोरेवेति** ।। स्वमतरीत्याह ।। **प्रादेरेवेति** ।।

## तर्कताण्डवम्

विवरणे तु कुमुदसाधारणेनापि योगेन पद्मस्यैव द्राग्धीरनेकार्थेनापि गोशब्दादिना सास्नादिमद्व्यक्तेरेव प्रयोगप्राचुर्याद्युक्तेत्युक्तम्।

तदप्यनेनैव निरस्तम्। कर्तृत्वेन बुद्धेर्योगेन द्राक्सिद्धा-वपि पद्मत्वेन बुद्धेरूढिं विनायोगात्।

गोशब्दवत् पङ्कजशब्दस्यापि निरुपपदस्यार्थान्तरे प्रयोगापाताच्च।

सास्नादिमद्व्यक्तावसाधारणस्य रूढस्य शब्दान्तरस्य अभावेन पद्मे तु तादृशस्य पद्मशब्दस्य भावेन वैषम्याच्च।

## न्यायदीपः

पङ्कजपदान्नियमेन पद्मप्रतीतौ नियामकान्तरमनूद्य निराह ।। **विवरणे त्विति** ।। प्राभाकरग्रन्थे ।। **कर्तृत्वेनेति** ।। पङ्कजनिकर्तृत्वप्रकारकबुद्धेरित्यर्थः।

## तर्कताण्डवम्

तस्मात्केवलयौगिकत्वे कुमुदादिषु प्रयोगादिकं दुर्वारम्। तस्मात्पद्मोपस्थितिनियमो वा पूर्वपूर्वाप्रयोगो वा कुमुदे पङ्कजशब्दस्यासाधुत्वं वा पङ्कोत्तरजपदादिकं वा प्रतिबन्धकमिति पक्षचतुष्टयं कुमुदेऽवयवशक्तेः कुण्ठनं पद्मत्वस्य शक्तिप्रयोगौ प्रत्युपाधित्वं पद्मत्वस्य स्वरूपसत एव धीनियामकत्वं पद्मे प्रयोगग्रहः स्वरूपसन्नेवोपसन्दानं प्रयोगप्राचुर्यात्पद्मस्यैव द्राग्धीरिति पक्षपञ्चकं चायुक्तम्।

तदेतदभिप्रेत्योक्तं सुधायां "भेकादिष्वपि प्रयोगप्रसङ्गात्" इति।

अस्य च भेकादिष्ववयवशक्तिप्रतिबन्धार्थं रूढिरङ्गीकार्येति नाभिप्रायो येन प्रतिबन्धकत्वे शक्तित्वं पारिभाषिकं स्यादिति शङ्क्येत। किं तु रूढ्या पद्मत्वमपि बोध्यमेवेति।

यत्र तु ब्रह्मशब्दादौ योगो नातिप्रसक्तः रूढिबोध्यं धर्मान्तरं च नास्ति तत्रापि तेदव परमं बह्माहुरित्यादिश्रुत्या विष्णुव्यक्तौ रूढिसिद्धिरित्याद्यूह्यम्।

तस्मात्प्रतिवचनं कोशपाठः सहप्रयोगाभावः समुदायव्युत्पत्त्यपेक्षा योगस्यैवापलापप्रसङ्गः पद्मत्वविशिष्टस्य विभक्त्यर्थान्वयः शाब्दानुभवप्रवेशो योगमात्रं चेत्कुमुदादावपि प्रयोगप्रसङ्ग इति युक्त्यष्टकेन योगरूढिसिद्धिः।

## न्यायदीपः

निरुपपदस्य कुमुदाद्युपपदरहितस्य। किञ्च योगमात्रं चेत्यादिनोक्तमुपसंहरति ॥ **तस्मादिति** ॥ **उक्तं सुधायामिति** ॥ आनुमानिकपादे वृत्तिनिरूपणप्रस्तावे पङ्कजादिशब्दाः केवलयौगिका इति पक्षे "भेकादिष्वपिप्रयोगप्रसङ्गा"दित्युक्तमित्यर्थः।

प्राचीनतार्किकरीत्या रूढ्युपादानमिति भ्रमनिरासाय तस्य वाक्यस्य तात्पर्यमाह ॥ **अस्य चेति** ॥ पारिभाषिकं न्यायमत इवेति भावः ॥ **पद्मत्वमपीति** ॥ न केवलं योगेन पङ्कजनिकर्तृत्वमित्यपेरर्थः। नन्वेवं ब्रह्मादिपदे रूढता न स्यात्।

अवयवशक्तेरन्यत्र प्रसङ्गेन तत्प्रतिबन्धरूपस्य धर्मान्तरबोधरूपस्य वा रूढिफलस्य भावादित्यत आह ॥ **यत्रेति** ॥ **धर्मान्तरं चेति** ॥ न च गुणपूर्तितोऽवयवार्थादन्यद्विष्णुत्वमेव पद्मत्वमिव

ब्रह्मपदबोध्यमिति शङ्क्यम्। विष्णुत्वस्यापि गुणपूर्णत्वादिरूपत्वेनाखण्डधर्मत्वाभावात्। इति भावः। "तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्" इति श्रुतिगतपदानामन्वयमुखेनायमनुवाद इति न क्रमव्यत्यासदोषः शङ्क्यः।

॥ **आहुरिति** ॥ प्रयोगबाहुळ्येन समुदायशक्तेरनुमानाच्छ्रुत्या रूढिसिद्धिरित्युक्तम्। यद्वा प्रयोगबाहुळ्यं रूढिरिति मताभिप्रायेण श्रुत्येत्युक्तम्। एवं विष्णुशब्दाक्षरादिशब्देष्वपि द्रष्टव्यमित्याह ॥ **इत्याद्यूह्यमिति** ॥

उक्तं सर्वं बुद्ध्यारोहाय सङ्ग्रहेणानुवदन्नुपसंहरति ॥ **तस्मादिति** ॥ किं पङ्कजपदशक्यमिति प्रश्ने पद्ममिति प्रतिवचनमित्यर्थः। किं चास्यापाचकपदवदित्यादिनोक्तमाह ॥ **समुदायव्युत्पत्त्यपेक्षेति** ॥ किञ्च त्वदुक्तिरितिद्वयेनोक्तमाह ॥ **योगस्यैवेति** ॥ अपि च पद्मत्वेत्यादिनोक्तमाह ॥ **पद्मत्वेति** ॥ शाब्दानुभवप्रवेश इत्यत्रापि प्रकृत्यर्थस्येत्यनुकर्षः। तथाच युक्त्यष्टकेनेति युक्तम्। किञ्च योगमात्रं चेत्यादिनोक्तमाह ॥ **योगमात्रं चेदिति** ॥

## तर्कताण्डवम्

**नन्वयववृत्तिर्योगो रूढिस्त्वखण्डवृत्तिस्ते चैकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धे इत्यसमाहाररूपं वृत्त्यन्तरमेवेदमस्त्विति चेन्न।**

**योगरूढ्योर्यथाक्रमं कर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोरपि तद्द्वारैकस्मिन्धर्मिणि सैन्धवशब्दवृत्त्योरिव समाहारसम्भवात्। उभयकार्यदर्शनस्य समाहारेणैवोपपत्तौ वृत्त्यन्तरकल्पने गौरवाच्च।**

**नचैवमसिद्धिबाधसमाहारोपि हेत्वाभासान्तरं स्यादिति वाच्यम्। तत्रैकैकेनैवोद्देशस्य दुष्टत्वबोधस्य सिद्धेः। इह तु पङ्कजपदेनोद्देशस्य कर्तृत्वविशिष्टपद्मत्वबोधस्यैकैकेन असिद्धेः।**

## न्यायदीपः

सुधोक्तं योगरूढिसमाहाराक्षेपमनूद्य समाधत्ते ॥ **नन्वित्यादिना** ॥ कर्तृत्वेति पङ्कजनकर्तृत्वेत्यर्थः ॥ **सैन्धवेति** ॥ सिन्धुसम्बन्धित्वाश्वत्वादिधर्मनियतयोरप्यवयवाखण्डवृत्त्योर्धर्मद्वारैकस्मिन्धर्मिणि समाहारस्तथेत्यर्थः ।

॥ **उभयेति** ॥ अवयवशक्तिसमुदायशक्तिरूपोभयकार्यस्य कर्तृत्वस्मृतिपद्मत्वस्मृतिरूपस्य यद्दर्शनं तस्येत्यर्थः ।

## तर्कताण्डवम्

अत एव

"................विद्वद्रूढिं च तत्रगाम्।
बहुशो दर्शयत्यञ्जस्तात्पर्यात्सनिरुक्तिकम्"

इत्यनुव्याख्याने रूढेर्योगसाहित्यं सनिरुक्तिकमित्यनेनोक्तम्।

सन्न्यायरत्नावल्यामपि न चावयववृत्त्यखण्डवृत्त्योरेकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धत्वाद्योगरूढिर्नाम वृत्तिः नास्तीति वाच्यम्। तस्याः पङ्कजादिशब्देषु दृष्टत्वादिति समाहार एवोक्तः।

यत्तु सुधायां न हि योगरूढ्योः समाहारो योगरूढिर्येन विरोधः स्यात्। किं नाम रूढलक्षणालक्षणामात्रादिवेयं योगरूढिवृत्तिर्योगमात्रात्प्रयोगबाहुळ्याद्भिन्ना तृतीया वृत्तिरित्युक्तम्। तत् प्रयोगमात्रबाहुळ्यमित्यनुव्याख्यानस्थबाहुळ्यशब्दस्य प्रयोजनं वक्तुम्, अनेनापि प्रकारेण वृत्तित्रित्वसिद्धिरित्यभिप्रेत्य वा एकत्रधर्मे समाहारो नेत्यभिप्रेत्य

वेति द्रष्टव्यम्।

अत एव सुधायां ''विद्वद्रूढिं च तत्रगाम्'' इत्यनुव्याख्यानव्याख्यानावसरे सनिरुक्तिकं योगवृत्तिसाहित्येन तत्र गां परमेश्वरविषयां सर्वशब्दानां विद्वद्रूढिं दर्शयतीत्युक्तम्। इति।

इति योगरूढिसमर्थनम् ॥ ६१ ॥

## न्यायदीपः

वृत्तिद्वयसमाहारो योगरूढिरित्यत्रानुमानिकपादीयाचार्योक्तिं संवादयति ॥ **अतएवेति** ॥ योगरूढेः समाहाररूपत्वादेवेत्यर्थः। तत्र गाम् विष्णुनिष्ठां तं यच्छतं वर्षाण्यभ्यार्चदित्यादिका ऐतरेयोपनिषत् सनिरुक्तिकं योगवृत्तिसाहित्येन दर्शयतीत्यर्थः।

॥ **सन्न्यायरत्नावल्यामिति** ॥ पुरातनानुव्याख्यानटीकायाम्। सुधाविरोधमाशङ्क्य समाधत्ते ॥ **यत्त्विति** ॥ **इयमिति** ॥ पङ्कजादिपदनिष्ठा योगवृत्तिः कुम्भकारादियोगमात्राद्भिन्ना। कुतः। प्रयोगबाहुळ्याद्धेतोरित्यर्थः ॥ **इत्यनुव्याख्यानस्थेति** ॥ तत्रोक्तरूढिलक्षणस्यैवाधिकप्रक्षेपेण योगरूढिलक्षणत्वेनोक्तेरिति भावः।

॥ **अनेनेति** ॥ योगसहितप्रयोगबाहुळ्यरूपेणापि प्रकारेणेत्यर्थः। न केवलं योगसहितसमुदायशक्तिरूपेणेत्यपेरर्थः ॥ **वृत्तित्रित्वेति** ॥ मुख्यवृत्तित्रित्वेत्यर्थः। एवं तात्पर्यकल्पने ज्ञापकमाह ॥ **अत एवेति** ॥ एतच्चोपलक्षणम्। समाहाररूपवृत्तयो हि ता इत्यानन्दमयाधिकणान्त्यभागसुधावाक्यमपि ज्ञापकं ध्येयम्। एतेन पूर्वोत्तरविरोधोपि प्रत्युक्तः।

इति योगरूढिसमर्थनम् ॥ ६१ ॥

***

## ६२. अथ मण्युक्तयोगरूढिसमर्थनभङ्गः ।

### तर्कताण्डवम्

मणौ तु – पदमेव पदार्थस्मारकम्। दृष्टानुविधानत्वाद् गवादिशब्देष्वनुगतत्वात् एकत्वेन लघुत्वाच्च। न तु प्रतिपदार्थस्मृतिः। तत्तत्कालायातमदृष्टचरमननुगतं अनन्तमदृष्टादिकम्। पदं च नासम्बद्धं स्मारकम्।

नच नियतप्रयोग एव सम्बन्धः। गवादिशब्देष्वपि तत्प्रसङ्गात्। न च लाक्षणिक इव वृत्त्यन्तररूपः सम्बन्धोस्ति। तथा च गवादिपदानां गवादिष्विव पङ्कजपदस्यापि पद्मत्वस्मृत्यर्थमेव सम्बन्धत्वेन रूढिरावश्यकीति योगरूढिः साधिता।

तन्न। वाक्यस्थात् पदात् पदार्थस्यानुभूतिरेव न स्मृतिरपीत्यन्विताभिधानप्रस्तावे उक्तत्वात्।

त्वन्मते तु पदार्थस्मृतिहेतौ शक्तिस्मृतावश्याङ्गीकार्यस्याननुगतादृष्टादिजन्यत्वस्यादावेव पदार्थस्मृतावङ्गीकर्तुमुचितत्वाच्च।

### न्यायदीपः

॥ **मणौ त्विति** ॥ इति योगरूढिः साधितेत्यन्वयः। शब्दखण्डे योगरूढिवादसिद्धान्ते अस्ति व्युत्पन्नस्य पदज्ञानानन्तरमन्वयप्रतियोगिस्मृतिरित्यादिनोक्तं निष्कृष्यानुवदति ॥ **पदमेवेत्यादिना** ॥ **दृष्टेति** ॥ पदज्ञानानन्तरमेव पदार्थस्मृतेर्दृष्टत्वादितिभावः।

॥ **गवादीति** ॥ तत्र रूढ्या पदस्यैर स्मारकत्वाङ्गीकारादिति भावः। पदमेवेत्येवकारव्यावर्त्यमाह

॥ **न त्विति** ॥ ततः किमित्यत आह ॥ **पदश्चेति** ॥ पदस्यस्मारकत्वे हि तदन्यथानुपपत्त्या शक्ति-सिद्धिस्तदेव नेत्याह ॥ **वाक्यस्थादिति** ॥ केवलपदस्य स्मारकत्वमप्यस्तीत्यभ्युपगमाद् वाक्यस्था-दित्युक्तम्।

नन्ववाक्यस्थस्य स्मारकत्वमस्तीति तदन्यथानुपपत्त्या शक्तिसिद्धिरिति चेन्न। हस्तिना हस्तिप-स्मृतेरिव पदेन पदार्थस्मृतेरपि व्युत्पत्तिकाले सहानुभूतत्वरूपसम्बन्धादेव सम्भवेन शक्तेरनपेक्षितत्वा-दिति भावः।

॥ **उक्तत्वादिति** ॥ भाट्टाभिमताभिहितान्वयभङ्ग उक्तत्वादित्यर्थः। यदप्यदृष्टादिकं न स्मारकमननुगमादिति तन्निराह ॥ **त्वन्मत इति** ॥

## तर्कताण्डवम्

**किञ्च न पदार्थस्मृतिमात्रं शक्तिसाध्यम्। सादृश्यादृष्टा-दिनापि तत्स्मृतेः।**

**नापि पदजन्या तत्स्मृतिः शक्तिसाध्या वृत्तिसाध्यावा इह तु परिशेषाच्छक्तिसिद्धिरिति वाच्यम्। गङ्गापदात्तीरस्मृतौ कार्यकारणसम्बन्धेनाकाशपदादिजन्यायामाकाशादिस्मृतौ च व्यभिचारात्। अनुभवस्यैव पदानुविधानदर्शनेन स्मृतेः पदाजन्यत्वाच्च।**

## न्यायदीपः

नन्वनन्यगत्या शक्तिस्मृतावननुगतादृष्टाद्यङ्गीकारेपि न पदार्थस्मृतौ पदस्यैव सर्वत्रानुगतस्य सम्भवान्न तत्रादृष्टादिकं स्मृतिहेतुत्वेनाङ्गीकार्यमिति वदन्तं प्रत्याह ॥ **किञ्चेति** ॥

अस्तु पदादेव पदार्थस्मृतिस्तथापि न तदर्थं पदे शक्तिकल्पना युक्ता। तथाहि। किमविशेषित-पदार्थस्मृतिः पदशक्तिसाध्येति शक्तिसिद्धिं मन्यसे अथ पदजन्यपदार्थस्मृतिः शक्तिसाध्येति यद्वा

पदजन्यपदार्थस्मृतिः पदवृत्तिसाध्या पङ्कजपदे च लक्षणागौणवृत्त्योरयोगाच्छक्तिसिद्धिरिति पदाधीनानियता पदार्थस्मृतिः शक्तिसाध्येति वा उक्तरूपा स्मृतिर्नियतसम्बन्धसाध्येति वा शाब्दानुभवहेतुः स्मृतिः शाब्दानुभवप्रवेशप्रयोजकस्मृतिर्वा शक्तिसाध्येति।

अद्यं निराचष्टे ॥ **न पदार्थेति** ॥ अन्यथोपपत्तिमाह ॥ **सादृश्येति** ॥ द्वितीयतृतीये आशङ्क्य निराह ॥ **नापीति** ॥ ननु वृत्तिसाध्यापदार्थस्मृतिः कथं शक्तिं विनानुपपन्ना। येन शक्तिः सिध्येदित्यत आह ॥ **इहतु परिशेषादिति** ॥ पङ्कजमानयेत्यादौ गौणलक्षणावृत्त्यजन्यत्वे सतिपङ्कजपदवृत्तिजन्या पदार्थस्मृतिः शक्तिं विना न युक्तेति शक्तिसिद्धिरित्यपि न वाच्यमित्यर्थः।

आद्ये व्यभिचारमाह ॥ **गङ्गापदात्तीस्मृताविति** ॥ तत्र सा पदजन्यपदार्थस्मृतिर्भवति न शक्तिसाध्येति व्यभिचारः इत्यर्थः। यत्तु शक्तिसाध्येत्यस्य शक्तिप्रयोज्येति व्याख्यानाददोष इति तन्न। तथात्वेऽवयवशक्तिप्रयोज्यत्वेनाप्युपपत्त्या रूढ्यसिद्धेः लाक्षणिकेपि शक्तेः प्रयोजकत्वे मानाभावाच्च शक्त्यार्थस्मृतावेवोपक्षयात्।

द्वितीये व्यभिचारमाह ॥ **कार्येति** ॥ दृष्टानुविधानत्वादिति हेतुं च निराह ॥ **अनुभवस्यैवेति** ॥ यद्वा पदजन्या तत्स्मृतिरिति विशेषणसम्भवीत्याह ॥ **अनुभवस्यैवेति** ॥ **पदेति** ॥ वाक्यस्थपदाजन्यत्वात् अवाक्यस्थपदजन्यत्वेपि वृत्तिं विनैव साहचर्यमात्रेण तज्जन्यत्वस्यान्विताभिधानप्रस्ताव एवोक्तत्वात्।

## तर्कताण्डवम्

**एतेन पदाधीना नियता पदार्थस्मृतिः शक्तिसाध्या, गङ्गादिशब्दात्तीरादिस्मृतिश्च न नियतेति निरस्तम्। पदाधीनत्वस्यैव निरस्तत्वात्। शक्तेरपि सम्बन्धत्वेनैव स्मारकत्वात्। व्युत्पत्तिकाले चेदमत्र शक्तमित्येकबुध्युपारूढत्वरूपसम्बन्धस्य सत्त्वेन तेनैव स्मृतिसम्भवाच्च। शक्तिस्मृतौ व्यभिचाराच्च। सापि हि नियता। त्वन्मते पदार्थस्मारकत्वात्। मन्मते तदनुभावकत्वात्।**

## न्यायदीपः

चतुर्थं निराह ॥ **एतेनेति** ॥ एतेनेत्युक्तमाह ॥ **पदाधीनत्वस्येति** ॥ सादृश्यादृष्टादिनापि तत्स्मृतेरित्युक्तदिशेति भावः। पदाधीनानियता पदार्थस्मृतिः शक्तिसाध्येत्यत्राप्रयोजकत्वं वक्तुमाह ॥ **शक्तेरपीति** ॥ **सम्बन्धत्वेनेति** ॥ हस्तिहस्तिपादौ तथा क्लृप्तत्वाच्छक्तित्वेन स्मृतिहेतुत्वस्याक्लृप्तत्वादिति भावः।

ततः किमित्यत आह ॥ **व्युत्पत्तिकाले चेति** ॥ अवयवशक्तिग्रहणकाल इत्यर्थः ॥ **एकेति** ॥ शब्दार्थयोः समूहालम्बनैकज्ञानविषयत्वरूपसम्बन्धस्येत्यर्थः। तथाच न शक्तिसिद्धिरिति भावः।

॥ **शक्तिस्मृताविति** ॥ पदनिष्ठशक्तिस्मृतिरपि पदाधीना तथापि न शक्तिसाध्या। तद्धेतुभूतशक्त्यन्तराभावात्। परोक्षज्ञाने विषयस्याहेतुत्वात्। विषयत्वेन हेतुत्वेपि सम्बन्धत्वेनाहेतुत्वाच्च व्यभिचार इति भावः।

ननु तत्र नियतेत्युक्तविशेषणाभावान्न व्यभिचार इत्यत आह ॥ **सापिहीति** ॥ कथमित्यतो व्यनक्ति ॥ **त्वन्मत इति** ॥ पदार्थस्मृतेर्वाक्यार्थबोधाहेतुत्ववादिनो मत इत्यर्थः।

## तर्कताण्डवम्

**न च शक्तिरूपसम्बन्धस्मृतिर्न शक्योपस्थितिहेतुः। संवन्धज्ञानस्य शक्यरूपप्रतिसम्बन्धिज्ञानाधीनत्वेन अन्योन्याश्रयात् किन्तु सम्बन्धितावच्छेदकेन गोपदत्वादिनैवेति वाच्यम्। विस्मृतशक्तिकस्य पुंसः शाब्दबोधाभावात्।**

**नचान्योन्याश्रयः। त्वन्मते शक्तिस्मृतिपूर्वकाले वृत्तिनिरपेक्षा शक्यस्याशाब्दी स्मृतिः अनन्तरं तु तत्सापेक्षा शाब्दी स्मृतिः। मन्मते तु तत्काले शक्यस्य शक्त्यवच्छेदकत्वेन स्मृतिः, अनन्तरन्तु स्वतन्त्रस्यैवानुभव इति ज्ञानव्यक्तिभेदात्।**

## न्यायदीपः

त्वन्मत इत्यादिनोक्तमसिद्धमिति शङ्कते ।। **न चेति** ।। वाच्यमित्यन्वयः ।। **विस्मृतेति** ।। तथा च शक्तिस्मृतिः शक्यस्मारकत्वात् नियतैवेति भावः। मतद्वयेपि न प्रागुक्तान्योन्याश्रयदोष इत्याह ।। **न चेति** ।। **वृत्तिनिरपेक्षेति** ।। अदृष्टाद्यधीनत्वाद्वृत्तिसापेक्षत्वे हि वृत्तिज्ञानस्य तत्सापेक्षत्वादन्योन्याश्रयः स्यादिति भावः।

नन्वेवमनन्तरमपि तथैवास्तु। तथाच शक्तिज्ञानस्य नैयत्याभावान्न व्यभिचार इत्यत आह ।। **अनन्तरं त्विति** ।। विस्मृतशक्तिकस्यशाब्दबोधाभावदृष्टेरिति भावः। तत्र हेतुगर्भमशाब्दीशाब्दीति। तत्काले शक्तिस्मृतिकाले।

## तर्कताण्डवम्

**एतेनैव – पदान्नियता स्मृतिः नियतसम्बन्धसाध्या। शक्त्यापि समं पदस्य शक्त्याश्रयत्वमेव सम्बन्ध इति निरस्तम्। शक्येनापि समं सम्बन्धान्तरं क्लृप्तमित्युक्तत्वात्।**

**एतेनैव शाब्दानुभवहेतुः स्मृतिः शाब्दानुभवप्रवेश-प्रयोजिका स्मृतिर्वा शक्तिसाध्येति निरस्तम्। अनुभव-हेतुत्वादिप्रयोजकस्य स्मृतौ जातिभेदस्याभावात्। प्राप्ता-प्राप्तविवेकेनानुभवस्येव शक्तिसाध्यत्वसिद्धेश्च। आद्यपक्षे शक्तिस्मृतौ व्यभिचारात्।**

**तस्माद्गवादिशब्दे गोत्वस्येव पङ्कजशब्देपि पद्मत्वस्य स्मृत्यर्थमेव शक्तिरिति मण्युक्तस्यायुक्तत्वाच्छब्दद्वयेपि तयोरनुभूत्यर्थमेव शक्तिरित्यस्मद्रीत्यैव योगरूढिसिद्धिः।**

**इति मण्युक्तयोगरूढिसमर्थनभङ्गः ।। ६२ ।।**

## न्यायदीपः

शक्तिस्मृतौ व्यभिचारवारकं मण्युक्तं पञ्चमं साध्यान्तरं च प्रत्याह ॥ **एतेनैवेति** ॥ **नियत सम्बन्धसाध्येति** ॥ अत्रापि नियतप्रयोगादिसम्बन्धस्य दूषणाल्लक्षणादेरभावात्परिशेषात् शक्तिसिद्धिरिति भावः। प्रागुक्तव्यभिचारं निराह ॥ **शक्त्यापीति** ॥ **उक्तत्वादिति** ॥ एकबुद्ध्युपारूढत्वसम्बन्धस्य सत्त्वेनेत्यनेनोक्तत्वादित्यर्थः।

षष्ठसप्तमौ निराह ॥ **एतेनैवेति** ॥ **प्राप्ताप्राप्तेति** ॥ पदार्थस्मृतेः प्रागुक्तैकबुद्ध्युपारूढत्वसम्बन्धेनापि प्राप्ततयानुभवस्य केनाप्यप्राप्ततया तस्यैव शक्तिसाध्यत्वसिद्धिरित्यर्थः ॥ **शक्तिस्मृताविति** ॥ तदावश्यकत्वस्य व्युत्पादितत्वादिति भावः ॥ **तयोरिति** ॥ गोत्वपद्मत्वयोरित्यर्थः।

इति मण्युक्तयोगरूढिसमर्थनभङ्गः ॥६२॥

* * *

## ६३. अथ पङ्कजादिशब्दानां कुमुदादौ लक्षणाभङ्गः।

### तर्कताण्डवम्

**यत्तूक्तं मण्यादौ पङ्कजकुमुदमानयेत्यत्र पङ्कजसमुदायस्य स्वार्थपद्मत्वसम्बन्धिनि कर्तृत्वे लक्षणा।**

**न च कुमुदे पद्मत्वस्यायोग्यतयानन्वये योगेनैव कुमुदे कर्तृत्वं बोध्यत इति वाच्यम्। एकपदोपादानरूपयान्तरङ्गप्रत्यासत्त्या कुमुदान्वयात्प्रागेव पद्माश्रितत्वेनोपस्थितस्य कर्तृत्वस्याश्रयाकाङ्क्षाभावेन पुरोडाशकपालपदे तुषोपवापान्वयार्थमधिष्ठानस्येवेहापि कुमुदान्वययोग्यस्य स्वतन्त्रस्य कर्तृत्वस्योपस्थित्यर्थं लक्षणाया आवश्य-**

**कत्वात्। स्थळपद्मं तु चम्पकादिवद्विजातीयमेव। पद्म-संस्थानसाम्यात् पङ्कजपदस्य तत्र समुदायलक्षणा-साजात्येप्युक्तविधया स्थलान्वययोग्यस्य स्वतन्त्रस्य पद्म-त्वस्योपस्थित्यर्थमेवावयवलक्षणेति।**

**तन्न। मण्डपं भोजयेत्यादौ यौगिकार्थपरे मण्डपपदे रूढ्येवात्रापि रूढ्या पूर्वं स्वार्थोपस्थानेपि पश्चात् कुमुदान्वयार्थं रूढेर्मूकीभावे सति योगेनैव स्वतन्त्रस्य कर्तृत्वस्योपस्थित्याकाङ्क्षासम्भवेन लक्षणानपेक्षणात्।**

## न्यायदीपः

॥ **यत्तूक्तमिति** ॥ योगरूढिसमर्थनवादान्ते उक्तमित्यर्थः ॥ **पङ्कजसमुदायस्येति** ॥ पङ्कशब्दजशब्दसमुदायस्य स्वार्थो हि पद्मत्वं तत्समानाधिकरणतया तत्सम्बन्धि यत्पङ्कजनिकर्तृत्वं तन्मात्रं कुमुदे बोधयितुं पङ्कजेति पदद्वयस्य लक्षणाङ्गीक्रियत इत्यर्थः। लक्षणाबीजोक्त्यर्थं सम्बन्धिनीत्युक्तम्।

योग एवास्त्वित्याशङ्क्य निराह ॥ **न चेति** ॥ कर्तृत्वं पङ्कजनिकर्तृत्वम्। एवमग्रेपि ॥ **पुरोडाशेति** ॥ पुरोडाशकपालेन तुषानुपवपतीति वाक्येन पुरोडाशनिवर्तककपाले तुषाणां स्थापनान्वयार्थं पुरोडाशकपालेनेत्यस्याधिष्ठानभूतकपाले इत्यर्थबोधाय यथा लक्षणा तथेत्यर्थः।

॥ **स्वतन्त्रस्येति** ॥ पद्मत्वं विनाकृतस्य ॥ **अवयवेति** ॥ अवयवयोरित्यर्थः ॥ **योगिकार्थ-परेति** ॥ मण्डं पिबतीति मण्डपमिति व्युत्पत्त्या मण्डपानकर्तारमित्येवंरूपयौगिकार्थतात्पर्येण प्रयुक्ते वाक्येरूड्या पूर्वं गृहविशेषोपस्थापनेपि भोजनान्वयार्थं रूढेर्मूकीभावे सति योगेनैव मण्डपानकर्त्रुप-स्थितिर्यथा तथेत्यर्थः।

## तर्कताण्डवम्

**लक्षणापक्षेऽपि हि समुदायशक्तेः स्वार्थं प्रति**

**शाब्दानुभवाप्रवेशकत्वलक्षणो मूकीभाव आवश्यकः। अधिकश्चापुनरुक्तयेऽवयवशक्तेरपि मूकीभावः।**

**गङ्गाशब्दादौ तच्छक्तेर्मूकत्वेन प्रवाहानुपस्थितावपि तीरोपस्थित्यर्थं लक्षणा। इह तु समुदायशक्तेर्मूकत्वेन पद्मानुपस्थितावयवक्त्यैव स्वतन्त्रकर्तृत्वोपस्थितिसम्भवात् किं लक्षणया।**

**अन्यथा यौगिकेन सिध्यन्नपि समुदायेन लक्षणीय इति निर्बन्धे मण्डपशब्देपि समुदायस्य मण्डपानकर्तरि लक्षणा स्यात्।**

## न्यायदीपः

ननु यौगिकार्थान्वयपक्षे रूढेर्मूकीभावाश्रयणं दोषः स्यादित्यतस्तवापि सम इत्याह ॥ **लक्षणेति** ॥ तावता साम्यमेवेत्यत आह ॥ **अधिकश्चेति** ॥ **अपुनरुक्तय इति** ॥ पङ्कजनिकर्तृत्वस्य लक्षणया बोधितत्वात्पुनरवयवशक्त्यापि बोधने पौनरुक्त्यापत्तेस्तान्निरासार्थमित्यर्थः।

नन्वेवं गङ्गायां घोष इत्यादावपि लक्षणा न स्यादित्यतो वैषम्यमाह ॥ **गङ्गेति** ॥ तच्छक्तेः गङ्गापदशक्तेः ॥ **लक्षणेति** ॥ तस्य रूढशब्दत्वेनावयवशक्त्या तीरबोधासम्भवादिति भावः। अन्यथेत्यस्य विवरणं यौगिकेनेत्यादि।

॥ **लक्षणा स्यादिति** ॥ सा च नेष्टा। क्वचिद्यौगिकार्थान्वयसम्भवेपि रूढिपूर्विका लक्षणा यथा मण्डपं भोजयेत्यादिना लक्षणापक्षं पूर्वपक्षयित्वा त्वया तस्य निरासात्।

## तर्कताण्डवम्

**यत्तु – स्वतन्त्रकर्तृत्वोपस्थित्यर्थं पङ्कजपदस्य पुनरनुसन्धानादिकं कल्प्यम्। ततो वरं लक्षणैव लघुत्वादिति।**

**तन्न। लक्षणार्थमपि पुनरनुसन्धेयत्वात्।**

**पुनरननुसन्धानेपि तात्पर्याल्लक्षणेति चेत् स्वतन्त्रोपस्थितिरपि तथैवास्तु। पुरोडाशकपालपदे तु कपालमात्रार्थकत्वे तु तच्छक्तः शब्दो नास्तीति लक्षणा। इह तु कर्तृत्वमात्रार्थकतायां न पदान्तरवैयर्थ्यम्। नापि तच्छक्तशब्दाभाव इति वैषम्यम्।**

**न च यथा जातिविशिष्टव्यक्तौ शक्तस्य गोपदस्य गौः द्रव्यमित्यादावेकदेशे व्यक्त्यादौ लक्षणा तथा कर्तृत्वविशिष्टपद्मव्यक्तौ शक्तस्य पङ्कजशब्दस्य कर्तृत्वमात्रे लक्षणैव युक्तेति वाच्यम्। तत्र शक्तेरेकत्वेन मूकामूकविभागासम्भवात्। इह त्वनेकत्वेन तत्सम्भवात्।**

## न्यायदीपः

एकपदोपादानेत्यादिना प्रागुक्तमनूद्य निराह ॥ **यत्त्विति** ॥ कथं तर्हि पुरोडाशकपालेनेत्यत्र अधिष्ठानलक्षणेत्यत आह ॥ **पुरोडाशेति** ॥

दृष्टान्तान्तरमाशङ्क्य तद्वैषम्यमाह ॥ **न च यथाजातीति** ॥ **एकदेशेव्यक्त्यादाविति** ॥ गोत्वजातौ द्रव्यत्वान्वयायोगादिति भावः ॥ **एकत्वेनेति** ॥ व्यक्त्याकृतिजातयः पदार्थ इत्येकवचनप्रयोगरूपज्ञापकेन तथैव त्वयापि स्वीकृतत्वादिति भावः।

॥ **अन्यथेति** ॥ शक्तिनानात्वेपि लक्षणोपगमे इत्यर्थः ॥ **नानार्थस्येति** ॥ शब्दस्येति योज्यम्। गवादिशब्दानां जलादौ स्वर्गादिविषयशक्तेर्मूकीभावाल्लक्षणा स्यादित्यर्थः।

## तर्कताण्डवम्

**अन्यथा नानार्थस्यैकस्मिन्नर्थे लक्षणा स्यात्। स्थल-**

पद्मामप्यबाधितपद्मत्वानुभवात्पुण्डरीकदिवत्पद्मजातीयमेव। एवं च रूढार्थपरमण्डपपद इवात्राप्यवयवशक्तेः स्थालान्वयार्थं मूकीभावे रूढ्यैवस्वतन्त्रस्य पद्मत्वस्योपस्थितिसम्भावान्न लक्षणा।

अत एव–

"तेषुतेषु पदार्थेषु रूढिरङ्गीकृता यतः।
प्रयोजनबहुत्वेन तस्यतस्याविरोधतः"

इत्यनुव्याख्याने विष्णौ योगरूढानामप्याकाशादिशब्दानामन्यत्र रूढ्यादिकमेव स्वीकृतम्। न तु लक्षणा। रूढिपदेन योगस्याप्युपलक्षणात्।

पङ्कजादिशब्दानां कुमुदादौ लक्षणाभङ्गः ॥ ६३ ॥

## न्यायदीपः

एवं रूढ्यर्थानन्वयस्थळे लक्षणा नेत्युक्त्वा अवयवार्थानन्वयस्थळेपि न लक्षणेत्याह ॥ **स्थलेति** ॥ **न लक्षणेति** ॥ स्थलपङ्कजमानयेत्यादि पङ्कजपदस्येति योज्यम्।

एवमुपपादितस्यार्थस्योपयोगो मूलग्रन्थोक्तसमर्थनमेवेति भावेनाह ॥ **अत एवेति** ॥

यद्वा किमेवं कल्पनायां ज्ञापकमित्यत आह ॥ **अत एवेति** ॥ योगरूढशब्दानामेकैकार्थान्वयस्थलेऽप्युक्तदिशा शक्तिसम्भवेन लक्षणाया अयुक्तत्वादेवेत्यर्थः। सर्वेषां शब्दानां भगवति यौगिकत्वादिना शक्तावङ्गीकृतायां भगवति व्युत्पत्त्ययोगः, अवयवानां विष्ण्वर्थत्वात् कर्मानुष्ठानलोपश्चेत्यतः प्रवृत्तं तेषुतेष्विति वाक्यम्।

अस्यार्थः -- ज्योतिष्टोमादिशब्दानां योगेन हरौ व्युत्पत्युपपत्तिः, कर्मानुष्ठानसम्भवः लोकव्यवहारानुच्छेदश्चेत्येवं प्रयोजनानां बहुत्वे कारणेन तेषु तेषु तत्तच्छब्धवाच्यतया निगमनिघण्टु-

व्याकरणादिप्रसिद्धेष्वर्थेषु तत्तच्छब्दानां रूढिरङ्गीकृता यतस्तस्मात् तस्यतस्याविरोधतः तं तमर्थमपरित्यज्योपदेशलिङ्गप्रकरणादिबलेन सर्वशब्दानां विष्णौ च विष्णावपि शक्तिर्महायोग-विद्वद्रूढिरूपा शक्तिर्गृह्यत इति। अनुव्याख्याने आनुमानिकपादीयानुव्याख्यान इत्यर्थः। अन्यत्र भूताकाशादावित्यर्थः। ''य एषोन्तर्हृदय'' आकाश इति तैत्तिरीये ''दहरोस्मिन्नन्तराकाश'' इति छन्दोग्यादौ च तत्रतत्र भूताकाशवाय्वग्न्यादिशब्दानां भगवन्निष्ठविद्वद्रूढ्यर्थस्य महायोगार्थस्य चानन्वयेपि रूढ्यर्थमात्रस्य योगार्थमात्रस्य वान्वयसम्भवेन शक्तिरेव स्वीकृतेत्यर्थः।

ननु – श्लोके रूढिरङ्गीकृतेत्येवास्ति तत्कथं रूढ्यादिकमित्युक्तमित्यत आह ॥ **रूढिपदेनेति** ॥ यद्यपि सुधायां रूढिरित्युपलक्षणं वृत्तिरङ्गीकृता यत इति व्याख्यातम्। तथापि वृत्तिपदं रूढियोगरूप-वृत्तिद्वयमात्रपरम्। न तु लक्षणादिसाधारणम्।

''रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्''

इत्यादिविरोधादिति भावेन योगस्येत्येवोक्तम्। प्रकृताभिप्रायेण योगस्येत्युक्तिरित्येके।

पङ्कजादिपदानां कुमुदादौ लक्षणाभङ्गः ॥ ६३ ॥

***

## ६४. अथ लक्षणागौण्योर्लक्षणम्।

### तर्कताण्डवम्

**मुख्यार्थसम्बन्धो वा तं निमित्तीकृत्य वृत्तिर्वा लक्षणा। तत्सादृश्यं वा तन्निमित्तीकृत्य वृत्तिर्वा गौणी। द्वे अपि रूढारूढभेदेन प्रत्येकं द्विविधे।**

**तत्र रूढलक्षणा यथा, मञ्चाः क्रोशन्तीति। अरूढ-लक्षणा यथा, गङ्गायां घोष इति।**

**रूढगौणी यथा, मृद्गवादौ गवादिशब्दस्य। अरूढगौणी यथा, सिंहो देवदत्त इति।**

**न तु मण्युक्तरीत्या अशक्योपस्थितिर्वा, शक्यसम्बन्धादशक्यासदृशान्वयपरोपस्थितिर्वा अशक्योपस्थितिहेतुः शक्यसम्बन्धो वा, अशक्यासदृशान्वयप्रतियोग्युपस्थितिहेतुः स्वशक्यसम्बन्धो वा, लक्षणा।**

**चतुर्ष्वपि पक्षेष्वभिप्रेतान्वयपरा स्मृतिरूपोपस्थितिरेव नास्तीत्युक्तत्वात्।**

## न्यायदीपः

शब्दस्य वृत्तिस्त्रेधा, अभिधा लक्षणा गौणी चेति पूर्वं निर्दिष्टाभिधावृत्तिं सप्रभेदं निरूप्य निर्देशक्रमेण लक्षणागौण्योर्लक्षणमाह ।। **मुख्यार्थेति** ।। परशब्दस्य परत्र वृत्तिहेतुत्वेन प्रतिद्धस्य सबन्धस्य वृत्तिविशेषलक्षणात्वायोगादरुच्या–

"प्रयोगयुक्तसादृश्यं सम्बन्धो वाप्यमुख्यतः।
वृत्तिहेतुरिति ज्ञेयः"

इत्यनुव्याख्यानसुधयोरुक्त्यनुरोधेनाह ।। **तं निमित्तीकृत्य वृत्तिर्वेति** ।। वृत्तिरर्थप्रतिपादकत्वम्। एवमग्रेपि।

आनुमानिकपादीयन्यायविवरणाद्युक्त्यनुरोधेनाह ।। **द्वे अपीति** ।। **गङ्गायामिति** ।। पावित्र्यसामीप्यादिप्रतिपादनेच्छयैव गङ्गायां घोष इत्यादिप्रयोगादिति भावः।

।। **सिह्मो देवदत्त इतीति** ।। देवदत्ते क्रौर्याद्युपपादनेच्छया तादृशप्रयोगोक्तिरिति भावः ।। **मण्युक्तरीत्येति** ।। लक्षणावादे मण्युक्तेत्यर्थः।

।। **अशक्येति** ।। शक्त्यविषयस्य पदार्थस्योपस्थितिरित्यर्थः। गौण्यामतिव्याप्तेर्लक्षणान्तरोक्तिः

**॥ शक्येति ॥** शक्तिविषयपदार्थसम्बन्धान्निमित्ताद्या उपस्थितिस्तन्मात्रस्य शक्त्यादावतिप्रसङ्गात् सा किंरूपेत्यत उक्तमशक्येत्यादि। शक्यविषयो यः शक्तिविषयेणासदृशश्चार्थः तन्निरूपितान्वय-बोधप्रयोजनिकेत्यर्थः। स्वेति बुद्धिस्थोगङ्गादिशब्दो गृह्यते। लक्षणा न त्विति पूर्वेणान्वयः **॥ उक्तत्वा-दिति ॥** भट्टाभिमताभिहितान्वयभङ्ग उक्तत्वादित्यर्थः।

## तर्कताण्डवम्

**आद्ययोरात्मनिष्ठाया उपस्थितेः शब्दनिष्ठलक्षणात्वा-योगाच्च। आद्ये घटशब्दात्कारणत्वेनाकाशोपस्थितौ गौण्यां चातिव्याप्तेश्च।**

**द्वितीये शक्येन सदृशे सम्बद्धे च वस्तुनि सम्बन्धस्य विवक्षया या लक्षणा तस्यामव्याप्तेश्च।**

**तृतीयचतुर्थयोः शब्दस्य परत्र वृत्तिहेतुत्वेन प्रसिद्धस्य सम्बन्धस्य वृत्तिविशेषलक्षणात्वायोगाच्च।**

**गङ्गायां मत्स्य इत्यत्रापि गङ्गाशब्दस्य तीरे शक्तिद्वारक-सम्बन्धस्य परत्र वृत्तिहेतुत्वेन प्रसिद्धस्य सम्बन्धस्य सत्त्वेन लक्षणापाताच्च।**

**एतेन लक्षणास्थले सम्बन्ध एव वृत्तिः शाब्दोप-स्थितिहेतुत्वात्, शक्तिवदिति मण्युक्तं निरस्तम्। शक्त्या-प्रतिपादकत्वस्यैवाभिधावृत्तित्वोक्तेः।**

## न्यायदीपः

शक्तिस्मरणवाक्यार्थबोधयोर्मध्ये पदार्थस्मरणमस्तीति न्यायमतरीत्यापि दोषोस्तीति भावेनाह **॥ आद्ययोरिति ॥** उपस्थितिहेतुत्वादिना केनचित्सम्बन्धेनोपस्थितेः शब्दनिष्ठत्वं मन्वानं प्रत्याह

**॥ आद्य इति ॥** यद्वा चतुष्टयसाधारणं तत्राप्याद्यद्वयसाधारणं दोषमुक्त्वा आद्यद्वयेपि प्रत्येकं दोषमाह **॥ आद्य इत्यादिना ॥**

परमते शब्दं प्रत्याकाशस्य कारणत्वात्कारणत्वेनेत्युक्तम्। कारणतारूपसम्बन्धेन निमित्तेनेत्यर्थः। अलाक्षणिकत्वाभिप्रायेण प्रयुक्तस्य घटशब्दस्याकाशे लक्षणाभावादतिव्याप्तेरित्युक्तम्। लक्षणस्यासत्त्वोपपादनाय सदृश इत्युक्तम्।

**॥ शक्तिद्वारके ति ॥** शक्तिविषयप्रवाहसम्बन्धस्य सत्त्वादशक्यतीरोपस्थितिहेतुत्वाच्च। तत्रातिव्याप्तिरित्यर्थः। सम्बन्धं निमित्तीकृत्य प्रतिपादकत्वं लक्षणेत्युक्तौ तु न दोष इति भावः **॥ सम्बन्ध एवेति ॥** शक्यसम्बन्ध एवेत्यर्थः।

**॥ शक्तिवदिति ॥** ईश्वरसङ्केतरूपसम्बन्धस्यैव शक्तित्वादिति भावः। दृष्टान्ते साध्यवैकल्यमिति भावेनैतेनेत्युक्तं व्यनक्ति **॥ शक्त्येति ॥ उक्तेरिति ॥** रूढ्यादिलक्षणोक्तिप्रस्ताव इत्यर्थः।

## तर्कताण्डवम्

**अत एव–**

**''अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते''**

**इति निरस्तम्। अविनाभूते सादृश्यविवक्षया या गौणी तस्यां अतिव्याप्तेः। मञ्चाः क्रोशन्तीत्यादावव्याप्तेश्च। क्रोशनसमये मञ्चपुरुषयोरविनाभावेपि धूमोस्तीतिवाक्यबुद्धधूमजन्य-वह्न्यनुमितावतिव्याप्तेश्च।**

**अविनाभावशब्दस्य लक्ष्येण सह परम्परासम्बन्ध-घटकत्वविवक्षायां नियतसम्बन्धरूपाविनाभावांशेन सम्बन्धेनैव तद्घटनान्नियमांशवैयर्थ्यम्।**

## न्यायदीपः

एवं मण्युक्तलक्षणचतुष्टयं निरस्य यानि वाद्यन्तरोक्तानि; अभिधेयाविनाभूतप्रतीतिर्वा, परम्परासम्बन्धघटकप्रतीतिर्वा, मुख्यार्थसम्बन्धिनिवृत्तिर्वा, अशक्ये तात्पर्यं वा, अशक्यासदृशे तात्पर्यं वा, वक्त्रभिप्रायो वेति, षड्लक्षणावृत्तिलक्षणानि तानि क्रमेण निराह ।। **अत एवेत्यादिना** ।। **अभिधेयेति** ।। अभिधेयस्य प्रवाहादेरविनाभूतस्य तीरादेः प्रतीतिरित्यर्थः ।

अत एवेति परामृष्टं हेतुं व्यनक्ति ।। **अविनाभूत इति** ।। वामहस्तो दक्षिणहस्त इत्यादाविति भावः । मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् स्याच्च शब्दात्प्रतीतेन लिङ्गेनानुमितार्थस्येति सुधोक्तिं विवृण्वानो दोषान्तरमाह ।। **मञ्चा इति** ।। तत्र मञ्चपुरुषयोरविनाभावाभावादिति भावः ।

ननु तत्रापि तदानीमविनाभावोस्ति तथैव मण्युक्तेरित्यत आह ।। **क्रोशेनेति** ।। **अनुमिताविति** ।। तस्याभिधेयधूमाविनाभूतवह्निगोचरप्रतीतित्वेन तत्र लक्षणसत्त्वादिति भावः ।

ननु – गङ्गादिशब्दस्य तीरादिप्रतीतिजनने न साक्षात्सम्बन्धोस्ति । किन्तु साक्षात्स्वसम्बन्धवदभिधेयसम्बन्धवत्त्वरूपपरम्परासम्बन्धप्रतीतिर्लक्षणेत्यर्थः ।

न च लक्षितलक्षणायामव्याप्तिः । तस्यापि परम्परासम्बन्धवत्त्वादिति भावेन द्वितीयमाशङ्क्य निराह ।। **अविनाभावशब्दस्येति** ।। अविनाभावांशेन अविनाभावशब्दार्थैकदेशेनेत्यर्थः । मुख्यार्थसम्बन्धिनि वृत्तिर्लक्षणेत्युक्त्यैव सामञ्जस्यादिति भावः ।

## तर्कताण्डवम्

**अत एव न मुख्यार्थसम्बन्धिनि वृत्तिर्लक्षणा । तस्मिन्नेव सादृश्यविवक्षया या गौणी तस्यामतिव्याप्तेः । नाप्यशक्ये वा शक्यसादृशे वा तात्पर्यं लक्षणा ।**

**आद्ये गौण्यामतिव्याप्तेः । अन्त्ये सदृशे सम्बद्धे च सम्बन्धविवक्षया लक्षणायामव्याप्तेः । उभयत्रापि गाय्यादि शब्दतात्पर्येष्वतिव्याप्तेश्च ।**

नापि स्वार्थसम्बन्धेनेदं पदममुमर्थं बोधयिष्यतीति वक्तुरभिप्रायो लक्षणा। वेदे तदभावात्। लघुत्वाच्छब्द-धर्मत्वाच्च।

सम्बन्धेन बोधकत्वस्यैव लक्षणात्वसम्भवे तद्विप-रीतस्याभिप्रायस्य तत्त्वायोगाच्च। अन्यथा शक्त्येदं पदम-मुमर्थं बोधयिष्यतीत्यभिप्रायोऽभिधा स्यात्।

यद्यपि शक्तिं सादृश्यं चा निमित्तीकृत्यार्थप्रतिपादकत्वं लक्षणा शक्तिं सम्बन्धं वा निमित्तीकृत्य वृत्तिर्गौणीत्यपि वक्तुं शक्यम्।

तथापि लाघवार्थं प्रतिपादने हेतुकथनार्थं चानु-व्याख्याने सबन्धसादृश्यमुखमेव लक्षणमुक्तम्। गामुच्चा-रयेत्यत्रापि लक्ष्यस्य गोशब्दस्य शक्येन गवा शक्तिरूपः सम्बन्धोस्त्येवेति नाव्याप्तिः।

## न्यायदीपः

लक्षणान्तरं च प्रत्याह ॥ **अत एवेति** ॥ अत एवेति परामृष्टदोषं व्यनक्ति ॥ **तस्मिन्नेवेति** ॥ मुख्यार्थसम्बन्धिन्येवेत्यर्थः। प्रवाहवत्तीरस्यापि पावित्र्यादिसादृश्यविवक्षया तीरं गङ्गेति तत्र प्रयुज्यते तत्रेति भावः। या तु मुख्यार्थसम्बन्धिन्यर्थान्तरे वृत्तिरिति प्रमाणलक्षणटीकोक्तिः सा सुधारीत्यैव व्याख्येयेति भावः।

॥ **अशक्येवेति** ॥ तात्पर्यमित्यन्वयः ॥ **गौण्यामिति** ॥ सिंहश्चैत्र इत्यादावशक्ये चैत्रे सिंहपदस्य गौणस्य तात्पर्यसत्त्वादिति भावः।

॥ **सादृश्य इति** ॥ चैत्रमैत्रगृहयोः सदृशयोश्चैत्रगृहसम्बन्धमेव मैत्रगृहं न दूर इति वक्तुं चैत्रगृहमेव मैत्रगृहमिति प्रयोगस्तत्राव्याप्तेरित्यर्थः। अशक्यत्वेप्यसदृशत्वाभावादिति भावः।

॥ **गाव्यादीति** ॥ वृत्तिशून्यापभ्रष्टशब्देषु गोपिण्डादितात्पर्यकेष्वित्यर्थः ॥ **नापि स्वार्थेति** ॥ शक्यादिस्थले अतिव्याप्तिनिरासाय स्वार्थसम्बन्धेनेत्युक्तम्। सादृश्यं न सम्बन्ध इति भावः।

॥ **वेदे तदभावादिति** ॥ वेदापौरुषेयत्वस्य प्रथमपरिच्छेदे समर्थनेन तत्र वक्तुरभावादित्यर्थः ॥ **तद्विपरीतस्य** ॥ लघुत्वशब्दधर्महीनस्येत्यर्थः ॥ **अन्यथेति** ॥ गौरवादेरदोषत्व इत्यर्थः।

एवं स्वमते लक्षणमुक्त्वा परोक्तलक्षणानि च निरस्य स्वोक्तलक्षणे दोषमाशङ्क्य समाधत्ते ॥ **यद्यपीति** ॥ वृत्तिरर्थप्रतिपादकत्वम्॥ **लाघवार्थमिति** ॥ अभावाघटितत्वादिति भावः ॥ **प्रतिपादन इति** ॥ वृत्तिसत्त्व इत्यर्थः।

नन्वथापि शक्यसम्बन्धं निमित्तीकृत्य वृत्तिर्लक्षणेति लक्षणमव्याप्तमित्यत आह ॥ **गामिति** ॥ पिण्डस्योच्चारणकर्मत्वायोगाद्गामिति द्वितीयान्तस्य गोपदस्य गोशब्दमित्यर्थो लक्षणया गृह्यते। तत्र च द्वितीयान्तगामिति पदस्य शक्यो गोपिण्डः तत्सम्बन्धो वाचकत्वरूपोस्त्येव गोशब्दस्येति न तत्र सम्बन्धाभाव इत्यर्थः। पुल्लिङ्गोप्यस्ति गोशब्द इति शक्येन गवेत्युक्तम्।

## तर्कताण्डवम्

**तत्र च शक्तिर्न शक्तित्वेन हेतुः। किन्तु शक्यसम्बन्धित्वेनेति नाभिधात्वम्। जबगडदशमाहेत्यादिलक्षणायामपि वर्णानां प्रत्येकमुच्चारणकर्मत्वात्प्रत्येकं चाक्षराणामेकाक्षरकोशेष्वर्थवत्त्वावगमाच्छक्यसम्बन्धोस्त्येव।**

**तस्मान्मण्याद्युक्तानि चत्वार्यन्यानि षडिति लक्षणालक्षणदशकमयुक्तमित्यनुव्याख्यानोक्तमेव लक्षणं युक्तमित्याद्यूह्यम्।**

**एतेन गङ्गाशब्देन बोधितस्य पूरस्य तीरबोधकत्वे तीरस्य सप्तम्यर्थान्वयो न स्यात् विभक्तीनां प्रकृत्यर्थान्वितस्वार्थाभिधायित्वादिति निरस्तम्। परम्परसम्बन्धेन शब्दस्यैव**

**तीरबोधकत्वात्। अत एवानुव्याख्याने प्रयोगयुक्तपदेन शक्ति सम्बन्धो दर्शितः।**

## लक्षणागौण्योर्लक्षणम् ॥ ६४॥

### न्यायदीपः

नन्वेवं शक्तिरूप एव चेच्छक्यसम्बन्धस्तर्हि घटपटस्य घट इवाभिधा वृत्तिः स्यादित्यत आह ॥ **तत्र चेति** ॥ **न शक्तित्वेनेति** ॥ अभिधायां तु तथैव हेतुरिति भावः। ॥ **एकाक्षरकोशेष्विति** ॥ "जं कटीभूषणे पत्न्यामिति, बं कुम्भे वरुणे बिन्दौ" इति, "गं गीते गा च गाधायाम्" इति, "डः पुमान्विषये शम्भौ" विति, "दं क्लीबे पानवैराग्यकलत्रेषु" इत्यर्थवत्त्वावगमादित्यर्थः ॥ **लक्षणालक्षणेति** ॥ लक्षणावृत्तिलक्षणेत्यर्थः।

एवं गौणवृत्तेरपि परोदीरितलक्षणानि निरस्यानीति भावेनाह ॥ **इत्याद्यूह्यमिति** ॥ तथा हि – गौर्वाहीक इत्यादिगौणवृत्तौ स्वार्थसहचारिणो गुणाः जाड्यमान्द्यादयः लक्ष्यमाणा गोशब्दस्य वाहीके वृत्तौ निमित्तमित्येके।

"लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति।

तन्न। तथात्वे गौण्या लक्षणातो भेदाभावप्रसङ्गात्। गोशब्दस्य वाहीके वृत्तौ लक्ष्यमाणगुणानां निमित्ततायाश्चोपपत्तिशून्यत्वात्। लक्ष्यमाणगुणसादृश्याद्गुणान्तरं लक्ष्यते इत्यनानुभविकम्।

यत्तु – स्वार्थसहचारिगुणाभेदेन परार्थगतगुणा एव लक्ष्यन्त इति तत्तु गुणानां भेदस्याक्षादिमानसिद्धत्वेनापेशलम्। तस्मात्सदृशगुणाश्रयत्वं निमित्तीकृत्य वृत्तिर्गौणीत्येव युक्तमिति। पदार्थस्यैव करणत्वमिति मतोक्तदोषमनूद्य स्वमते नेत्याह ॥ **एतेनेति** ॥ **सप्तम्यर्थेति** ॥ आधारत्वरूपेत्यर्थः ॥ **प्रकृत्यर्थेति** ॥ पदार्थकरणत्वपक्षे तीरस्य प्रकृत्यर्थत्वाभावादिति भावः ॥ **परम्परेति** ॥ शक्यसम्बन्धेनेत्यर्थः।

लक्षणागौण्योर्लक्षणम्॥ ६४॥

***

## ६५. अथ लक्षणादिहेतूक्तिः ।

### तर्कताण्डवम्

**अन्ये तु–**

**''मुख्यार्थबाधे तद्योगे रूढितोथ प्रयोजनात्।**
**अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया''**

**इति लक्षणादौ हेतुत्रयमाहुः।**

### न्यायदीपः

एवं लक्षणादिवृत्तेर्लक्षणमुक्त्वा प्रयोगयुक्तेत्यनुव्याख्यानोक्तं शक्यसम्बन्धशक्यसादृश्ययोरेव लक्षणादिबीजत्वं मुख्यार्थबाधादेः पूर्वायोगे परग्रह इत्युक्तप्रकारेणामुख्यार्थग्रहणहेतुत्वं च समर्थयमानः काव्यप्रकाशिकाद्युक्तमनूद्य निराह ।। **अन्ये त्विति** ।।

।। **रूढित इति** ।। मञ्चाः क्रोशन्तीत्यादौ गङ्गायां घोष इत्यादौ पावित्र्यादिज्ञापनप्रयोजनात् अन्यार्थोऽमुख्यार्थो यत् यस्माद्व्यापाराल्लक्ष्यते ज्ञायते सा आरोपिता क्रिया आरोपितः शब्दव्यापारो लक्षणेत्यर्थः। शब्दव्यापारस्यारोपितत्वं च मुख्यार्थव्यवहितार्थनिष्ठत्वं ज्ञेयम्। लक्षणादौ लक्षणा-गौण्योः। गौणवृत्तिपक्षे तद्योग इत्यत्र तत्सदृश इति ध्येयम्।। **बाधे तद्योग इति** ।। निमित्तार्थे सप्तम्यौ।

रूढितोथ प्रयोजनादित्यस्य वैकल्पिकैकहेतुपरत्वाद्रूढित इत्यस्य लक्षणाप्रभेदत्वेनाहेतुरूपत्वाद्वा मुख्यार्थबाधतद्योगाभ्यां सह त्रयो हेतव इति भावेनाह ।। **हेतुत्रयमिति** ।।

### तर्कताण्डवम्

**तन्न। गङ्गाशब्दो ह्यशक्यतीरबोधनेतिप्रसङ्गान्नियामकं शक्तिस्थानीयं शक्यसम्बन्धमेव अपेक्षते। वक्ताप्यनेन सम्बन्धेन गङ्गापदं तीरं बोधयिष्यतीत्यभिप्रेत्यैव प्रयुंक्ते।**

## तर्कताण्डवम्

नतु मुख्यानुपपत्तिर्बोधनार्थं शब्देन प्रयोगार्थं वक्त्रा वापेक्ष्यते। अनुपपत्तिदर्शनस्य बोधकशब्दप्रयोगोत्तरकालीनत्वात्। तस्य प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुत्वेन तीरबोधनेऽनपेक्षितत्वाच्च।

किं तु प्रतिपत्त्रा मुख्यार्थत्यागायापेक्ष्यते। प्रयोजनमपि न शब्देनापेक्ष्यते। अचेतनत्वात्। प्रयोजनस्य बोधकार्यत्वेन बोधाहेतुत्वाच्च।

किं तु सति मुख्ये स्वायत्ते च शब्दप्रयोगे कस्मादमुख्यं प्रयोक्तव्यमिति वक्त्रा श्रोत्रा वानुसन्धीयत इति प्रतिपादकत्वरूपायां वृत्तावनुव्याख्यानोक्तोनुगतः सम्बन्ध एव हेतुः। अनुपपत्तिस्त्वमुख्यार्थे तात्पर्यज्ञानहेतुः।

## न्यायदीपः

मुख्यार्थबाधरूपहेतुं तावन्निराचिकीर्षुः स किं शब्देनापेक्ष्यमाणत्वाद्वा हेतरुत वक्त्रा प्रयोगार्थमपेक्ष्यमाणत्वात्प्रतिपत्त्रा वा लक्ष्याप्रतिपत्त्यर्थमपेक्ष्यमाणत्वादिति कल्पान् हृदि कृत्वाद्यं निराह ।। **गङ्गाशब्दोहीति** ।। आवश्यके वक्तृश्रोत्रपेक्षिते तरिबोधन इत्यर्थः। अशक्येति क्वचित्पाठः।

द्वितीयं निराह ।। **वक्त्रापीति** ।। उभयत्रैवकारव्यावर्त्यमाह ।। **न त्विति** ।। **बोधनार्थम्** ।। तीरादिबोधनार्थम्। शब्देनापेक्ष्यत इत्यन्वयः। यथोक्तं सुधायाम् — न शब्देनापेक्ष्यते नापि प्रयोक्त्रा किन्तु प्रतिपत्त्रैवेत्यादिना। अपेक्ष्यत इत्यत्र सुधोक्तमेव हेतुमाह ।। **अनुपपत्तीति** ।। न केवलमुत्तरकालीनत्वात्तदनपेक्षा किन्त्वन्यत्रोपक्षीणत्वेन सर्वथा तदपेक्षाभावाच्चेत्याह ।। **तस्येति** ।।

तृतीयमभ्युपेत्य तदपेक्षायाः सुधोक्तदिशान्यत्रोपयोगमाह ।। **किं त्विति** ।। मुख्यार्थबाधरूपहेतुं निरस्य प्रयोजनादित्युक्तहेतुं च सुधोक्तदिशा निराह ।। **प्रयोजनमपीति** ।।

॥ **अनुव्याख्यानेति** ॥

"प्रयोगयुक्तसादृश्यं सम्बन्धो वाप्यमुख्यत"।

इत्यनुव्याख्यानोक्त इत्यर्थः ॥ **सम्बन्ध एवेति** ॥ तद्योगपदोक्तशक्यसम्बन्ध एवेत्यर्थः। कुतस्तर्हि मुख्यार्थानुपपत्तिर्मृग्यत इत्यतः सुधोक्तंसमाधिमाह ॥ **अनुपपत्तिस्त्विति** ॥ मुख्यार्थान्वयानुपपत्तिरित्यर्थः।

## तर्कताण्डवम्

**यद्यपि प्रतिपादकत्वमेव तात्पर्यम्। तथापि सम्बन्धः तत्स्वरूपे हेतुः। अन्वयानुपपत्तिस्तु तज्ज्ञप्ताविति विवेकः।**

## न्यायदीपः

ननु – "वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः"। इति ज्ञानपादीयानुव्याख्याने "न च वाचनिकस्तात्पर्यार्थ इति विशेषः। तन्मानाभावादि"ति कर्मनिणये "तात्पर्यवृत्तिर्नातिरिच्यत" इत्यानुमानिकपादीयसुधाद्युक्त्या, चोक्तवृत्तिव्यतिरिक्ततात्पर्यवृत्तेरभावात् तात्पर्यज्ञानहेतुत्वोक्त्यैवोक्तलक्षणावृत्तिहेतुत्वं प्राप्तं तथा च सम्बन्ध एव हेतुर्नत्वनुपपत्तिरित्ययुक्तमित्याशङ्कामनूद्य निराह ॥ **यद्यपीति** ॥ वेदापौरुषेयत्ववादोक्तदिशा तत्प्रमितिशेषत्वरूपं प्रतिपादकत्वमित्यर्थः। सम्बन्धः शक्यसम्बन्धः। तीरादिप्रतिपादकत्वं, शब्दस्य सम्पादयति। मुख्यार्थभूतप्रवाहघोषाद्यन्वयानुपपत्तिदृष्टिस्तु प्रतिपादकत्वज्ञानहेतुरित्यर्थः। नचैवं "तस्य प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुत्वेनेति" पूर्वोक्तविरोधः। तस्यास्तद्द्वारा वृत्तिज्ञानहेतुत्वेनेत्यर्थकत्वेनाविरोधात्। इति सम्प्रदाय इति।

## तर्कताण्डवम्

**केचित्तु – छत्रिणो गच्छन्ति, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यतां, इत्यादावन्वयानुपपत्तेरभावात्तात्पर्यानुपपत्तिरेव**

**हेतुरित्याहुः। तन्न। अपौरुषेयवेदानुगतं तात्पर्यं तत्प्रमिति-शेषत्वरूपतत्प्रतिपादकत्वातिरिक्तं नास्तीत्युक्तत्वेनात्मा-श्रयात्। अन्वयानुपपत्तिमज्ञात्वा तात्पर्यानुपपत्तेःदुर्बोधत्वेन अन्वयस्य विषयतया तात्पर्यनिरूपकत्वेन चान्वयानुपपत्तेः प्रथमोपस्थितत्वाच्च ॥**

**न चाव्याप्तिः। प्रकरणादिना गच्छन्तीत्यस्यैकसार्थ-वाहित्वेन छत्र्यछत्रिगमनमर्थः, प्रवेश्येत्यत्रभोजनप्रयोजन-प्रवेशनमर्थः, रक्ष्यतामित्यस्य च दध्युपघातकमात्राद् रक्षण-मर्थः, इत्यवगतत्वेन तत्राप्यन्वयानुपपत्तेः सत्त्वात्।**

## न्यायदीपः

मण्युपन्यस्तमतमनूद्य निराह ॥ **केचित्त्विति** ॥ **अभावादिति** ॥ छत्रिणि गमनान्वयस्य यष्टिषु प्रवेशान्वयस्य काकेषुरक्षणावधित्वान्वयस्य सम्भवादिति भावः ॥ **उक्तत्वेनेति** ॥ वेदापौरुषेयत्ववादे उक्तत्वेन प्रतिपादकत्वानुपपत्त्या प्रतिपादकत्वरूपवृत्तिकल्पनमित्यात्माश्रयादित्यर्थः।

मण्युक्तदोषं चाह ॥ **अन्वयेति** ॥ प्रवाहे घोषान्वयानुपपत्तिमज्ञात्वा गङ्गायां घोष इति प्रयोक्तु-राप्तस्य प्रवाहे तात्पर्यानुपपत्तेर्ज्ञातुमशक्यत्वादित्यर्थः ॥ **विषयतयेति** ॥ अन्वयो हि शाब्दज्ञानविषयः। तात्पर्यं च तत्परं प्रधानप्रतिपाद्यं यस्य तस्य भावस्तात्पर्यमिति व्युत्पत्त्यान्वयनिरूप्यत्वात् तात्पर्या-नुपपत्तिं ज्ञातुं पूर्वमेवान्वायनुपपत्तेर्ज्ञातव्यत्वादिति भावः।

प्रागुक्तदोषं मण्युक्तदिशोद्धरति ॥ **न चाव्याप्तिरिति** ॥ छत्रिणो गच्छन्तीत्यादावन्वया-नुपपत्त्यभावदोषो नेत्यर्थः। प्रकरणादिनेत्यादिपदेन प्रत्यक्षादिमानान्तरग्रहः। सार्थः समूहः। छत्र्यछत्रिसमूहकत्वेनेत्यर्थः।

॥ **तत्राप्यन्वयानुपपत्तेरिति** ॥ छत्रिणि सार्थवाहिगमनान्वयस्य यष्टिसु भोजनार्थप्रवेशान्वयस्य, काकेषु यावद्दध्युपघाताकावधिकरक्षणान्वयस्य चानुपपत्तेः सत्त्वादित्यर्थः।

## तर्कताण्डवम्

ननु – लक्षणायामन्वयानुपपत्तिवदयोग्यत्वनैराकाङ्क्ष्ये अपि स्त इति ते बीजे कस्मान्न स्याताम्। घोषस्य निबिडाधाराकाङ्क्षिणः प्रवाहे नैराकाङ्क्ष्यादिति चेन्न। नोभयं निमित्तम्। अन्यतरज्ञानेपि लक्षणादर्शनात्। नाप्येकैकमननुगमात्। अन्वयानुपपत्तिव्याप्यत्वेन चानुगमेऽन्वयानुपपत्तेरेव तद्बीजत्वात्॥

एतेन – यथागङ्गायामित्यादावन्वयानुपपत्तिः छत्रिण इत्यादौ तु तात्पर्यानुपपत्तिरेवं क्वचिदयोग्यत्वं क्वचिन्नैराकाङ्क्ष्यं बीजमस्तु। न चाननुगमः। अनुपपत्तेर्ज्ञापकत्वेन वह्नौ धूमालोकादेरिवाननुगमेप्यदोषात्। यदि छत्रिण इत्यादावन्वयानुपपत्तिः कल्प्यते तर्हि गङ्गायामित्यादौ तात्पर्यानुपपत्तिः कल्प्यताम्। इति निरस्तम्। ज्ञापकेप्यनुगमसम्भवे त्यागायोगात्। अन्वयानुपपत्तेः प्रथमोपस्थितत्वाच्च।

अत एवानुव्याख्याने पूर्वस्यान्वितस्य मुख्यार्थस्यायोग इति सुधायामपि मुख्यार्थानुपपत्तिदर्शनमित्युक्तम्। अत्र मुख्यायोग इति वक्तव्ये यत्पूर्वायोग इत्युक्तं तल्लक्षितलक्षणासङ्ग्रहार्थम्। तत्र लक्ष्यानुपपत्तेरपि हेतुत्वात्।

लक्षणादिहेतूक्तिः ॥ ६५॥

## न्यायदीपः

अन्वयानुपपत्तिरेव लक्षणाज्ञप्तौ हेतुरित्युक्तमयुक्तमिति भावेन मण्युक्तचोद्यमेवानूद्य निराह **॥ नन्वित्यादिना॥**

प्रवाहस्य घोषान्वये प्रवाहनिष्ठात्यन्ताभावप्रतियोगोगित्वप्रमाविशेष्यत्वादिरूपायोग्यता व्यक्तेति तामुपेक्ष्य नैराकाङ्क्ष्यं व्यनक्ति ॥ **घोषस्येति** ॥

किं मिळितं द्वयं निमित्तं प्रत्येकं वेति क्रमेण निराह ॥ **नोभयमिति** ॥ **अन्वयानुपपत्तीति** ॥ अन्वयाभावव्याप्यत्वेनेत्यर्थः ॥ **अनुपपत्तेरिति** ॥ अमुख्यार्थप्रतिपादकत्वेनेत्यर्थः । तत्र दृष्टान्तः ॥ **धूमेत्यादि** ॥ **कल्प्यत इति** ॥ प्रागुक्तदिशेति भावः ।

''पूर्वायोगे परग्रह'' इति पूर्वोदाहृतश्लोके शेषस्यार्थमाह ॥ **पूर्वस्येति** ॥ स्वोक्तिसंवादायोक्तम् ॥ **अन्वितस्येति** ॥ लक्षितलक्षणैवनेतिकेचित् । मुख्यार्थबाध इत्युक्तत्वात् । अन्यथा मुख्यामुख्यार्थ-बाध इत्युच्येतेति । तदसदिति भावेनसुधोक्तमेवाह ॥ **अत्रेति** ॥ अनुव्याख्यानशेषे ।

लक्षणादिहेतूक्तिः ॥ ६५ ॥

***

## ६६. अथ लक्षणादेरभिधातो भेदसमर्थनम् ।

### तर्कताण्डवम्

**ननु गङ्गाशब्दस्य पूर इव तीरेपि, सिंहशब्दस्य च सिंह इव माणवकेपि शब्दान्तरे क्लृप्ता शक्तिरेवास्तु । किं लक्षणाकल्पनेनेत्यक्षादिशब्दवन्नानार्थतैवेति चेन्न । तीरादि-शक्तौ प्रमाणस्य मध्यमवृद्धव्यवहारदर्शनादेरभावेप्यनु-संहितलक्षणान्यायस्य पुंसो गङ्गादिशब्देन तीरादि प्रतीतेः ।**

### न्यायदीपः

पूर्वायोगे परग्रह इत्यस्य सुधोक्तदिशा अमुख्यवृत्तिसत्त्वोपपादनपरत्वरूपमर्थान्तरं मत्वा सुधोक्तिं साधयिष्यन्नाक्षिपति ॥ **नन्विति** ॥ यद्यप्येतन्मणिकृतैव लक्षणावादे आशङ्क्य निरस्तम् । तथापि

तदुक्तयुक्तिमरोचमानो व्युत्पादनार्थमाधिकयुक्तिविवक्षार्थं च पुनरत्रोपक्षिप्तवानित्यदोषः ॥ **शब्दान्तर इति** ॥ तीरमाणवकादिशब्दान्तरे नानार्थकाक्षादिशब्दान्तर इति वार्थः।

तर्ह्यनेकार्थत्वं गङ्गादिशब्दस्य स्यादित्यतोस्तु तदित्याह ॥ **अक्षादीति** ॥ **मध्यमेति** ॥ तद्व्यवहारस्यैव शक्तिग्राहकत्वादिति भावः। दर्शनादेरित्यादिपदेन प्रागुक्तव्याकरणोपमानकोशादिग्रहः ॥ **अनुसंहितेति** ॥ लक्षणास्थले यो न्यायो मुख्यार्थबाधादिस्तदनुसन्धानवतः पुंस इत्यर्थः।

## तर्कताण्डवम्

**न च घोषादिपदसमभिव्याहार एव तत्र प्रमाणमिति वाच्यम्। इन्द्रियस्य रूपादिनेव गङ्गाशब्दस्य तीरेण क्लृप्तात् परम्परासम्बन्धादेव बोधकत्वोपपत्तौ समभिव्याहारस्य साक्षात्सम्बन्धरूपशक्त्यकल्पकत्वात्। अन्यस्मिन् शब्दे क्लृप्तादपि स्वस्मिन्क्लृप्तस्यान्तरङ्गत्वात्। अक्षादिशब्दार्थास्तु नान्योन्यं सम्बद्धाः।**

## न्यायदीपः

ननूक्तस्थले गङ्गापदात्तीरधीर्घोषपदसमभिव्याहारादेव पदान्तरसमभिव्याहारेण पदाज्जायमानार्थधीश्च शक्त्यैवेत्याशङ्क्य निराह ॥ **न चेति** ॥ न तु लक्षणान्यायानुसन्धानमित्येवकारार्थः।

॥ **इन्द्रियस्य रूपादिनैवेति** ॥ संयुक्तसमवायरूपपरम्परासम्बन्धाद्यथा बोधकत्वं तथा शक्यसम्बन्धरूपक्लृप्तपरम्परासम्बन्धादेव बोधकत्वोपपत्तावित्यर्थः।

शब्दान्तरे क्लृप्तशक्तिरेवास्त्वित्युक्तस्योत्तरमाह ॥ **अन्यस्मिन्निति** ॥ स्वस्मिन् गङ्गाशब्द इत्यर्थः। शक्यसम्बन्धस्य क्लृप्तत्वादिति भावः।

अक्षादिशब्दवन्नानार्थतेत्युक्तं तन्निराह ॥ **अक्षादिति** ॥ अन्योन्यसम्बन्धत्वे हि प्रवाहसम्बद्धतीरे गङ्गाशब्दस्येवाक्षादिशब्दस्यापि क्वचिच्छक्तिः तत्सम्बद्धे चार्थे लक्षणेति स्यात् न चैवमित्यर्थः। यद्यपि

दिङ्नेत्रघृणिभूजलादीनामस्ति संयोगः सम्बन्धः। तथापि तत्र कस्य शक्तता कस्य शक्यसम्बद्धतेति विनिगमकाभावात्सर्वस्य शक्ततैवेति भावः।

## तर्कताण्डवम्

**किं च तीराद्यनन्तैः सह क्लृप्तपूररूपैकशक्यसम्बन्धेषु वृत्तित्वरूपधर्ममात्रकल्पनं लघु।**

**तेष्वनन्ताः शब्दनिष्ठाः शक्तिरूपा धर्मिणस्तद्ग्राहका वृद्धव्यवहारास्तद्ग्रहाः तत्स्मृतयश्चेत्यनेककल्पना गुर्वी।**

**मणौ तु तीराद्यनन्तेषु शक्यसम्बन्धस्त्वेकः शक्तयस्त्वनन्ता इति लाघवमुक्तम्।**

**तन्न। शक्यसम्बन्धानामपि संयोगादित्वेनानन्तत्वात्। सम्बन्धत्वेनैक्ये तु शक्तित्वेनैक्यमिति समम्। प्रत्युत त्वन्मते ईश्वरेच्छारूपा शक्तिः स्वरूपेणैवैका, शक्यसम्बन्धास्तु स्वरूपेणैव नानेति विपरीतं लाघवम्॥**

## न्यायदीपः

लाघवयुक्त्या च लक्षणैव युक्तेत्याह॥ **किञ्चेति**॥ **पूररूपेति**॥ पूरादिरूपेत्यर्थः। नद्यां घोष इत्यत्र पूरसम्बन्धस्तीरे मञ्चाः क्रोशन्तीत्यत्र मञ्चसम्बन्धः पुरुषे मार्गाश्चलन्तीत्यत्र मार्गसम्बन्धः प्राणिष्वित्यादिरूपसम्बन्धेष्वित्यर्थः।

॥ **तेष्विति**॥ तीरादिषु विषय इत्यर्थः॥ **उक्तमिति**॥ लक्षणावाद उक्तमित्यर्थः।

॥ **संयोगादित्वेनेति**॥ यत्र गुण्यादिपदेन गुणादेर्लक्षणा तत्र लक्ष्येण सम्बन्धस्य समवायत्वेन विषयेण विषयिणो लक्षणास्थले स्वरूपसम्बन्धत्वेनेत्यादिरादिपदार्थः।

## तर्कताण्डवम्

किं च तीरमात्रशक्तावतिप्रसङ्गेन गङ्गातीरे शक्ते-र्वक्तव्यतया नागृहीतविशेषणान्यायेन तीरार्थे प्रयोगेपि पूर-शक्तिरावश्यकी।

अपि च गङ्गाशब्दस्यानेकार्थत्वेऽनुपपत्तिपुरस्सरं तीरधीर्न स्यात्। न ह्यक्षादिशब्देषु तथाधीः। गङ्गां पश्येत्यादौ तीरं पूरं वेति सन्देहश्च स्यात्। अक्षान्यस्येत्यादौ तद्दर्शनात्। गां पश्येत्यादावपि सास्नादिमद्व्यक्तौ बाणादौ च शक्ति-स्मृतावस्त्येव सन्देहादिः।

गङ्गां पश्येत्यादौ तु तीरे वृत्तिज्ञानेऽपि न सन्देह इति विशेषः। अन्यथा शक्तिरूपसाक्षात्सम्बन्धमादाय परम्परासम्बन्धरूपलक्षणापालापे; कुठारस्य काष्ठेन, व्रीह्यादिद्रव्यस्य यागेन, श्रोत्रस्य च शब्देन साक्षात्सम्बन्धो दृष्ट इति; हस्तस्य काष्ठेन द्रव्यसंस्कारस्य यागेन चक्षुषो घटरूपेण च स स्यात्। रूढिमादाय योगापलापश्च स्यात्। द्वारशब्दस्यैव द्वारविशिष्टापिधाने च शक्तिकल्पनेनाध्या-हारश्च न सिध्येत्।

## न्यायदीपः

प्रकारान्तरेण तीरादौ न शक्तिर्गङ्गादिपदस्येत्याह ।। **किं च तीरमात्रेति** ।। ''नागृहीतविशेषणा विशेष्येषु बुद्धिरुत्पद्यत'' इति न्यायेन प्रथमोपस्थितत्वेन तत्र शक्तेरावश्यकत्वे सति शक्यसम्बन्धादेव तीरधीसम्भवान्न शक्तिकल्पनेति भावः।

ननु – यथा लक्षणापाक्षे पूरेणोपलक्षणेन व्यावृत्ततीरविशेषस्यान्वयो न तीरान्तरस्य तथा

पूरोपलक्षिततीरे शक्तिस्तु न तु तीरे पूरे चेति (चेत्)। गङ्गापदशक्तौ पूरस्य शक्यत्वेन विशेषणत्वे सम्भवति नोपलक्षणत्वं युक्तम्। किं च तीरशक्तावुपलक्षणत्वं पूरस्य न शक्यतावच्छेदकत्वम्। नापि धेनुपदे गोत्वस्येव शक्त्युपाधित्वम्। गौरवादिति भावः।

लक्षणानुभ्युपगतौ बाधकान्याह ॥ **अपि चेति** ॥ ननु – गोशब्दस्य नानार्थत्वेपि नास्ति सन्देहजनकत्वमिति तद्वत्स्यादित्यत आह ॥ **गङ्गां पश्येत्यादावपीति** ॥

अन्यथेत्यस्यैव विवरणं ॥ **शक्तिरूपेत्यादि** ॥ **व्रीह्यादिद्रव्यस्येत्यस्य** ॥ पुरोडाशाज्यादि-द्रव्यस्येत्यर्थः। तस्यैव साक्षाद्देवतोद्देशेन द्रव्यत्यागरूपयागान्वयात् ॥ **हस्तस्येति** ॥ कुठारादिग्राहिण इत्यर्थः।

॥ **द्रव्यसंस्कारस्येति** ॥ प्रोक्षणविलापनादेः ॥ **स इति** ॥ साक्षात्सम्बन्धः ॥ **योगेति** ॥ अवयवशक्तिरूपयोगस्यावयवार्थद्वारा समुदायार्थबोधकत्वेन परम्परासम्बन्धरूपत्वाद्रूढेः साक्षात् सम्बन्धत्वादिति भावः। योगापलापश्चेत्यनन्तरं कार्य इति शेषः। तेनादायेति साधु ॥ **अध्याहारश्चेति** ॥ पिधेहिपदाध्याहार इत्यर्थः।

## तर्कताण्डवम्

**ननु – रूढिरूपैकविशेषणानुसारिरीत्यैव न शब्द-सामान्यवृत्तिनिर्णयः; किन्तु सर्वविशेषानुसारिरीत्यैवेति चेत् समं प्रकृतेपि।**

**यद्यपि येन पुंसा गङ्गायां घोष इति तीर एव प्रथमप्रयोगो गृहीतः। तस्य तत्र शक्तिग्रहोस्ति। तथापि तेन गङ्गायां मत्स्यः तीरे घोषः तीरं न गङ्गा इत्याद्युत्तरबहुप्रयोगदर्शनात्सभ्रम एव। पूर्वं मम तीरधीस्तु असाधुशब्दादिव शक्तिभ्रमादिति निश्चीयते। तस्याः प्रमात्वमपि वह्निमति धूमभ्रमजन्याया अनुमितेरिव यादृच्छिकम्।**

## न्यायदीपः

रूढिमादाय योगापलापश्च स्यादित्युक्तदोषे परिहारमाशङ्कते ।। **नन्विति** ।। निर्णय इत्यनन्तरं येन योगापलापः स्यादिति योज्यम्।

।। **सर्वविशेषेति** ।। साक्षात्सम्बन्धस्य वृत्तित्वकल्पनं रूढिरूपैकविशेषानुसारि तथा च शब्दसामान्यवृत्तिकल्पने घटादिशब्दनिष्ठरूढिरूपविशेषानुसारिरीतिरिव कुम्भकारादिशब्दनिष्ठ-परम्परासम्बन्धरूपयोगरूपविशेषानुसारिरीतरप्यनुसर्तव्या। अन्यथा तत्र शब्दादर्थाप्रतीत्यापातात्। एवं च तद्रीत्या वृत्तिनिर्णये योगादिवृत्तिरावश्यकीति चेत्। तर्हि मुख्यवृत्तिरूपविशेषानुसारिरीतेरिव मुख्यार्थधीपूर्वकप्रतीतिस्थलीयलक्षणादिविशेषानुसारिरीतेरप्यनुसर्तव्यत्वात्। तद्रीत्या लक्षणादि-वृत्तिरभ्युपेयेति भावेनाह ।। **समं प्रकृतेऽपीति** ।।

ननु – पूर इव तीरेपि गङ्गापदस्य व्युत्पत्तिग्रहेणार्थप्रत्ययसाम्येऽपि कुतो न मुख्यता तीरे गङ्गाशब्दस्य। न च शक्तिग्रहो भ्रमः। तज्जन्यार्थप्रतीतेः संवादेन प्रमात्वानुभवादित्यत आह ।। **यद्यपीति** ।। यद्वा प्रागपि चेत्यादिनोक्तं पक्षं मणावन्येत्वित्यादिनानूद्य लक्षणायामव्युत्पन्नो बाह्य इत्यादिना तत्र दूषणं यदुक्तं तदनूद्य निराह ।। **यद्यपीत्यादिना** ।।

## तर्कताण्डवम्

**एतेन सम्बन्धसादृश्ययोस्तद्धितमुत्पाद्य तस्य लुप्य-भिधयैव सर्वं सेत्स्यति किममुख्यवृत्त्येति निरस्तम्। तथात्वे पूरानुपपत्तिपुरस्सरं तीरप्रतीत्यादेरयोगात्। न हि हरीत-क्यादिशब्दाद्वृक्षानुपपत्तिपुरःसरं फलधीः।**

**तस्माद्गङ्गाशब्दस्य तीरादिशक्तौ प्रमाणाभावाद्गौरवात् पूरादिशक्तेरावश्यकत्वात्पूरानुपपत्तिपुरःसरमेव तीरादि-बोधकत्वादसन्देहादतिप्रसङ्गाच्चेति हेतुषट्कान्न तीरादौ शक्तिः।**

## न्यायदीपः

यत्तु सुधायां ''पूर्वायोगे पग्रहः'' इत्यस्यार्थान्तरं वक्तुं सादृश्यसम्बन्धयोस्तद्धितमुत्पाद्य तस्यापि लुपि कृत इत्यादिना लक्षणादिवृत्त्यपलापचोद्यमनूद्य निरस्तं तन्निष्कृष्याह ।। **एतेनेति** ।। गङ्गासम्बन्धीत्यर्थे सिंहसदृश इत्यर्थे च गङ्गादिशब्दात्तस्येदमिति सूत्रेण वा ''तद्धितार्थ'' इति सूत्रेण वाणूप्रत्यये तस्य लुपि कृते ''लुपि युक्तवद्व्यक्तिवचन'' इति सूत्रेण पूर्ववल्लिङ्गवचनयोः प्राप्तत्वेन गङ्गासम्बन्धीत्यर्थे गङ्गायामितिशब्देन लक्षणां विनैव गङ्गासम्बन्धितीरप्रतीतेः सिंहसदृशमाणवकप्रतीतेश्चोपपत्तेः। यथा हरीतक्यादिशब्दात्फलेर्थेऽण्प्रत्यये तस्य लुप्चेति सूत्रेण लुपि सति लुपियुक्तवद्व्यक्तिभावे हरीतकीति रूपम्। तद्वदिति भावः। लुपित्यनन्तरं कृते सतीति शेषः। तेनोत्पाद्येति ल्यबन्तप्रयोगस्य साधुत्वं ज्ञेयम्। क्वचित्कृत इत्यपि पाठः ।।

प्रागुपपादितदूषणषट्कं सङ्ग्रहेण बुद्ध्यारोहायानुवदन्नुपसंहरति ।। **तस्मादिति** ।। तस्य विवरणं गङ्गेत्यादि पञ्चम्यन्तषट्कम्।

## तर्कताण्डवम्

**न च तीरशूरशब्दाध्याहार एव तर्ह्यस्त्विति वाच्यम्। निराकाङ्क्षत्वात्। गङ्गासिंहशब्दयोर्वैयर्थ्याच्च। अवैयर्थ्याय गङ्गायां मत्स्यस्तीरे घोष इत्याद्यध्याहारे च गौरवम्। प्रतीतैकवाक्यताभङ्गश्च।**

**द्वारमित्यादावध्याहार एव। न तु द्वारशब्दस्य पिधाने लक्षणा। साकाङ्क्षत्वात्। अवैयर्थ्याद्द्वारबोधकाभावाच्च। तद्बोधार्थं शब्दान्तराध्याहारे तु द्वारशब्दस्वारस्याविरोधिपिधेहिशब्दाध्याहार एव युक्तः।**

## न्यायदीपः

प्रकारान्तरेण लक्षणाद्यमुख्यवृत्त्यपलापमाशङ्क्य निराह ।। **न च तीरेति** ।। घोष इत्यत्र तीर

घोष इत्यन्वयाय तीरपदस्य, सिंहश्चैत्र इत्यत्र शूरश्चैत्र इत्यन्वयाय शूरपदस्य, अध्याहारः द्वारमित्यादाविव। अन्यथा तत्रापि लक्षणादि स्यादिति भावः।

## तर्कताण्डवम्

ननु—तथाप्यर्थापत्त्यैव तीरशूरधीरस्तु वक्तुराप्तेः प्रतीतार्थानुपपत्तेश्च विरोधेनार्थान्तरकल्पनादिति चेन्न।

लक्षणाद्यकल्पनेऽबोधकं पदं प्रयुञ्जानस्याप्तत्वानिश्चयेनाप्तत्वरक्षणार्थमेव तत्कल्पनात्।

तदेतदभिप्रेत्योक्तमनुव्याख्याने "पूर्वायोगे परग्रहः" इति।

अस्य चाक्षादिशब्दवन्नानार्थत्वपक्षे तद्धितलोपपक्षे पूर्वस्य प्रथमप्रतीतस्य पूरस्यायोगे परस्य चरमप्रतीतस्य तीरस्य ग्रहः प्रत्ययो दृश्यते स न स्यात्। इति। अध्याहारपक्षे पूर्वस्य क्लृप्तस्य पदस्यायोगेऽभावे परस्य कल्प्यस्याध्याहार्यस्य पदस्य ग्रहो द्वारमित्यादौ॥

अत्र तु गङ्गापदं विद्यत इति अर्थापत्तिपक्षे पूर्वस्य प्रथमप्रतीतस्यायोगेऽनुपपत्तौ प्राप्तायां परस्यास्तन्निर्वाहिकायाः लक्षणायाः ग्रहः स्वीकार इत्यर्थः। तस्माद्गङ्गाशब्दादेस्तीरादौ लक्षणादिरेव न शक्तिः।

ननु शब्दस्यार्थे शक्तिर्नाम तज्ज्ञानजनकत्वम्। तच्च गङ्गाशब्दादेस्तीरादावस्तीति चेन्न। अत्र शक्तिशब्देन जनकत्वप्रयोजकस्य शब्दस्यार्थेन सह साक्षात्सम्बन्धस्य अभिप्रेतत्वात्।

उक्तं ह्यनुव्याख्याने–

"नित्ययोगेपि शब्दानामर्थेनैव निवार्यते"

इति।

## लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६॥

### न्यायदीपः

यदपि सुधायां "नन्वत्रानुपपत्तेरर्थप्रतीतिहेतुत्वे अर्थापत्तिरेवास्तु" इत्यादिना लक्षणाद्यपलाप-चोद्यं प्रकारान्तरेणानूद्य समाहितम्, तन्निष्कृष्य दर्शयति ॥ **ननु तथापीति** ॥

प्रागुक्तपक्षचतुष्टये उक्तदोषाणां मूलारूढतां व्यनक्ति ॥ **अस्य चेति** ॥ अनुव्याख्यान-शेषस्येत्यर्थः। इत्यर्थ इत्यनेनान्वयः। स नस्यादितीत्यत्र विद्यत इतीत्यत्र चार्थपदं योज्यम्। नानार्थत्वपक्षे गङ्गादिपदस्येति योज्यम्।

मण्यादिरीत्या शङ्कते ॥ **ननु शब्दस्येति** ॥ **उक्तं हीति** ॥ आनुमानिकपादे।

लक्षणादेरभिधातो भेदसमर्थनम् ॥ ६६॥

* * *

## ६७. अथ लाक्षणिकादेरनुभावकत्वसमर्थनम्।

### तर्कताण्डवम्

यत्तु मणावुक्तम्–

वाचकमेवानुभावकम्। लाक्षणिकादिकं तु स्मारक-मेव। शक्तत्वस्यैवानुभावकत्वे तन्त्रत्वात्। न च सम्बन्धमात्रं

तत्र तन्त्रम् लाघवादिति वाच्यम्। घटशब्दस्यापि कार्यकारणसम्बन्धेनाकाशानुभावकत्वापातात्॥

नापि वृत्तिमात्रं तन्त्रम्। वृत्तित्वं हि शाब्दानुभवानुकूलपदपदार्थसम्बन्धत्वम्। तथा च शाब्दानुभवानुकूलत्वे ज्ञाते तद्घटितवृत्तित्वज्ञानम्, वृत्तित्वे च ज्ञाते तदवच्छेदेन शाब्दानुभवानुकूलत्वज्ञानम्, इत्यन्योन्याश्रयात्।

तीरस्यानुभवस्तु गङ्गापदस्मारिततीरान्वितघोषानुभावकेन घोषपदेनैव। एतेन लाक्षणिकमेवानुभावकं न तु वाचनिकमिति वैपरीत्यशङ्कानिरस्ता। सर्वत्र वाक्ये शक्तपदनियमवल्लाक्षणिकपदनियमाभावेन शक्ते अनुभावकताया आवश्यकत्वादिति।

तन्न। पदं न स्मारकमित्युक्तत्वेन गङ्गापदस्याननुभावकतायामबोधकत्वापातात्। लक्षणादेरनुभावकत्वातन्त्रत्वे स्मारकमात्रस्य कार्यकारणसम्बन्धस्येवावृत्तित्वप्रसङ्गाच्च॥

## न्यायदीपः

॥ **मणावुक्तमिति** ॥ लक्षणावादे ॥ **वाचकमिति** ॥ गङ्गायां घोषः सिंहश्चैत्र इत्यादौ गङ्गादिपदं घोषादिपदार्थान्विततीरादिरूपवस्वार्थानुभावकं नेत्यर्थः। केन तर्हि घोषाद्यन्विततीराद्यनुभव इत्यत आह ॥ **तीरस्येति** ॥

ऐतेनेत्युक्तं व्यनक्ति ॥ **सर्वत्रेति** ॥ **पदमिति** ॥ वाक्यस्थं पदं न पदार्थस्मारकमिति भट्टाभिमताभिहितान्वयभङ्गे उक्तत्वेनेत्यर्थः ॥ **अबोधकत्वेति** ॥ स्मृत्यनुभवान्यबोधाभावादिति भावः। ॥ **अवृत्तित्वप्रसङ्गाच्चेति** ॥ अन्यथा घटादिशब्दस्यापि त्वन्मते कार्यकारणसम्बन्धेनाकाशस्मारकत्वादाकाशे वृत्तिमत्त्वप्रसङ्गादिति भावः।

## तर्कताण्डवम्

न च शाब्दानुभवानुकूलस्मृतिहेतुत्वमात्रेण वृत्तित्वमिति वाच्यम्। उक्तस्मृतिहेतुत्वेपि वृत्तित्वादेस्तन्त्रत्वे अन्योन्याश्रयादिप्रसङ्गेन शक्तत्वमेव तन्त्रमिति सुवचत्वात् साक्षात्परम्परासाधारणशक्तिसम्बन्धित्वं वृत्तित्वमिति निरुक्तौ चान्योन्याश्रयाभावात्। गङ्गाशब्दस्य च तीरे परम्पराशक्तिसम्बन्धस्य सत्त्वात्। साक्षात्वेन विशेषणे गौरवात्। गङ्गापदात्स्मराम्येव घोषपदात्त्वनुभवाम्यपीत्यननुव्यवसायेन घोषान्विततीरानुभवार्थं गङ्गापदेप्यनुभावकत्वस्यावश्यकत्वाच्च।

अन्यथा गामानयोत्यत्रापि एकमनुभावकं न स्यात्। श्रुतमेवानुभावकं न त्वध्याहृतम् रूढमेवानुभावकं न तु यौगिकमिति च स्यात्।

## न्यायदीपः

॥ **हेतुत्वमात्रेणेति** ॥ लक्षणादेरित्यनुकर्षः ॥ **उक्तस्मृतिहेतुत्वेपीति** ॥ शाब्दानुभवानुकूलस्मृतिहेतुत्वेपि। लक्षणादेरित्यनुषङ्गः। तस्येति शेषः। उक्तरूपस्मृतिहेतुत्वस्य वृत्तित्वलक्षणात्वगौणीवृत्तित्वतन्त्रत्वे सति शाब्दानुभवानुकूलत्वे ज्ञाते तद्घटितवृत्तित्वज्ञानं वृत्तित्वे च ज्ञाते तदवच्छेदेन शाब्दानुभवानुकूलत्वज्ञानमिति प्रागुक्तान्योन्याश्रयप्रसङ्गेनादिपदोक्तेन तस्यैव वृत्तित्वे स्वज्ञाने स्वज्ञानापेक्षेत्यात्माश्रयप्रसङ्गेन चेत्यर्थः। तन्त्रमित्युपलक्षणम्। शक्तत्वमेवोक्तरूपस्मृतिहेतुत्वमिति सुवचत्वादित्यपि ध्येयम्।

का तर्हि वृत्तित्वनिरुक्तिर्निर्दोषा लक्षणादिसाधारणी। यद्वृत्तित्वमनुभावकतायां तन्त्रं स्यादित्यत आह ॥ **साक्षादिति** ॥ **परम्परेति** ॥ शक्यार्थद्वारको वा लक्ष्यार्थद्वारको वा परम्परासम्बन्धो ध्येयः। तथाच लक्षितलक्षणायां नाव्याप्तिः ॥ **शक्तिसम्बन्धित्वं** ॥ शक्तिरूपसम्बन्धवत्त्वमित्यर्थः। गङ्गायां

घोष इत्यादावव्याप्तिरित्यत आह ॥ **गङ्गेति** ॥ लक्षितलक्षणायामपि न दोष इति इत्यपि ध्येयम्।

ननु – साक्षाच्छक्तिरूपसम्बन्धवत्त्वमेवानुभावकतायां तन्त्रभूतं वृत्तित्वम्। एवं च लक्षणादेर्न तादृशवृत्तित्वप्रङ्ग इत्य आह ॥ **साक्षात्वेनेति** ॥ कुत एवं निर्बन्ध इत्यत आह ॥ **गङ्गेति** ॥ विपक्षे बाधकानि चाह ॥ **अन्यथेति** ॥ अनुव्यवसायाभावेपि स्मारकत्वमात्रकल्पन इत्यर्थः।

## तर्कताण्डवम्

**अत एव लक्षणादिस्थलेपि शक्तेरेव परम्परयापि व्यापारादेवानुव्याख्यानेलक्षणादिसाधारणतात्पर्यनिरुक्तौ वाचकत्वं हि तात्पर्यमित्युक्तम्। सुधायामपि लक्षणा-मधिकृत्यावश्यं शक्तिराश्रयणीयेत्युक्तम्।**

**केचित्तु – गङ्गापदस्याननुभावकत्वे व्युत्पत्तिसिद्धं घोष-पदेन सह सम्भूय कारित्वं न स्यात्। अनुभवे गङ्गापदस्य अव्यापारात्। स्मृतौ च पदानामन्यनैरपेक्ष्यादित्याहुः।**

**तन्न। प्रोक्षणादीनां व्रीह्यादिद्वारा याग इव गङ्गापद-स्यापि स्मृतिद्वारा गङ्गान्वितघोषानुभवे व्यापारेण सम्भूय-कारित्वसम्भवात्।**

**लाक्षणिकादेरनुभावकत्वसमर्थनम्** ॥ ६७ ॥

## न्यायदीपः

स्वोक्तनिरुक्तौ संवादमाह ॥ **अत एवेति** ॥ तस्यैव विवरणं लक्षणादिस्थल इत्यादि ॥ **अनुव्याख्यान इति** ॥ ज्ञानपादीयानुव्याख्यान इत्यर्थः।

॥ **सुधायामपीति** ॥ "पूर्वायोगे परग्रह" इत्यानुमानिकपादीयानुव्याख्यानसुधायाम्।

लक्षणाद्यमुख्यवृत्तिर्नोपेया सादृश्यसम्बन्धयोस्तद्धितोत्पत्त्यैव सर्वनिर्वाहादर्थापत्तिरेव वा गङ्गायां घेष इत्यादावस्त्वित्या शङ्क्य तत्र दूषणानुक्त्वोपसंह्रियते अवश्यं शक्तिराश्रयणीयेति। तत्र लक्षणादि-वृत्तिरवश्यमाश्रयणीयेत्युपसंहर्तव्ये शक्तिरित्युपसंहारोत्र प्रागुक्ताभिप्रायक एव। अन्यथासङ्गतः स्यादिति भावः। समाध्यन्तरं नादरणीयमिति भावेन तदनूद्य निराह ॥ **केचित्त्विति** ॥

लाक्षणिकादेरनुभावकत्वसमर्थनम् ॥ ६७ ॥

* * *

## ६८. अथ लाक्षणिकादेः शक्यसम्बन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम् ।

### तर्कताण्डवम्

**यच्चोक्तं मणौ – गङ्गाशब्देन वस्तुगत्या यद्गङ्गासम्बन्धि तीरं तदेव तीरत्वेनोपस्थाप्यते। न तु गङ्गासम्बन्धित्वेन। युगपद् वृत्तिद्वयविरोधात्। गङ्गासम्बन्धे गङ्गासम्बन्धा-भावाच्चेति।**

**तन्न। गङ्गायां घोषो मत्स्यश्चेत्यादौ युगपद्वृत्तिद्वय-दर्शनात्। छत्रिणो गच्छन्तीत्यत्र छत्र्यछत्रिसमुदायस्येवेहापि गङ्गासम्बन्धितीरस्य लक्षणयैवोपस्थितेश्च। गङ्गायास्तीरेण सह संयोगस्येव संयोगरूपेण स्वसम्बन्धेन सह समवाय-रूपसम्बन्धस्य सत्त्वाच्च ॥**

### न्यायदीपः

॥ **यच्चोक्तमिति** ॥ लक्षणावाद एव। लक्षणया तीरत्वेनोपस्थितौ तीरान्तरेऽन्वयोऽपि स्यात्।

गङ्गातीरत्वेनोपस्थितौ युगपद्वृत्तिद्वयविरोधः। गङ्गोपस्थितेः शक्तिसाध्यत्वादित्याशङ्क्योक्तमित्यर्थः ॥ **गङ्गासम्बन्धित्वेनेति** ॥ गङ्गासम्बन्धितीरत्वेनेत्यर्थः।

॥ **वृत्तिद्वयेति** ॥ शक्त्या पूरस्य लक्षणया तीरस्य चोपस्थाप्यत्वादिति भावः ॥ **गङ्गेति** ॥ पूरे शक्तस्य गङ्गापदस्य पूरसम्बन्धोपस्थापने तत्र शक्तेरभावेन पूरसम्बन्धरूपशक्यसम्बन्धद्वारक-लक्षणावृत्तेरेव वाच्यत्वात्पूरसम्बन्धे च पूरसम्बन्धाभावाच्च न तदुपस्थापकमित्यर्थः।

तन्त्रावृत्तिं मन्वानं प्रत्याह ॥ **छत्रिण इति** ॥ उक्तं च पक्षधरेपि। न च वृत्तिद्वयविरोधः गङ्गाया अपि लक्षणयैवोपस्थितेरित्यादि। गङ्गासम्बन्धे गङ्गासम्बन्धाभावाच्चेत्युक्तदोषं निराह ॥ **गङ्गाया इति** ॥

## तर्कताण्डवम्

**ननु – यथा पदहस्तिनोर्ज्ञानात्पदार्थहस्तिपयोः स्मृतिर्न पदहस्तिविषया। तथा गङ्गाज्ञानात्तीरस्मृतिर्न स्मारकगङ्गा-विषयेति कथं तत्सम्बन्धविषयेति चेन्न।**

**पदं न स्मारकमित्युक्तत्वात्। अनुभवश्च न तीरत्वेनैव। किन्तु गङ्गासम्बन्धितीरत्वेन। अन्यथा वक्त्रभिप्रेतस्य पावित्र्यादेरसिद्धेः। श्रोतुश्च गङ्गातीर एव प्रवृत्त्याद्यनुपपत्तेश्च॥**

**न च लक्षणास्थले गङ्गासम्बन्धस्य सन्निकर्षत्वाच्चक्षु-र्घटसंयोगवद्वृत्तित्वाच्च शक्तिवन्न तज्जन्यधीविषयत्वमिति वाच्यम्। रूपी घट इत्यत्र सन्निकर्षकोटेरपि समवायस्य गौणीस्थले वृत्तेरपि सादृश्यस्य च तज्जन्यधीविषयत्व-दर्शनात्। लक्षणायां चाशक्यत्वेन सजातीयगौणीरीतिरेव युक्ता। न तु विजातीयाभिधारीतिः॥**

**किञ्च सम्बन्धो न वृत्तिः। किन्तु तद्धेतुरेव। घटत्वादि-रपि घटादिशब्दवृत्तौ हेतुः।**

**एतेन शक्तिस्थले वृत्तिविषयतावच्छेदकस्य घटत्वादेरेव घटादिशब्दजन्यधीविषयत्वदर्शनादत्रापि गङ्गासम्बन्धस्य शाब्दधीविषयत्वे वृत्तिविषयतावच्छेदकत्वं वाच्यम्। तच्चायुक्तम्। इह गङ्गासम्बन्धस्यैव वृत्तित्वेन स्वस्य स्वविषयतावच्छेदकत्वायोगादिति निरस्तम्। सम्बन्धो न वृत्तिरित्युक्तत्वात्।**

## न्यायदीपः

मण्युक्तमेवाशङ्कते ।। **नन्विति** ।। गङ्गासम्बन्धित्वेनोपस्थितिर्नेत्यत्रानुभवविरोधश्चेति भावेनाह ।। **अनुभवश्चेति** ।। अन्यथेत्येतच्छ्रोतुश्चेत्यत्राप्यन्वेति। प्रकारान्तरेण गङ्गासम्बन्धित्वेनानुपस्थिति-माशङ्क्य निराह ।। **न च लक्षणास्थल इति** ।।

सन्निकर्षत्वाद्वृत्तित्वाच्चेत्युक्तहेतुद्वयस्य क्रमेण व्यभिचारमाह ।। **सन्निकर्षकोटिरिति** ।। **समवायस्येति** ।। अन्यथा रूपीति विशिष्टज्ञानं न स्यात्। सम्बन्धाविषयकत्वात्। न चैकदेशस्य भानेपि सन्निकर्षतापर्याप्त्यधिकरणस्य न तज्जन्यधीविषयत्वमिति वाच्यम्। हेत्वभावेनाप्रयोजकत्वात्।

।। **वृत्तेरपि** ।। वृत्तिरूपस्यापीत्यर्थः ।। **सादृश्यस्य चेति** ।। न केवलं समवायस्येति चार्थः। शक्तौ नोपलब्धेयं रीतिरित्यत आह ।। **लक्षणायां चेति** ।।

वृत्तित्वादिति हेतोरसिद्धिरिति भावेनाह ।। **किञ्चेति** ।। एतच्च प्रागेव वृत्तिलक्षणोक्तिप्रस्तावे व्यक्तम्। वृत्तिहेतोः शाब्दधीविषयत्वं क्वोपलब्धमित्यतो घटत्वादावुपलब्धमिति भावेनाह ।। **घटत्वादिरपीति** ।। **एतेनेति** ।। अवृत्तित्वकथनेनेत्यर्थः ।। **उक्तत्वादिति** ।। वृत्तिलक्षणोक्तिप्रस्तावे किञ्चेत्यादिपूर्वग्रन्थे चेत्यर्थः।

## तर्कताण्डवम्

**आकाशशब्दशक्तिविषयतानवच्छेदकस्यापि शब्द-समवायित्वस्येवेहापि वृत्तिविषयतानवच्छेदकस्यापि**

गङ्गासम्बन्धस्य शाब्दधीविषयत्वोपपत्तेश्च।

किञ्च घटत्वादेर्घटादिपदजन्यज्ञाने प्रकारत्वानुभवाद्धि घटादिपदशक्तिविषयतावच्छेदकता कल्प्यते। कल्पकान्तराभावात्। इहापि गङ्गापदजन्यज्ञाने गङ्गासम्बन्धित्वस्य प्रकारत्वं किं नानुभवसि। येन तस्य गङ्गापदवृत्तिविषयतावच्छेदकतां न कल्पयसि। तथात्वे तीरं गाङ्गमन्यद्वेति कदाचित् सन्देहादि स्यात्।

न च स्वस्य स्वविषयतावच्छेदकत्वायोगः। तीरगतायाः पदनिष्ठवृत्तिविषयताया अवच्छेद्यत्वात्। तीरगतस्य गङ्गासंयोगस्य चावच्छेदकत्वात् ॥

मास्तु वावच्छेदकत्वम्। तथापि तीरधीरूपफलबलेन लक्षणावद्गङ्गासम्बन्धधीरूपफलबलेन गङ्गाशब्दतीरयोः सम्बन्धघटकसम्बन्धत्वस्यैव लाक्षणिकशब्दजन्यधीविषयत्वे तन्त्रत्वं कल्प्यताम्।

यद्वा क्षीरमाधुर्ये क्षीरसम्बन्धमनन्तर्भाव्यैव माधुर्यावान्तरविशेष इव गङ्गातीरेपि गङ्गासम्बन्धमनन्तर्भाव्यैव गङ्गासम्बन्धव्याप्यसंस्थानविशेषो वातिपूततीरत्वादिर्वा तीरान्तरव्यावृत्तोऽसाधारणधर्मो येनयेन पुंसा प्रयोगेऽनुभूस्तस्यतस्य सस वृत्तितज्जन्यज्ञानयोर्विषयतावच्छेदक इति न कोपि दोषः।

## न्यायदीपः

ननु—न्यायमते आकाशशब्दस्याकाशे शक्तेरेवाभावेन वा ततोऽन्यस्याकाशरूपधर्मस्यभावेन

वास्त्वगत्यात्र भानमिह तु नैवमित्यतोऽवच्छेदकत्वमेव सोपपत्तिकमाह ।। **किञ्चेति ।। तथात्व इति ।।** तीरस्य गङ्गासम्बन्धित्वेनाननुभवे सतीत्यर्थः। स्वस्य स्वविषयतावच्छेदकत्वायोगादिति प्रागुक्तं निराह **।। न चेति ।।**

एवं सम्बन्धस्याभ्युपेत्यावच्छेदकत्वं शाब्दधीविषयत्वमुपपादितमिदानीमवच्छेदकत्वाभावेऽप्यन्यदेव शाब्दधीविषयत्वनियामकमस्त्वित्याह ।। **मास्त्वित्यादिना** ।। गङ्गाशब्दात्तीरधीरूपफलबलेन गङ्गाशब्दे लक्षणावृत्तिकल्पनवदित्यर्थः।

**।। गङ्गासम्बन्धधीरूपेति ।।** तद्धियः प्रागेवोपपादितत्वादिति भावः **।। सम्बन्धेति ।।** गङ्गाशब्दतीरयोः परम्परारूपो हि सम्बन्धः शब्दस्य पूरेण शक्तिरूपः पूरस्य तीरेण संयोगः। तत्र गङ्गातीरयोः संयोगस्तदेकदेशभूतत्वात्तद्घटको भवतीति गङ्गाशब्दतीरयोः सम्बन्धघटकसम्बन्धत्वस्यैवेत्युक्तम्।

ननु सम्बन्धस्यानवच्छेदकत्वादन्यस्यावच्छेदकस्याभावात्कथं वृत्तिविषयताग्रह इत्यत आह **।। यद्वेति ।। न कोपीति ।।** तीरान्तरेन्वयप्रसङ्गदोषो वा अवच्छेदकाभावदोषो वा, सम्बन्धस्यावच्छेदकत्वकल्पनादोषो वा नास्तीत्यर्थः।

## तर्कताण्डवम्

**यद्वा लक्षकपदेन योयोऽर्थो भासते तावत्पर्यन्तः परम्परा सम्बन्धो लक्षणावृत्तिः। अत एव लक्षितलक्षणापि लक्षणैव।**

**एवं च रूपसमवायी घट इत्यत्र यथा घटरूपसमवायैः सह संयोगसमवायस्वरूपाणि सन्निकर्षास्तथा तीरेण सह प्रवाहसम्बन्धः सम्बन्धेन सह सम्बन्धसम्बन्धो वृत्तिः। तद्विषयता च तीरे तीरत्वेनेव सम्बन्धे सम्बन्धत्वेनावच्छिद्यते।**

**न चानवस्था। तीरसम्बन्धस्येव सम्बन्धसम्बन्धस्य अप्रतीत्या तस्य स्वरूपसत एव वृत्तित्वात्। नहि रूपसमवायी**

**घट इत्यत्र समवायस्वरूपसबन्धोपि सबन्धान्तरेण सम्बद्धो भासते।**

**तस्माद्वृत्तिद्वयविरोधः, सम्बन्धे सम्बन्धान्तराभावः, स्मारकस्य स्मार्यकोट्यप्रवेशनियमः, वृत्तेर्वृत्तिजन्यज्ञाना-विषयत्वनियमः, वृत्तेरेव वृत्तिविषयत्वावच्छेदकत्वासम्भव, इति बाधकपञ्चकास्योद्धृतत्वाद्गङ्गाशब्दो गङ्गातीरत्वेनैव तीरार्थोपस्थापक इत्यस्य पञ्चधोपपादितत्वाच्च न कश्चिद्दोषः।**

**अत एव–**

**"स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि।**
**सादृश्ये चैकवाक् सम्यक् सावकाशा यथेष्टतः"**

**इत्यनुव्याख्याने लक्षणानिमित्तस्य स्वातन्त्र्यादेः सम्बन्धस्य गौणीनिमित्तस्य सादृश्यस्य चाभेदश्रुत्यर्थतोक्ता।**

## न्यायदीपः

ननु–वृत्त्यविषयस्य सम्बन्धस्य संस्थानविशेषादेर्वा कथं शाब्दधीविषयतेत्यतो वृत्तिविषयत्वमपि तस्य तदनुगुणं लक्षणवृत्तिलक्षणोक्तिपूर्वमाह ॥ **यद्वेति** ॥ **अत एवेति** ॥ प्रतीतिपर्यन्तपरम्परासम्बन्धस्य लक्षणावृत्तित्वादेवेत्यर्थः। प्राग्विरुद्धा राजान इदानीमेकीभूता इत्यादिर्लक्षितलक्षणा। अन्यथा सा पृथग्वृत्तिः स्यादिति भावः।

अस्त्वेवं तावता गङ्गासम्बन्धस्य कथं वृत्तिविषयतेत्यत आह ॥ **एवं चेति** ॥ **संयोगेति** ॥ यथाक्रमं घटेन संयोगो रूपेण समवायः, समवायेन विशेषणतादिरूपस्वरूपसम्बन्धस्य इत्यर्थः ॥ **सन्निकर्षा इति** ॥ चक्षुरादेरिति योज्यम्। तथेत्यनन्तरं शब्दस्येति शेषः।

**॥ प्रवाहसम्बन्ध इति ॥** वृत्तिरित्यन्वयः **॥ सम्बन्धेनेति ॥** संयोगादिरूपप्रवाहतीरादिसम्बन्धेन सह सम्बन्धसम्बन्धः संयोगादिनिरूपितसमवायादिरित्यर्थः **॥ न चानवस्थेति ॥** सम्बन्धसम्बन्धेनापि शब्दस्य सम्बन्धसम्बन्धसम्बन्धो वृत्तिरिति वाच्यम्। तत्राप्येवमित्यनवस्थेत्यर्थः।

**॥ न कश्चिद्दोष इति ॥** अतिप्रसङ्गादिति वृत्त्यविषयस्य कथं भानमिति दोषश्च नेत्यर्थः। पूर्वोक्तवृत्तिहेतोः शाब्दधीविषयत्वे ज्ञापकमाह **॥ अत एवेति ॥**

**तर्कताण्डवम्**

**एतेनाखण्डे ब्रह्मणि वेदान्तानां लक्षणेत्यद्वैति मतं निरस्तम्। लक्षकस्य शक्यसम्बन्धित्वेनैवोपस्थापकत्वात्।**

**लाक्षणिकादेः शक्यसम्बन्धित्वादिनैव लक्ष्याद्युपस्थापकत्वसमर्थनम् ॥ ६८॥**

**न्यायदीपः**

ननु वेदानां गुणान्विते भगवति शक्तिरित्युपपादनप्रस्तावे लक्षणादिवृत्तेर्लक्षणाद्युक्तेरुपयोगाप्रतीतेराह **॥ एतेनेति ॥** उक्तं चेक्षतिनये–

"अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन"।

इत्येतद्व्याख्यावसरे सुधायां न हि तीरं स्वरूपतो गङ्गासम्बन्धित्वेन च प्रमाणतोऽप्रतिपन्नो गङ्गाशब्देन तज्ज्ञाप्यत इत्यादीति भावः।

लाक्षणिकादेः शक्यसम्बन्धित्वादिनैव
लक्ष्याद्युपस्थापकत्वसमर्थनम् ॥ ६८॥

***

## ६९. अथ स्वमते गौण्या लक्षणातो भेदप्रकारः।

### तर्कताण्डवम्

**अथ परशब्दस्य परत्र वृत्तित्वाविशेषात्कथं गौणी लक्षणातो भिन्ना। सादृश्यस्यापि सबन्धत्वात्। न हि संयोगादिरेव सम्बन्धो लक्षणाबीजम्। किं तु विशिष्ट-धीनिर्वाहकं सम्बन्धमात्रम्। अस्ति चेहापीदमनेन सदृशमिति विशिष्टधीरितिचेन्मैवम्।**

**यथाहीदमनेन संयुक्तमिति प्रतीत्या संयोगो विशेषण-विशेष्ययोः सम्बन्धतया न सिध्यति, दण्डीत्यत्र दण्डस्येवेह संयोगस्यैव विशेषणत्वात्, किन्तु संयोगस्य संयोगिना सह समवाय एव सिध्यति, तथोक्तप्रतीत्या सादृश्यस्य धर्म्या-दिना सहान्यः सम्बन्धः सिध्यतु। सादृश्यस्य सम्बन्धत्वे किमायातम्।**

### न्यायदीपः

यत्तु सुधायां कश्चिदाह – गौणी नाम वृत्तिर्नास्तीत्यादिना लक्षणागौण्योरभेदमाशङ्क्य भेदसमर्थनं कृतं तद्विवृण्वानः प्रागुक्तामुख्यवृत्तिभेदं तावदाक्षिपति ।। **अथेति** ।। **परशब्दस्येति** ।। अन्यवाचकस्येत्यर्थः। सम्बन्धसादृश्यरूपनिमित्तभेदाद्भेद इत्यत आह ।। **सादृश्यस्यापीति** ।।

संयोगसमवायादिरूपत्वाभावात्कथं सम्बन्धत्वमित्यत आह ।। **न हीति** ।। गङ्गायां घोष इत्यत्र संयोगः, यत्र गुणादिना गुण्यादिर्लक्ष्यते तत्र समवायः, विषयादिना विषयादिर्लक्ष्यते तत्र स्वरूपसम्बन्ध इत्यननुगमापत्तेरिति भावः।

।। **यथेति** ।। तथेत्यनेनान्वयः ।। **विशेषणविशेष्ययोरिति** ।। संयोगसंयोगिनोरित्यर्थः

।। **सिध्यतीति** ।। सम्बन्धतयेत्यनुषङ्गः ।। **उक्तप्रतीत्येति** ।। इदमनेन सदृशमिति प्रतीत्येत्यर्थः ।

## तर्कताण्डवम्

**न हि तन्निरूप्यत्वमेव तत्सम्बन्धत्वम्। दैर्ध्यादेरपि ह्रस्वादिसम्बन्धत्वापातात्। किं तु तन्निरूप्यत्वव्याप्यं तत् ।।**

**यदितु सम्बन्धान्तरं विना संयोगादिनैव चैत्रो दण्डी रूपी ज्ञातश्चेति धीवत्सादृश्येनैव सिंहवान्देवदत्त इति धीः स्यात् तदा सादृश्यस्य सम्बन्धत्वं सिध्येदपि। सा तु नास्ति ।।**

## न्यायदीपः

ननु – सादृश्यस्येदमनेनेत्युभयनिरूप्यत्वादुभयसम्बन्धत्वमित्यत आह ।। **न हीति** ।। किन्नाम सम्बन्धत्वमिति प्रश्नोत्तरमाह ।। **निरूप्यत्वव्याप्यमिति** ।।

ननु – सादृश्यस्य सम्बन्धत्वेन धीप्रकारः इदमनेन सदृशमित्युक्तरूपे प्रतीत्याकारव्यतिरेकेण नोपदर्शयितुं शक्य इतीयमेव सम्बन्धत्वप्रतीतिरित्यत आह ।। **यदि त्विति** ।। **संयोगादिनैवेति** ।। संयोगसमवायरूपसम्बन्धैर्यथाक्रमं दण्डीचैत्रः रूपीघटः ज्ञातो घटः इति धीवदित्यर्थः। सिध्येदपीत्यनास्थोक्तिः। तत्रापि गोमानित्यादिवत् सम्बन्धान्तरस्यापि सम्भवादिति भावः।

अस्तु तथैव धिया सम्बन्धत्वसिद्धिरित्यत आह ।। **सा त्विति** ।। तथाच न सम्बन्धत्वं सादृश्यस्येतिभिन्ननिमित्तत्वाल्लक्षणागौण्योर्भेद इति भावः।

## तर्कताण्डवम्

**ननु – सादृश्यमात्रं निमित्तं चेदतिप्रसङ्गः। स्वसम्बन्धिचेदावश्यकत्वात्सबन्ध एव निमित्तमस्त्विति चेन्न। सम्बन्धे स्वसंवन्धित्वस्यैव सादृश्येपि स्वसम्बन्धित्वस्या पेक्षायामपि**

**मुख्यार्थसम्बन्धस्यानेन हेतुत्वासिद्धेः। अपि चेमौ सदृशावेव न तु सम्बद्धाविति धीर्न स्यात्।**

## न्यायदीपः

प्रकारान्तरेण गौण्या अपि सम्बन्धनिमित्तकत्वमाशङ्कते ॥ **नन्विति** ॥ **अतिप्रसङ्ग इति** ॥ यत्किञ्चित्सादृश्यस्य सर्वत्र सम्भावत्सर्वस्य शब्दस्य गौण्या सर्वार्थप्रत्यायकत्वप्रसङ्ग इत्यर्थः ॥ **स्वसम्बन्धीति** ॥ गौणशब्दवाच्यार्थसम्बन्धिभूतं सादृश्यं निमित्तमित्यर्थः।

॥ **सम्बन्ध एवेति** ॥ तथाचैकनिमित्तकत्वान्न लक्षणागौण्योर्भेद इति भावः ॥ **सादृश्येति** ॥ प्रसङ्गभञ्जकतयोपात्तो मुख्यार्थसम्बन्धो न वृत्तौ निमित्तं भवितुमर्हति। किन्तु सादृश्यमेवातो भिन्ननिमित्तकत्वाल्लक्षणागौण्योर्भेद इति भावेन सदृष्टान्तमाह ॥ **सम्बन्धे सम्बन्धित्वस्येवेति** ॥

यथा लक्षणावृत्तौ न सम्बन्धमात्रं निमित्तम् अतिप्रसङ्गात् किन्तु मुख्यार्थसम्बन्धिसम्बन्धित्वम् तथापि तत्र मुख्यार्थसम्बन्धित्वं सम्बन्धे विद्यमानं लक्षणावृत्तौ न निमित्तं तथेत्यर्थः ॥ **अनेनेति** ॥ अतिप्रसङ्गभञ्जनार्थमुपात्तेन मुख्यार्थसम्बन्धित्वरूपसादृश्यविशेषणेनेत्यर्थः। सादृश्यस्य सम्बन्धत्वे बाधकं चाह ॥ **अपिचेति** ॥

## तर्कताण्डवम्

**किञ्चेमौ सम्बद्धौ सदृशौ चेति प्रतीत्योर्विषयकृत-वैलक्षण्यं सर्वसाक्षिकम्। किञ्चैवं यदि सादृश्यं सम्बन्ध-विशेषस्तर्हि सम्बन्धोऽपि एकदेशस्थत्वात् सादृश्यविशेषः किं न स्यात्। नैवं लौकिकीधीरिति चेत् समं प्रकृतेऽपि।**

**तदुक्तं सुधायाम्—तत्किं सादृश्यं सम्बन्धत्वेन प्रतियन्ति लौकिका इति ॥**

**तस्माद्यत्र मुख्यार्थसम्बन्धो निमित्तं सा लक्षणा। यत्र**

**तु सादृश्यं निमित्तं सा गौणीति।**

**स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९॥**

## न्यायदीपः

ननु – सम्बद्धाविति धीः संयोगादिरूपसम्बन्धविशेषाभावविषया। न तु सम्बन्धसामान्याभावविषया। येन सादृश्यं न सम्बन्धः स्यादिति चेन्न। सामान्यविशेषविषयत्वकल्पकाभावात्। सादृश्यस्य सम्बन्धत्वधीरेव कल्पिकेति चेन्न। तदभावस्योक्तत्वात्। प्रत्युतासम्बन्धत्वधीरेवानुभवसिद्धेत्याह ॥ **किं चेति** ॥ सुधोक्तं बाधकं चाह ॥ **किञ्चैवमिति** ॥ तस्यैवार्थः सादृश्यमित्यादि।

॥ **एकदेशेति** ॥ सम्बद्धौ ह्येकदेशे वर्तेते इति एकप्रदेशविशेषे वर्तमानत्वं द्वयोः सम्बद्धयोरन्यतरस्येवान्यतरस्याप्यस्तीति सम्बन्धोपि सादृश्यविशेषः स्यात्। तथाच गौणीवृत्तिरेवास्ति न लक्षणेति वैपरीत्यमपि स्यादिति भावः।

॥ **प्रकृतेपीति** ॥ सादृश्यस्यापि सम्बन्धत्वधीर्लौकिकी नास्तीत्यर्थः ॥ **तदुक्तमिति** ॥ आनुमानिकपादे वृत्तिलक्षणोक्तिप्रस्तावे। तत्किमिति काकुः। प्रतियन्ति जानन्तीत्यर्थः। न प्रतियन्तीति यावत्।

अनुव्याख्यानोक्तदिशा निमित्तभेदेनोपपादितं वृत्तिभेदमुपसंहरति ॥ **तस्मादिति** ॥

स्वमते गौण्या लक्षणातो भेदप्रकारः ॥ ६९ ॥

***

## ७०. अथ परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः।

## तर्कताण्डवम्

**अन्येतु सिंहनिष्ठशौर्यादिगुणा लक्ष्यमाणाः सिंहशब्दस्य**

**माणवके वृत्तौ निमित्तमित्याहुः। तन्न। व्यधिकरणानां गुणानां माणवके वृत्तौ निमित्तत्वायोगात्। लक्ष्यमाण-गुणसादृश्या द्गुणान्तरं ततो गुणी लक्ष्यत इति गौणी लक्षितलक्षणैवेति तु नानुभवानुसारि। किञ्चावश्यकत्वात् लाघवाच्च सिंहेन सह माणवके यत्सादृश्यं तदेव निमित्तं युक्तम्।**

## न्यायदीपः

परोक्तभेदप्रकारमनूद्य सुधोक्तदिशा निराह ॥ **अन्येत्वित्यादिना** ॥ **लक्ष्यमाणेति** ॥ सिंहो माणवक इत्यादौ।

"लक्ष्यमाणगुणैर्योगाद्वृत्तिरिष्टातु गौणता"

इति काव्यप्रकाशिकाद्युक्तदिशा सिंहशब्देन लक्ष्यमाणसिंहनिष्ठगुणानां माणवके सिंहशब्दवृत्तौ निमित्तत्वं न युज्यते। अन्यनिष्ठगुणानामन्यत्र शब्दवृत्तौ निमित्तत्वं न युज्यते। अन्यनिष्ठगुणानामन्यत्र शब्दवृत्तौ निमित्तत्वेऽतिप्रसङ्गात्। सिंहनिष्ठगुणसदृशाः क्रौर्यादयो माणवकनिष्ठा लक्षणीयाः। तैश्च गुणी माणवको लक्ष्यत इति लक्षितलक्षणैव। न तु शुद्धलक्षणेति। लक्षणागौण्योरयमेव भेद इत्यर्थः। अनुभवे विवादिनं प्रत्याह ॥ **किञ्चेति** ॥ **आवश्यकत्वादिति** ॥ गुणान्तरलक्षणार्थं मुख्यार्थनिष्ठगुणसादृश्यस्य त्वयाप्युक्तत्वादिति भावः।

## तर्कताण्डवम्

**केचित्तु सादृश्यस्य सम्बन्धविशेषत्वेपि यत्र सम्बन्ध-त्वेन हेतुता सा लक्षणा, यत्र तु सादृश्यत्वेन हेतुता सा गौणीत्याहुः।**

**तन्न। सादृश्यं सम्बन्धविशेषो नेत्युक्तत्वेन क्लिष्ट-**

कल्पनायोगात्। यत्र संयोगत्वादिना हेतुता तस्या वृत्त्यन्तर-त्वापाताच्च।

इतरे तु यत्रोपस्थापकस्यापि वाक्यार्थेऽन्वयः सा गौणी। तत्र सादृश्यस्यापि प्रतीतेः। यत्र तु न तस्य वाक्यार्थेन्वयः सा लक्षणा। तत्र सम्बन्धस्याप्रतीते रित्याहुः। तन्न। लक्षणायामपि सम्बन्धप्रतीतेरुक्तत्वात्।

अन्ये तु यत्र धर्मे तात्पर्यं सा गौणी। सिंहो देवदत्त इत्यत्र धर्मिणो देवदत्तपदेनैवोक्तेः। यत्र तु धर्मिमात्रे तात्पर्यं सा लक्षणा। तत्र तीरस्य पदान्तरेणानुक्तेरित्याहुः। तन्न। सिंहमानयेति गौण्यामपि धर्मिवाचिपदाभावात्।

अपरे तु सामानाधिकरण्ये गौणी, वैयधिकरण्ये लक्षणेत्याहुः।

तन्न। अग्नेरध्यनं गङ्गा घोषवतीत्यपि दर्शनात्।

**परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः ॥७०॥**

## न्यायदीपः

लक्षणागौण्योः प्रकारान्तरेण भेदमनूद्य निराह ॥ **केचित्त्वित्यादिना** ॥ हेतुतावच्छेदकभेदाद्भेदे अतिप्रसङ्गमाह ॥ **यत्र संयोगत्वादिनेति** ॥

॥ **उपस्थापकस्यापीति** ॥ सादृश्यसम्बन्धयोरमुख्यरूपार्थान्तरोपस्थापकयोः शाब्दबोधे भानाभाननिमित्तवाक्यार्थान्वयानन्वयाभ्यां गौणलक्षणयोर्भेदमाहुरित्यर्थः।

॥ **उक्तत्वादिति** ॥ शक्यसम्बन्धित्वेनैव लक्ष्याद्यर्थकत्वसमर्थनवादे उक्तत्वादित्यर्थः। लक्षणावृत्तिलक्षणं गौण्यामप्यस्तीत्याह ॥ **सिंहमानयेति** ॥ सिंहसदृशमाणवकमानयेत्यर्थके वाक्य

इत्यर्थः ॥ **सामानाधिकरण्य इति** ॥ पदस्य पदान्तरेण सामानाधिकरण्ये सतीत्यर्थः। एवमग्रेपि। सिंहश्चैत्र इत्यादावेकविभक्तित्वेन सामानाधिकरण्यं, गङ्गायां घोष इत्यादौ भिन्नविभक्तित्वेन वैयधिकरण्यमिति भावः। माणवकस्याध्ययनमितिवाक्ये माणवके पावित्र्यादिसूचनायाग्निसादृश्यं वक्तुमग्नेरध्ययनमित्यादिवाक्यप्रयोगदर्शनादित्यर्थः।

परोक्तस्य गौण्या लक्षणातो भेदस्य भङ्गः ॥ ७० ॥

***

## ७१. अथ रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः।

### तर्कताण्डवम्

**अत्र मुख्यवृत्तित्रये पङ्कजादिशब्देषु रूढेर्योगाच्च योगरूढिः प्रबला। रूढार्थस्य पद्मशब्देनापि, यौगिकार्थस्य च कर्दमजातशब्देनापि, प्रतीतिसम्भवेनाप्तप्रयुक्तानामवयवानां समुदायस्य च सार्थक्यायोभयानुग्रहकस्यौचित्यात्।**

**अत एव लोके निरुपपदेन पङ्कजशब्देनोत्सर्गतो जलकमलस्यैव धीः। न तु स्थलकमलस्य। न वा कुमुदस्य। एवं वेदेपि ब्रह्मादिशब्दैर्न रूढिमात्राज्जीवादेर्धीः। नारायणादिशब्दैरपि न योगमात्रादबयनवस्तुमात्रस्य।**

### न्यायदीपः

एवमस्य शब्दस्य वृत्तिस्त्रेधेत्यादिना प्रकरणदशकेन विभागलक्षणपरीक्षाभिर्वृत्तिस्वरूपाणि निर्धार्येदानीं बलाबलं निरूपयितुं मुख्यवृत्तीनां तावत्तदाह ॥ **अत्रेति** ॥ प्राङ्निरूपितमुख्यामुख्यवृत्तिमध्ये

यन्मुख्यवृत्तित्रयं तस्मिन्नित्यर्थः। पङ्कजमानयेत्यादौ रूढितः स्थलकमलस्य योगात्कुमुदादेर्योगरूढितो जलकमलस्य ग्रहणप्रसक्तौ कस्य ग्रहणमित्यत आह ॥ **रूढेर्योगाच्चेति** ॥

प्राबल्ये हेतुमाह ॥ **रूढार्थस्येति** ॥ **वेदेपीति** ॥ "तद्विजिज्ञासस्व, तद् ब्रह्म" इत्यादौ, श्रुतब्रह्मशब्दादेः "अथ कस्मादुच्यते ब्रह्मेति। बृहन्तो ह्यस्मिन्गुणाः" इत्यादिश्रुत्या, "तदेव ब्रह्म परमं" इत्यादिश्रुत्या च योगरूढैर्ब्रह्मादिशब्दैरित्यर्थः। व्यक्तमेतज्जन्माधिकरणचन्द्रिकायाम्।

आदिपदे "नात्मा वारे द्रष्टव्यः" इत्यादावात्मादिशब्दग्रहः। तथान्तराकाशप्राणाद्यधिकरणोदाहरणभूतेन्द्रमित्राग्न्याकाशप्राणादिशब्दानां च ग्रहः। तेषामपि देवादौ रूढिमात्राद्विष्णौ योगरूढिमत्त्वात्। रूढितो योगरूढेः प्राबल्ये उदाहरणमुक्त्वा योगात्तत्प्राबल्ये आह ॥ **नारायणेति** ॥

"अपो नारा इति प्रोक्ता आपौ वै नरसूनवः।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः"

इति स्मृत्या "विष्णुर्नारायणः कृष्ण" इत्यभिधानेनच विष्णौ योगरूढेर्नारायणादिशब्दैः "नारायणं महाज्ञेयं" इत्यादौ जलाश्रयमात्रवस्तुनो न प्रतीतिः किन्तु विष्णोरेवेत्यर्थः।

## तर्कताण्डवम्

**रूढियोगयोस्तु योगाद्रूढिः प्रबलेति तया योगस्य अपहारः। यथा वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्दो सङ्करजातौ रूढ्या रथकर्तरि।**

**यथा वा मण्डपं पश्येत्यत्र गृहविशेषे रूढ्या मण्डपानकर्तरि योगस्य।**

## न्यायदीपः

एवं रूढेर्योगाच्च योगरूढेर्बलवत्त्वमुपपाद्य योगाद्रूढेस्तदाह ॥ **रूढियोगयोस्त्विति** ॥ **वर्षासु** ॥ वर्षर्तौ। शब्दस्वाभाव्यात् स्त्रीलिङ्गं बहुवचनं च ॥ **सङ्करजाताविति** ॥

"शूद्रायां करभो वैश्यान्महिष्यो विट्स्त्रियां नृपात्।
रथकारस्तु माहिष्यात्करभ्यां यस्य सम्भवः"

इत्युक्तसङ्करजाताविन्यर्थः ॥ **योगस्येति** ॥ अपहार इत्यनुषङ्गः। एवमग्रेपि। अत एव षष्ठे वचनाद् रथकारस्याधानमित्याद्यपादीयोपान्त्याधिकरणे रथकर्तृत्वयोगेन त्रैवर्णिकपरत्वं रथकारशब्दस्याशङ्क्य रूढ्या सङ्करजातिपरत्वमुक्तमिति भावः ॥ **मण्डपानेति** ॥ मण्डं घनीभूतदधिखण्डविशेषं पिबतीति व्युत्पत्तेरिति भावः।

## तर्कताण्डवम्

**ननु–**

**रूढेः प्राबल्यं न तावत्समुदायात्परया विभक्त्या स्वार्थस्य कर्मत्वादेः समुदायार्थे बोधनादवयवार्थे कर्मत्वादेः समुदायार्थे बोधनादवयवार्थे त्वबोधनादिति युक्तम्। यौगि-कार्थे प्रकरणादिसत्त्वेपि तया तत्र तदबोधनप्रसङ्गात्। रूढावखण्डसमुदायादिव योगेपि सखण्डसमुदायात्परत्वस्य सत्त्वाच्च।**

## न्यायदीपः

योगाद्रूढेः प्राबल्यमुपजीव्यत्वादिनेत्युपपादयिष्यन् प्रकारान्तरेण प्रसक्तप्राबल्येहेतुचतुष्टयं पूर्वपक्षिमुखेनानूद्य निराचष्टे ॥ **नन्वित्यादिना उच्यत** ॥ इति पर्यन्तेन ॥ **यौगिकार्थेति** ॥ यौगिकार्थ-ग्राहकप्रकरणलिङ्गाप्तवाक्यादिसत्त्वेपि तया समुदायात्परया विभक्त्या कर्मत्वकर्तृत्वाद्यबोध-प्रसङ्गात्। अवयवार्थे तदबोधनादिति त्वयोक्तत्वात्। न चेष्टापत्तिः। अनुभवविरोधादिति भावः।

यदि समुदायात्परविभक्त्या स्वार्थभूतकर्मत्वादेर्बोधनमवयवार्थेन स्यात् तर्हि केवलयौगिकस्थले प्रोक्षणीरासादयेत्यादावपि विभक्त्यर्थकर्मत्वादेरन्वयो न स्यात्। तत्रापि विभक्तेः समुदायात्परत्वात्। ननु चाखण्डसमुदायात्परविभक्तिरेवावयवार्थे स्वार्थं न बोधयति रथकारमानयेत्यादौ प्रोक्षणीरित्यादि-

सखण्डसमुदायात्परा तु बोधयत्येवेति चेन्न। तत्र प्रकरणादिनाऽवयवार्थविवक्षायामप्यबोधनापातादित्युक्तत्वात्।

## तर्कताण्डवम्

**अन्यथा पाचकमानय पङ्कजमानयेत्यादौ कर्मत्वादेः यौगिकार्थान्वयो न स्यात्।**

नापि – रूढौ शाब्दानुभवकारणीभूता वर्णसमुदायगोचरा स्मृतिरेकेति शीघ्रा। एकशक्त्याधारवर्णेष्वेकैव स्मृतिरिति फलबलेन कल्पनात्; योगे तु अनेकशक्त्याधारा अनेकावयवगोचरा तु नानेति विलम्बितेति रूढेः प्राबल्यमिति युक्तम्। समुदायगोचराया एव स्मृतेरवयवगोचरत्वात्।

अत एव शाब्दानुभवेतिकर्तव्यताभूता समुदायनिष्ठैकशक्तिस्मृतिः शीघ्रा। अवयवनिष्ठनानाशक्तिस्मृतिस्तु विलम्बितेति रूढेः प्राबल्यमिति निरस्तम्। समुदायशक्तिस्मारकवर्णसमुदायगोचराया एवोपस्थितेरवयवविषयतया तज्जन्याया अवयवनिष्ठनानाशक्तिसमूहालम्बनस्मृतेः विलम्बायोगात्। प्रत्युतसमुदायज्ञानस्यावयवज्ञानपूर्वकत्वा दवयवैरेव पूर्वं शीघ्रं स्वशक्तिस्मारणं युक्तम्।

अत एवैकशक्तिस्मृतिजन्या समुदायार्थस्मृतिरेकेति शीघ्रा। अनेकशक्तिस्मृतिजन्यावयवार्थस्मृतिर्नानेति विलम्बितेति परास्तम्। पदं न स्मारकमित्युक्तत्वात्। स्मारकत्वेप्यवयवनिष्ठशक्तिस्मृतावविलम्बस्योक्तत्वाच्च।

तस्माच्चतुर्धापि न रूढेर्योगात्प्राबल्यमिति।

## न्यायदीपः

विपक्षे बाधकं चाह ॥ **अन्यथेति** ॥ सखण्डसमुदायात्परयापि विभक्त्या अवयवार्थे स्वार्थाबोध इत्यर्थः ॥ **नापीति** ॥ युक्तमित्यन्वयः। स्मृतिरेकेत्येतद्व्यनक्ति ॥ **एकशक्तीति** ॥ **फलेति** ॥ शाब्दानुभवरूपफलबलेनेत्यर्थः।

॥ **समुदायगोचराया एवेति** ॥ तथाचैकत्वात्स्मृतेः कथं शीघ्रत्वविलम्बितत्ववैषम्यमिति भावः।

अत एवेत्युक्तं व्यनक्ति ॥ **समुदायेति** ॥ **तज्जन्याया इति** ॥ अवयवविषयोपस्थितिजन्याया इत्यर्थः ॥ **अवयवैरिति** ॥ स्मृतिविषयभूतैरित्यर्थः।

॥ **चतुर्धापीति** ॥ विभक्त्यर्थस्य समुदायार्थबोधनेन, वर्णसमुदायगोचरस्मृतेः शीघ्रत्वेन, शक्तिस्मृतेः शीघ्रत्वेन, पदार्थस्मृतेः शीघ्रत्वेन, वा चतुर्धापीत्यर्थः।

## तर्कताण्डवम्

**उच्यते - अवयवे रूढिं विना समुदाये योगासम्भवेनोपजीव्य-त्वाद् रूढेः प्राबल्यं, शीघ्रत्वाच्च। तथाच रूढार्थानुभवो वर्णानुभवश्च वर्णश्रवणमात्राद्भवतीति शीघ्रः।**

**किञ्चाखण्डत्वेन परस्परान्वयनिरपेक्षस्य तस्य विभ-क्त्यर्थान्वयः क्रियान्वयोपि शीघ्रः। यौगिकार्थानुभवस्तूप-पदधातुप्रत्ययविभागज्ञानपूर्वक इति विलम्बितः। तेषां परस्परान्वयज्ञानपूर्वकः क्रियान्वयोपि विलम्बितः।**

**एवं च शीघ्रया रूढ्या प्रतिबन्धाद्वा शीघ्रोपस्थितेन रूढार्थेनान्वितस्य पदान्तरस्य यौगिकार्थे नैराकाङ्क्ष्या-द्वानन्वयः ॥**

**यद्यपि समुदायोपस्थितिरेवावयवगोचरा तथापि सा वर्णत्वरेफत्वादिनैव तद्गोचरा। सा च न यौगिकार्थानुभवहेतुः। या तु यौगिकार्थानुभवहेतुरूपपदत्वादिनोपस्थितिः सा विलम्बिता। पङ्कजादौ त्वविरोधादवयवार्थेपि प्रयोगप्राचुर्येणप्रतिबध्यत्वे तन्त्रस्य तदप्राचुर्यस्याभावाच्च न रूढ्या तदपहारः।**

## न्यायदीपः

"रूढिमेव समाश्रित्य विभज्यार्थान्यथाक्रमम्।
विशेषगुणपूर्त्यर्थं विष्णौ योगार्थमानयेत्"।

इति ऋग्भाष्योक्तिं हृदि कृत्वाह ॥ **अवयवे रूढिं विनेति** ॥ अवयवस्यापि यौगिकत्वे तदवयवस्याप्येवमित्यनवस्थापातेन पूर्वपूर्वयोगासिद्ध्योत्तरोत्तरयोगासिद्धेर्मूलक्षतेः। "अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पन" इति कर्मनिर्णयोक्तेरिति भावः। वाक्ये पदात्पदार्थस्मृतेरनभ्युपगमाद्रूढार्थानुभव इत्युक्तम्।

॥ **परस्परेति** ॥ अवयवार्थानामन्योन्यान्वयनिरपेक्षस्येत्यर्थः ॥ **तस्येति** ॥ रूढार्थस्येत्यर्थः ॥ **उपपदेति** ॥ कुम्भकारेत्यादौ कुम्भाद्युपपदं पाचकेत्यादौ पचिधात्वर्थाकप्रत्ययविभागः, यद्वा पङ्कजशब्दादौ पङ्कजाद्युपपदजनिधातुडप्रत्ययानां विभागः तज्ज्ञानपूर्वक इत्यर्थः।

ननु - उपपदादिज्ञानपूर्वकत्वेन योगे विलम्बोक्तिरयुक्ता समुदायोपस्थितिरेवावयवोपस्थितिरित्युक्तत्वादिति प्रागुक्तचोद्यमनूद्य निराह ॥ **यद्यपीति** ॥

नन्वेवं योगरूढिस्थलेपि रूढ्या योगापहारः स्यात्। तथाच पङ्कजपदाज्जलकमलधीर्न स्यात्। इत्यत आह ॥ **पङ्कजादौ त्विति** ॥ **तदप्राचुर्यस्येति** ॥ प्रयोगाप्राचुर्यस्येत्यर्थः।

## तर्कताण्डवम्

**अपहारोपि न यौगिकार्था स्मृतिः। स्मारकसम्बन्धस्य**

शक्ते रूढ इव यौगिकेपि सत्त्वात्। नापि प्रथममस्मृतिः। पङ्कजादावपि रूढ्या योगाप हारापातात्। स्मारकत्वस्य निरासाच्च।

नापि मण्युक्तान्वयबोधबहिर्भावः। भ्रमरूपस्यप्यन्वय-बोधस्याभावे रथकाराधिकरणपूर्वपक्षानुदयापातात्।

नापि प्रमारूपतद् बहिर्भावः। अनाप्तवाक्ये रूढस्यापि तद्बहिर्भावेन तस्याप्यपहारापातात्॥

किन्तु तात्पर्यविषयबहिर्भावः। तस्मान्मण्डपं पश्ये-त्यादौ निरवरकाशप्रकरणादेरभावे रूढ्या योगापहारः। भावे तु योगग्रहः। मण्डपं भोजयेत्यादौ रूढस्यायोग्य-त्वाद्योगग्रहः॥

तदुक्तमनुव्याख्याने - ''पूर्वायोगे परग्रह'' इति। उपजीव्यत्वेन शीघ्रत्वेन पूर्वस्या रूढेरयोगे परस्य योगस्य ग्रह इत्यर्थः।

न तु तत्र मीमांसकोक्ता लक्षणा। योगस्यापि शक्तित्वेन मुख्यत्वात्। समुदायशक्त्यसम्भवेन्तरङ्गक्लप्तावयव-शक्तावेव बुध्यवताराच्च। मुख्यार्थबाधाद्यनुसन्धाना-नपेक्षत्वेन शीघ्रत्वाच्च। लक्षणायाश्चातथात्वात्।

## न्यायदीपः

एवं योगाद्रूढेरुपजीव्यत्वशीघ्रत्वाभ्यां प्राबल्योपपादनेन रूढ्या योगापहार इत्युपपादितम्। तत्रापहारापदार्थं स्वाभिमतं विवक्षुश्चत्वारि पक्षान्तराण्यनूद्य निराह ॥ **अपहारोपीति** ॥ स्मारक-सम्बन्धस्य शक्तेरिति सामानाधिकरण्यम्।

**॥ अस्मृतिरिति ॥** यौगिकार्थस्येति योज्यम् ॥ **पङ्कजेति ॥** पङ्कजमानयेत्यादावपि यौगिकार्थस्य प्रथममस्मृत्या तत्र रूढ्या योगापहारापत्तेः। न चेष्टापत्तिः। जलकमधीविरोधादिति भावः।

**॥ स्मारकत्वस्येति ॥** वाक्ये पदं न स्मारकमिति भाट्टभिमताभिहितान्वयभङ्गे प्रतिपादितत्वेन रूढेरपि प्रथमं रूढार्थास्मारकत्वाद्रूढेरप्यपहारापातादिति भावः। अन्वयबोधबहिर्भावः किं भ्रमरूपान्वयबोधाविषयत्वं उत प्रमारूपतदविषयत्वम्।

आद्यमसिद्धमिति भावेनाह ॥ **भ्रमेति ॥** रथकारेति वचनाद्रथकारस्याधानमिति षष्ठाद्यपादीयोपान्त्याधिकरणे रथकारशब्दस्य यौगिकत्वेन रथकर्तृत्रैवर्णिकपरत्वेन पूर्वपक्षकरणादिति भावः।

द्वितीयेऽतिप्रसङ्गमाह ॥ **अनाप्तेति ॥** पङ्कजमस्तीत्याद्यनाप्तवाक्यस्य तार्किकमते बोधकत्वाभावेन तत्र रूढार्थस्य शाब्दबोधाविषयत्वेनेत्यर्थः।

नन्वेवं रूढेः प्राबल्येन तया योगार्थस्य तात्पर्याविषयत्वरूपापहारे सति जन्माद्यधिकरणादौ तद्विजिज्ञासस्व तद् ब्रह्मेति श्रौतब्रह्मशब्दे रूढजीवत्यागेन यौगिकविष्णुग्रहणं कथमुक्तमित्याशङ्कां परिहरन्नुपसंहरति ॥ **तस्मादिति ॥** जन्मादिनये तु निरवकाशलिङ्गादेव यौगिकग्रह इति भावः

**॥ तदुक्तमिति ॥** रूढेरुपजीव्यत्वादिना पूर्वभावित्वात्तदसम्भव एव योगग्रहणमित्येतत् पूर्वोदाहृतानुव्याख्याने उक्तमित्यर्थः ॥ **न तु तत्रेति ॥** मण्डपं भोजयेत्यादौ रूढ्यर्थगृहविशेषस्यान्वयायोग्यत्वाद्रूढार्थगृहसम्बन्धिपुरुषज्ञानं लक्षणया मण्डपपदेन जायत इति मीमांसकोक्तं न भवतीत्यर्थः **॥ अतथात्वादिति ॥** उक्तत्रैविध्यवैपरीत्यादित्यर्थः।

## तर्कताण्डवम्

**न चात्र योगस्य बाधकमस्ति। प्रबलाया रूढेरयोग्यतया निवृत्तेः। तत्पूर्विकाया लक्षणायाश्चोक्तहेतुभिः योगाद् दुर्बलत्वाच्च॥**

**न च रूढिपूर्वकलक्षणया रूढी रक्ष्यते। रूढ्यबाधे लक्षणाया एवानुदयात्। येन प्रबलरूढ्याश्रयेण लक्षणा**

प्रबला स्यात्।

प्रोद्गातृणामित्यत्राप्युद्गातृशब्दस्योद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्येषु चतुर्षु अपसुब्रह्मण्येषु त्रिषुवोद्गानकर्तृत्वाद्योग एव। न तु ऋत्विग्विशेषे उद्गातरि योगरूढिः। तत्पूर्विका तेषु लक्षणा। यत्र तु रूढिपूर्वकलक्षणायां तात्पर्यं निरवकाशमानसिद्धं तत्र योगं बाधित्वा सापि भवत्येव।

एतदप्युक्तं "पूर्वायोगे परग्रहः" इति। पूर्वस्या रूढेरयोगे अनन्तरस्य मुख्यवृत्तिरूपस्य योगस्य ग्रहः। न तु लक्षणायाः। योगस्याप्ययोगश्चेत्परस्यामुख्यवृत्तेर्लक्षणाया ग्रह इत्यर्थः।

**रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥७१॥**

## न्यायदीपः

ननु – मुख्यत्वेपि योगस्य त्यागोस्त्वित्यत आह ॥ **न चात्रेति** ॥ यद्वा – अत्राप्यस्ति मुख्यार्थबाधतद्योगानुसन्धानमित्यत आह ॥ **न चात्रेति** ॥ तदेव व्यनक्ति ॥ **प्रबलाया इति** ॥ **उक्तेति** ॥ योगस्यापीत्यादिनोक्तहेतुभिरित्यर्थः।

ननु – रूढिपूर्वकलक्षणाया रूढ्याश्रयेण बलवत्त्वाद्योगबाधकत्वमस्त्वित्यत आह ॥ **न चेति** ॥ रक्ष्यत इत्यन्वयः। कुतो न रक्ष्यत इत्यत आह ॥ **रूढीति** ॥

नन्वेवमुद्गातृचमसमेकस्य श्रुतिसंयोगादिति तृतीयाध्यायपञ्चमपादीयाष्टमाधिकरणे प्रैतुहोतुश्चमसः प्रब्रह्मणः प्रोद्गातृणामित्युदाहृत्योद्गायन्तीत्यवयवप्रसिद्ध्या गानकारिणामपसुब्रह्मण्यानां त्रयाणां छन्दोगानां चमसभक्षणमिति पूर्वपक्षयित्वा उत्पूर्वस्य गायतेः समुदायप्रसिद्धिरूपरूढ्या द्वितीयसामभक्तिविषयत्वेनोद्गातुरेव तद्गतृत्वेन ससुब्रह्मण्यानां चतुर्णां लक्षणेति शाबरभाष्ये स्थापितत्वात्। वार्तिककृता चापसुब्रह्मण्यानां त्रयाणां लक्षणेति स्थापितत्वात् कथमेवमुक्तिरित्यतस्तदुभयोक्तमप्ययुक्तमिति भावेनाह ॥ **प्रोद्गातृणामिति** ॥ सापि – लक्षणापीत्यर्थः ।

**। एतदपीति ।।** रूढेरसम्भवे योगस्यैव ग्रहणं न तु लक्षणाया इत्येतत्। तथा योगस्याप्यसम्भव एव लक्षणेत्येतदपीत्यर्थः।

रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयः ॥ ७१ ॥

***

## ७२. अथ लक्षणातो गौण्याः प्राबल्यनिर्णयः ।

### तर्कताण्डवम्

अमुख्यवृत्तौ गौणीतो लक्षणा जघन्या।

ननु–

न तावद्गौण्यां प्रथमोपस्थितसादृश्य एव तात्पर्यम् लक्षणायां तु प्रथमोपस्थितसम्बन्धद्वारा पूतत्वादाविति लक्षणा विलम्बितत्वाज्जघन्येति युक्तम्। लक्षणायामपि मञ्चाः क्रोशन्तीत्यादौ मञ्चसम्बन्ध एव तात्पर्यात्।

नापि गौण्यां तात्पर्यविषये सिंहसादृश्ये निरूपकतया सिंहोनुप्रविष्टः, लक्षणायां तु तात्पर्यविषये पूतत्वादौ गङ्गा नानुप्रविष्टेति लक्षणा मुख्यार्थासंस्पर्शिनीति जघन्या।

काकेभ्यो दधि रक्ष्यतामित्यादावपि काकशब्देन दध्युपघातकस्यैव विवक्षितत्वान्न मुख्यार्थसंस्पर्श इति युक्तम्। मञ्चाः क्रोशन्तीत्यादावपि सम्बन्धनिरूपकतया मञ्चानुप्रवेशात्।

## न्यायदीपः

एवं मुख्यवृत्तित्रये प्राबल्यदौर्बल्ये निरूप्यामुख्यवृत्त्योरपि ते आह ।। **अमुख्यवृत्ताविति** ।। जातावेकवचनम्। जघन्या ।। **निकृष्टेत्यर्थः** ।।

स्वयं प्रधानबाधादिना लक्षणाया जघन्यत्वं विवक्षुर्लक्षणाजघन्यत्वे प्रकारान्तरेण प्रसक्तं हेतुचतुष्टयं क्रमेणानूद्य निराह ।। **ननु न तावदित्यादिना अत्रोक्तं सुधायामिति पर्यन्तेन** ।। उक्तं विलम्बितत्वं लक्षणायामसिद्धमित्याह ।। **लक्षणायामपीति** ।। **नापीति** ।। युक्तमित्यन्वयः।

क्वचिदजहत्स्वार्थलक्षणादावस्ति मुख्यार्थकाकादिसंस्पर्श इत्यत आह ।। **काकेभ्य इति** ।। **सम्बन्धेति** ।। मञ्चसम्बन्धिपुरुषाः क्रोशन्तीत्यर्थतया मञ्चानां सम्बन्धनिरूपकत्वेन लाक्षणिकार्थेनुप्रवेशादित्यर्थः।

## तर्कताण्डवम्

**नापि – सिंहशब्दस्य येन माणवकेनान्वयानुपपत्तिः तत्रैव माणवके वृत्तेर्गौण्याः शैघ्र्यम्। गङ्गाशब्दस्य तु येन घोषेणान्वयानुपपत्तिस्तं विहायान्यत्र तीरे वृत्तेर्लक्षणाया मान्द्यम्।**

**न च नीलो घट इत्यादौ गुणवाचिनो नीलशब्दस्य येन घटेनान्वयानुपपत्तिस्तत्रैव लक्षणा दृष्टेति वाच्यम्। गुण-गुणिनोरभेदेऽनुपपत्त्यभावेन भेदे च मतुब्लोपेन तत्र लक्षणाया एवाभावात्।**

**लाङ्गलं जीवनमित्यादौ यद्यपि जीवनशब्दस्य येनलाङ्गलेनान्वयानुपपत्तिस्तत्रैव लाङ्गले वृत्तिस्तथापि अतिप्रियत्वादिना सादृश्याज्जीवनशब्दो लाङ्गले गौण एव न तु लाक्षणिक इति युक्तम्। गौण्यामपि सिंहस्याध्ययन-**

**मित्यादौ अध्ययानान्वयानुपपत्त्या माणवकपरत्वे मान्द्यात् ॥**

## न्यायदीपः

॥ **नापीति** ॥ युक्तमिति दूरेऽन्वयः ॥ **अन्वयेति** ॥ अभेदादिरूपान्वयानुपपत्तिरित्यर्थः ॥ **घोषेणान्वयेति** ॥ आधाराधेयरूपान्वयानुपपत्तिरित्यर्थः ॥ **तत्रैव लक्षणेति** ॥ नीलवान्घट इति मतुबर्थलक्षणेत्यर्थः ॥ **अभेदे** ॥ अभेदवादे।

॥ **भेदे चेति** ॥ गुणगुणिनोर्भेदवादे चेत्यर्थः ॥ **मतुब्लोपेनेति** ॥ ''तदस्यास्त्यस्मिन्निति'' सूत्रे ''गुणवचनेभ्योमतुबो लुग्वक्तव्यः'' इत्यनुशासनादिति भावः ॥ **लाङ्गलेनान्वयेति** ॥ अभेदान्वयानुपपत्तिरित्यर्थः।

॥ **सादृश्यादिति** ॥ जीवनं यथातिप्रियं लाङ्गलमप्येवमिति सादृश्यादित्यर्थः ॥ **गौण्यामपीति** ॥ मान्द्यादित्यन्वयः। यथालक्षणायां येनान्वयानुपपत्तिस्तं विहायान्यत्र वृत्तिरिति मान्द्यमुक्तमेवं सिंहस्य गुरूच्चारणानूच्चारणरूपाध्ययनान्वयानुपपत्त्या सिंहपदस्य सिंहसदृशमाणवकपरत्वस्य वाच्यत्वान्मान्द्यं सममेवेत्यर्थः।

## तर्कताण्डवम्

**नापि नयविवेकोक्तरीत्या सिंहो माणवक इत्यत्र सिंहपदं न माणवकमात्रपरम्। पुनरुक्तेः। नापि सादृश्यमात्रपरम्। माणवकपदेन सामानाधिकरण्यायोगात्। किन्तु सादृश्य-विशिष्टपरमिति पदतात्पर्यपूर्विका वाक्यतात्पर्यधीः।**

**गङ्गायां घोष इत्यत्र तु गङ्गापदं तीरमात्रपरम्। तीर-वाचिपदान्तराभावात्। गङ्गासम्बन्धस्तु द्वारमित्यादौ द्वाररूपेणार्थेन पिधानमिव घोषरूपेणार्थेनोपस्थापितस्तमा-**

दाय सम्बन्धे वाक्यतात्पर्ये ज्ञाते पदानां सम्भूयकारित्वाद् गङ्गापदस्य सम्बन्धे पश्चात्तात्पर्यधीरिति लक्षणा विलम्बितेति युक्तम्। लक्षणायां वाक्यतात्पर्यबुद्धेः प्राथम्योक्तौ वाक्यार्थप्रमारूपफले लक्षणाया एवाग्रेसरत्वेन तस्या एव प्राबल्यापातात्। सति गङ्गापदे सम्बन्धस्य प्रथममर्थेन उपस्थापनासम्भवाच्च।

अन्यथा द्वारं पिधेहीत्यादावपि प्रथमं द्वाररूपार्थोपस्थापितं पिधानमादाय वाक्यतात्पर्ये ज्ञाते पश्चात्पिधेहिपदस्य पिधाने तात्पर्यधीरिति स्यात्।

तस्माच्चतुर्धाऽपि लक्षणा गौणीतो न जघन्येति।

अत्रोक्तं सुधायाम्–

"अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि।
पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात्"

इत्यनुव्याख्यानव्याख्यावसरे – तत्त्वमसीत्यत्र गौणी चेत्प्रधानं पदद्वयं मुख्यार्थम्। अप्रधानं सामानाधिकरण्यमात्रं सादृश्येगौणम्। पररीत्या लक्षणा चेत्पदद्वयममुख्यार्थं, सामानाधिकरण्यमात्रं मुख्यमिति प्रधानबाधादनेकबाधाच्च लक्षणा जघन्येति।

## न्यायदीपः

**।। नापीति ।।** अत्रापि युक्तमिति दूरेन्वयः **।। पदतात्पर्येति ।।** सिंहासादृश्यविशिष्टे सिंहपदस्य च तात्पर्यं तद्धीपूर्विका सादृश्यविशिष्टस्य माणवकस्य चाभेदरूपवाक्यार्थे पदद्वयसमभिव्याहाररूपवाक्यस्य यत्तात्पर्यं तद्धीरित्यर्थः।

**।। सम्बन्ध इति ।।** विषयसप्तमी। घोषरूपार्थोपस्थापितसम्बन्धयुक्ते वाक्यतात्पर्ये ज्ञात इत्यर्थः **।। विलम्बितेति ।।** वाक्यतात्पर्यज्ञानानन्तरमेव लाक्षणिकपदस्य तात्पर्यज्ञानमिति विलम्बः। गौण्यां तु पूर्वमेव पदतात्पर्यधीरिति गौणी श्लाध्येति भावः **।। अग्रेसरत्वेन ।।** प्रथमप्रवृत्तत्वेनेत्यर्थः।

यदपि गङ्गासम्बन्धो घोषरूपार्थेनोपस्थित इति कथनं तदपि नेत्याह **।। सतीति ।। अन्यथेति ।।** सत्यपि पदेर्थेनैव पदार्थोपस्थापनाङ्गीकार इत्यर्थः।

**।। चतुर्धापीति ।।** गौण्यां प्रथमोपस्थितसादृश्य एव तात्पर्यं मुख्यार्थसंस्पर्शित्वं अनुपपद्यमानान्वयप्रतियोगिवृत्तित्वेन शीघ्रत्वं पूर्वमेव गौणपदतात्पर्यज्ञानमित्येवं चतुःप्रकारेण गौण्याः श्रेष्ठत्वं उक्तचतुष्टयवैपरीत्याल्लक्षणायां जघन्यत्वमित्येतन्नेत्यर्थः **।। अनुव्याख्यानेति ।।** वियत्पादे ''पृथगुपदेशाद्'' इत्येतदनुव्याख्यानेत्यर्थः।

अद्वैतवादिभिः खलु तत्त्वम्पदयोर्विरुद्धस्वार्थैकदेशलक्षणाया सामानाधिकरण्यमात्रं मुख्यमङ्गीकृतमित्यादि सुधावाक्यार्थं निष्कृष्यानुवदति **।। तत्त्वमसीत्यत्रेति ।। जघन्येति ।।** इतिशब्दस्येत्युक्तंसुधायामिति पूर्वेणान्वयः।

## तर्कताण्डवम्

**अयं च न्यायो यद्यपि तत्त्वमस्यादिवाक्य एव। सिंहश्चैत्र इत्यत्र सिंहसम्बन्धिनि सिंहसदृशे च चैत्रे च लक्षणा चेत्सिंहप्रातिपदिकस्यैव बाधे नानेकबाधाभावात्। तथाप्येकस्यापि प्रधानस्य बाधात्तत्रापि लक्षणा जघन्येति ज्ञेयम् ।।**

## न्यायदीपः

नन्वत्र द्वितीयो हेतुर्न सार्वत्रिक इति कथं सर्वत्र लक्षणाया जघन्यत्वं साधयेदित्याशङ्कामनूद्य क्वाचित्काभिप्रायिक एवायं हेतुरिति परिहरति **।। अयं चेति ।।** द्वितीयो हेतुरित्यर्थः।

वस्तुतो लक्षणास्थलेपि नानेकबाध इति दर्शयितुं सिंहसम्बन्धीत्युक्तम्। गौणस्थलेपि लक्षणास्वीकारेयं न्यायो नेतिदर्शयितुं सिंहसदृशे चेत्युक्तम्।

## तर्कताण्डवम्

**न च सामानाधिकरण्यस्य बाधेप्यनेकविभक्तिबाध इति वाच्यम्। नीलं घटमानयेत्यादौ विशेष्यविभक्त्या घटगतकर्मत्वादेरुक्त्या विशेषणविभक्तेरेवाभेदार्थकत्वेन तन्मात्रबाधात्। वक्ष्यमाणरीत्या तस्या अप्यबाधाच्च। बहुत्वप्रयुक्तबलादपि स्वभाव बलस्य बलवत्त्वाच्च। प्रातिपदिकप्राधान्यं च प्रयाजशेषेणेत्यादौ सिद्धम्॥**

## न्यायदीपः

सिद्धान्ते प्यनेकबाधमाशङ्क्य निराह॥ **न चेति** ॥ **अनेकेति** ॥ पूर्वोत्तरपदगतप्रथमाविभक्त्योः मुख्याभेदार्थत्वादिति भावः। इति न च वाच्यमित्यस्य तन्मात्रबाधादित्युत्तरम्। कुतो विशेषणभूतसिंह-प्रातिपदिकनिष्ठविभक्तिमात्रबाध इत्यतो यथा विभक्त्या मुख्याभेदो लभ्यते तन्मात्रस्यैव सादृश्याभेदा-र्थकत्वे मुख्यार्थत्यागेन बाधः। अभेदावगमश्चैकयेत्युक्तम्॥ **विशेषणेति** ॥ कुत एतदित्यत उक्तं इत्यादौ विशेष्येत्यादि॥ **वक्ष्यमाणेति** ॥ शूरत्वेनाभेदे सतीत्यादिग्रन्थेन वक्ष्यमाणेत्यर्थः।

अनेकविभक्तिबाधं गौण्यामभ्युपेत्यापि लक्षणाया जघन्यत्वमाह॥ **बहुत्वेति** ॥ **स्वभाव-बलस्येति** ॥ प्रातिपदिकबलस्यानन्यप्रयुक्तत्वात्स्वभावबलस्येत्युक्तम्–

"द्विविधं बलवत्त्वं च बहुत्वाच्च स्वभावतः।
तयोः स्वभावो बलवान् . . . . "

इति तत्त्वनिर्णयोक्तेरिति भावः।

ननु – प्रधानबाधाल्लक्षणा जघन्येत्युक्तिरयुक्ता, प्रातिपदिकप्राधान्यस्यासिद्धेरित्यत आह

**॥ प्रातिपदिकेति ॥ प्रयाजेति ॥** चतुर्थेऽभिघारणे विप्रकर्षादनुयाजवदभेदः स्यादित्याद्यपादीयत्रयोदशाधिकरणे प्रयाजशेषेण हवींष्यभिघारयतीति वाजपेयगतवाक्ये श्रुतमभिघारणं किं हविःसंस्कारार्थमुत प्रतिपत्तिरिति सन्दिह्य हवींषीति द्वितीयया शेषेणेति तृतीययाच प्रधानोपसर्जनभावावगमात् हविःसंस्कारार्थमिति पूर्वपक्षयित्वा शेषस्य प्रतिपत्त्यपेक्षत्वाच्छेषपदप्रतिपादकस्वारस्येन प्रयाजशेषं हविःषु क्षारयेदिति प्रतिपत्तिरेवाभिघारणमिति सिद्धान्तितत्वादिति भावः।

नन्वत्र न प्रातिपदिकत्वनिमित्तं तत्प्राधान्यं किं तु शेषपदत्वप्रयुक्तमिति चेत्। किं तावता। प्रातिपदिकप्राधान्यानिरासात्। अथैतावता न परितुष्यसि तर्ह्यादिपदोपात्तोऽदितिः पाशान्प्रमुक्त्वेत्यादिरन्यो दृष्टान्तोऽस्तु। तत्र बहुवचनानुरोधेन बहुपाशयुक्तेषु पशुगणेषु पाशमन्त्रस्योत्कर्षमकृत्वा प्रातिपदिकानुरोधेनैकपाशयुक्ताग्नीषोमीयपशुप्रकरण एव निवेश इति नवमे व्युत्पादितत्वादिति ध्येयम्।

## तर्कताण्डवम्

**न च लक्षणायामपि गङ्गापदं मुख्यार्थमेव, सप्तम्येव प्रवाहस्यैव परम्परया घोषाधारतायाममुख्येति वाच्यम्। प्रवाहस्य परम्परयाप्यनाधारत्वात्। तीराधारताया एवाभिप्रेतत्वाच्च। अनुव्याख्यानोक्तं सादृश्यस्य गौणाभेदत्वं तु चैत्रे शूरत्वेन सिंहाभेदे सत्यपि औत्सर्गिकस्य पदार्थतावच्छेदकसिंहत्वेनाभेदस्याभावात्।**

**उक्तं ह्यनुव्याख्याने–**

**“चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते।**
**अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित्” इति।**

## न्यायदीपः

लक्षणायां गौणीतौल्यमाशङ्क्य निराह **॥ न चेति ॥** घोषाधारतीरसम्बन्धवत्त्वमेव परम्परया तदाधारत्वमिति वादिनं प्रत्याह **॥ तीरेति ॥** तीरस्य घोषं प्रत्याधारताया इत्यर्थः। तथाच लक्षणायां

प्रधानप्रातिपदिकार्थस्यैव बाधात्सा जघन्येति भावः।

ननु – सिह्मश्चैत्र इत्यत्र गौण्या सिह्मसदृशश्चैत्र इत्यर्थः। तत्र सादृश्यविशिष्टचैत्रयोरभेदस्य मुख्यत्वादभेदस्य गौणतोक्तिरयुक्तेत्यत आह ।। **अनुव्याख्यानेति** ।। अभेदवदैवैता इत्यादि प्रागुदाहृतानुव्याख्यानोक्तमित्यर्थः। पदार्थतावच्छेदकादन्येन धर्मेणाभेदोस्तीत्यत्र सम्मतिमाह ।। **उक्तं हीति** ।। ''पृथगुपदेशात्'' इत्यधिकरणानुव्याख्यान इत्यर्थः।

## तर्कताण्डवम्

**सन्न्यायरत्नावल्यां तु – तत्त्वमसीत्यत्रापि जगत्स्रष्टृपरामर्शिनः तच्छब्दस्यैव त्वंशब्दवाच्ये जीवेगौणवृत्त्याश्रयणेन तत्त्वम्पदयोरुभयोरपि लक्षणाश्रयणस्य पराहतत्वादिति तत्पदस्यैव गौणत्वमुक्तम्। तदपि तत्त्वमसीत्यादिप्रस्तुतपरमेव। फलतः सुधोक्तसादृश्याभेदपर्यवसितं च।**

**सुधामतेऽपि सिह्मस्याध्ययनमित्यादौ सामानाधिकरण्याभावात्सिह्मप्रातिपदिकमेव सदृशे गौणम्। अत एव न्यायामृते तत्पदस्यैव गौणत्वमुक्तमस्माभिः।**

**तर्हि लक्षणाया जघन्यत्वे अनुगतो हेतुः क इति चेदुच्यते। गौण्यां सादृश्यान्तर्गणिकभेदे सत्यपि सादृश्यत्वरूपेणानुगते तात्पर्यमित्यैकार्थ्यघटादिपदादाविव तात्पर्यविषये द्राग्धीः। लक्षणायां तु क्वचित्सम्बन्धे तात्पर्यं, क्वचित् तद्द्वारा पूतत्वे, क्वचित्सीतलत्वादाविति, वैरूप्यान्नानार्थाक्षादिशब्दादाविव विलम्बेन तद्धीरिति लक्षणा जघन्या।।**

## न्यायदीपः

सुधापक्षे प्राचीनटीकाविरोधनिरासाय तदुक्तमनूद्य तदभिप्रायमाह ॥ **न्यायरत्नावल्यां त्विति** ॥ तत्पदस्यैव गौणत्वमुक्तमित्यन्वयः। न तु सुधापक्ष इव सामानाधिकरण्यं गौणमित्युक्तमित्येवकारार्थः ॥ **प्रस्तुतेति** ॥ तेन सिह्मश्चैत्र इत्यादौ पदद्वयास्वारस्याभावादव्यापकत्वं न्यायस्य न दोष इति भावः।

॥ **सुधोक्तसादृश्याभेदेति** ॥ सामानाधिकरण्यं गौणमित्यापि सादृश्याभेदाभिप्रायकत्वादिति भावः। कुत एवमित्यत आह ॥ **सिंहेति** ॥ **तर्हीति** ॥ गौण्यामेकमेव पदमस्वरसं लक्षणायां पदद्वयमित्यस्य तत्त्वमसीति प्रस्तुतवाक्यमात्रपरत्वे गङ्गायां घेष इत्याद्यनुगतो हेतुः क इत्यर्थः।

॥ **गौण्यामिति** ॥ तात्पर्यविषये द्राग्धीरित्यन्वयः ॥ **अन्तर्गणिकभेद इति** ॥ शूरत्वेन पवित्रत्वेन ज्ञानानन्दाद्यात्मकत्वेनावयवसंस्थानविशेषत्वादिरूपेण नानात्वेपीत्यर्थः ॥ **सम्बन्ध इति** ॥ मञ्चाः क्रोशन्तीत्यादौ सम्बन्धे गङ्गायां घोष इत्यादौ पूतत्वे, इदं गङ्गोदकमित्यादौ शीतलत्वादावित्यर्थः।

## तर्कताण्डवम्

**केचित्तु गौण्यां सादृश्यं सर्वत्र विशेषणं, लक्षणायां सम्बन्धस्तु क्वचिदेवेति लक्षणा जघन्येत्याहुः।**

**अन्येतु – पूर्वपक्षोक्तौ विलम्बौ मुख्यार्थासंस्पर्शश्च लक्षणायां प्रायिकत्वाज्जातिप्रयुक्तौ। गौण्यां तु क्वाचित्कत्वान्न तत्प्रयुक्ताविति गौणीजातीयाल्लक्षणाजातीयं जघन्यमित्याहुः।**

## न्यायदीपः

स्वमते जघन्यत्वमुपपाद्य परोक्तं जघन्यत्वप्रकारत्रयमाह ॥ **केचित्त्वित्यादिना** ॥ **विशेषण-मिति** ॥ वृत्तिजन्यधीविषय इत्यर्थः ॥ **क्वचिदेवेति** ॥ मञ्चाः क्रोशन्तीत्यादावित्यर्थः। गङ्गायां घोष इत्यादौ पूतत्वादेरेव विशेषणत्वादिति भावः।

अत्रारुचिबीजं तु – मुख्यार्थसम्बन्धोपि सर्वत्र विशेषणमेवेत्यर्थस्य लाक्षणिकादेः शक्यार्थसम्बन्धित्वादिनैव लक्ष्याद्युपस्तापकत्वसमर्थनवादे व्यक्तत्वादिति ध्येयम्।

**॥ पूर्वपक्षोक्ताविति ॥** पूर्वपक्षग्रन्थे सिह्मशब्दस्य येन माणवकेनान्वयानुपपत्तिस्तत्रैवेत्यादिना नयविवेकोक्तरीत्येत्यादिना चोक्तो विलम्ब इत्यर्थः **॥ मुख्यार्थासंस्पर्शश्चेति ॥** पूर्वपक्षोक्त इति विपरिणामेनानुषङ्गः। प्रायिकत्वात् बाहुल्यात्। जातिप्रयुक्तौ औत्सर्गिकौ, मुख्यार्थासंस्पर्शो जातिप्रयुक्त इत्यपि योज्यम्।

**॥ न तत्प्रयुक्ताविति ॥** सिंह्मस्याध्ययनमित्यादिना लक्षणाया एवाग्रेसरत्वेनेत्यादिना च पूर्वपक्षोक्तौ विलम्बावित्यनुकर्षः। अत्रापि स्वोक्तदिशा गौणीमात्रतो न लक्षणामात्रस्य जघन्यत्वम्। यत्र गौण्यां विलम्बस्तत्र जघन्यत्वाभावात्। किं तु तज्जातीयात्तज्जातीयस्येत्यरुचिबीजं ध्येयम्।

## तर्कताण्डवम्

**अपरे तु न क्वापि लक्षणायां मुख्यार्थसम्बन्धे तात्पर्यम्। किं तु तत्परिचायिते तीरादिगते विशेषे। एवं चोक्तौ विलम्बौ मुख्यार्थस्य तात्पर्यासंस्पर्शश्च लक्षणायां सार्वत्रिकाः। गौण्यां तु न क्वचिदपीति गौणी ज्यायसी।**

**सिंहस्याध्ययन-मित्यादावप्येकत्र निर्णीतः शास्त्रार्थ इति न्यायाद् बुद्धिस्थमाणवकपरत्वम्। गौडमठे चैत्रगृहे मैत्रो वसतीत्यादावप्यव्यवहितत्वसादृश्याद्गौडमठशब्दश्चैत्रगृहे गौण एव। न तु सबन्धाल्लाक्षणिकः। उक्तरीत्या बाध-लाघवादित्याहुः।**

**तस्माद्गौणीतो लक्षणा जघन्या।**

**तदुक्तं सन्न्यायरत्नावल्याम् ''पूर्वायोगे परग्रहः'' इत्यनुव्याख्यानव्याख्यानावसरे – परममुख्यार्थासम्भवे**

**मुख्यार्थः स्वीकार्यः। तदसम्भवे गौणार्थः। तदसम्भवे लाक्षणिक इति।**

## तर्कताण्डवम्

॥ **तत्परिचायितेति** ॥ तटस्थभूतेन तेन व्यावर्तित इत्यर्थः ॥ **विशेष इति** ॥ पूतत्वशीतलत्वादिरूप इत्यर्थः ॥ **उक्ताविति** ॥ पूर्वपक्षदशायामुक्तावित्यर्थः।

ननु – सिंहस्याध्ययनमित्यादौ अध्ययनान्वयानुपपत्त्या माणवकपरत्वेन मान्द्यादिति गौण्यामपि विलम्ब उक्तः पूर्वपक्षग्रन्थ इत्यत आह ॥ **सिंहस्येति** ॥ शास्त्रार्थ इत्यनन्तरमपरत्रेति शेषः। एवं प्रकृतेपि सिंहो माणवक इत्यत्र निर्णीतः शास्त्रार्थो माणवकान्वयानुपपत्त्या माणवकपरत्वरूपोपरत्र सिंहस्य अध्ययनमित्यादावपि ग्राह्य इत्यर्थः।

यत्तु गौडमाठ इत्यस्य गौडमठसामीप्यलक्षणकत्वमुक्तं तन्नेत्याह ॥ **गौडमठ इति** ॥ गौडमठैकदेशो गौडमठाव्यवहितो यथा तथा चैत्रगृहमपीत्यर्थः ॥ **उक्तरीत्येति** ॥ नीलङ्घटमानयेत्यादौ विशेष्यविभक्तेरित्यादिनोक्तरीत्या चैत्रमठपदगतविभक्तिमात्रबाधादित्यर्थः।

अत्रापि मञ्चाः क्रोशन्तीत्यादौ मुख्यार्थसम्बन्धे तात्पर्यदृष्टेर्नक्वापि तत्र तात्पर्यमित्ययुक्तमित्यादि ध्येयम्। सुधादावस्फुटत्वादाह ॥ **तदुक्तमिति** ॥

## तर्कताण्डवम्

**अत्र चानुव्याख्यानोक्तपूर्वत्वं,**

**". . . . . . . . विष्णावन्यत्र मुख्यता।**
**उपलक्षणा च गौणी च त्रिस्रः शब्दस्य वृत्तयः"।**

**इति न व्यवहितोद्देश्याभिप्रायेण। किन्तु,**

**"प्रयोगयुक्तसादृश्यं सम्बन्धो वाप्यमुख्यतः"।**

**इति अव्यवहितलक्षणोक्त्यभिप्रायेण।**

**अत एव तत्रोत्तरत्र–**

**"मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते।**
**सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः"।**

**इति गौणस्य प्राथम्योक्तिः। न्यायविवरणेपि रूढोपचारो रूढलक्षणा उपचारो लक्षणेति गौण्याः प्राथम्योक्तिः। गौण्यामपि अनिरूढगौणी निरूढगौणीतो जघन्या। एवं लक्षणायामपि द्रष्टव्यम्।**

**लक्षणातो गौण्याः प्राबल्यनिर्णयः ॥७२॥**

## न्यायदीपः

ननु – सन्न्यायरत्नावल्युक्तिरयुक्ता। "तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता" इति श्लोके गौणीतो लक्षणायाः पूर्वमुद्दिष्टत्वात्तदनुरोधेन लक्षणायोगे गौणग्रह इत्येव वक्तव्यत्वादित्यत आह ॥ **अत्र चेति** ॥ **अव्यवहितेति** ॥ पूर्वत्रिपाद्या प्रकृतलक्षणेत्यर्थः।

कुत एवं व्यवहितोद्देशाभिप्रायेण गौण्या जघन्यत्वोक्तिरनुव्याख्यानाभिमता किं न स्यादित्यत आह ॥ **अत एवेति** ॥ गौण्या ज्यायस्त्वादेवेत्यर्थः। न्यायविवरणनिर्देशादपि सूचितमित्याह ॥ **न्यायविवरणेपीति** ॥ **गौण्यामपीति** ॥

एतेनामुख्यवृत्तिष्वपि स्वीकारे तारतम्यमस्ति अर्थप्रतीतिसन्निकर्षविप्रकर्षाभ्यामिति सुधोक्तिरपि व्याख्याता भावति।

लक्षणातो गौण्याः प्राबल्यनिर्णयः ॥७२॥

***

समाप्तः वृत्तित्रयवादः

# समासार्थवादः

## ७३. तत्पुरुषे लक्षणादिभङ्गः ।

### तर्कताण्डवम्

यदुक्तं मणौ राजपुरुष इत्यादितत्पुरुषे राजपदस्य सम्बन्धे सम्बन्धिनि वा लक्षणेति।

तन्न। त्वन्मते नीलोत्पलमिति कर्मधारये नीलोत्पलयोरभेदस्येवेहापि राजपुरुषयोः सम्बन्धस्य वृत्तिं विनैव अन्वयतया भानोपपत्तेः।

मन्मते च पुरुषपदेनैव राजान्वितपुरुषाभिधानसम्भवात्। अन्यथा कर्मधारयेप्यभेदेऽभिन्ने वा नीलपदस्य लक्षणा स्यात्।

### न्यायदीपः

लक्षणादिस्वरूपं तत्प्राबल्यादिकं च निरूप्येदानीं तस्य विषयव्यवस्थां दर्शयितुं परोक्तं निराह ।। **यदुक्तमिति** ।। शब्दखण्डे बहुव्रीहिनिरूपणानन्तरमुक्तमित्यर्थः। कर्मधारयस्यापि तत्पुरुषत्वात्तत्र च लक्षणानुक्तेराह ।। **राजपुरुष इत्यादि** ।। **तत्पुरुष इति** ।।

षष्ठ्यर्थसम्बन्धे निरूढलक्षणयैव राजसम्बद्धपुरुषबुद्ध्युपपत्तेरिति मण्युक्तेराह ।। **सम्बन्ध इति** ।। लाघवयुक्त्येति भावः। व्याख्यातृवचनानुरोधेनाह ।। **सम्बन्धिनि वेति** ।। वृत्तिरेवान्यलभ्यसम्बन्धादावयुक्ता कुतस्तद्विशेषलक्षणावकाश इति भावेनाह ।। **त्वन्मत इति** ।। **कर्मधारयेति** ।। कर्मधारये तु न शक्तिर्न वा लक्षणा तेन विनापि विवक्षितार्थान्वयोपपत्तेरिति मण्युक्तेरिति भावः।

ननु – भवन्मतेऽन्वयतया भानानङ्गीकाराल्लक्षणयैव संबन्धधीर्वाच्येत्यत आह ॥ **मन्मत इति** ॥ अन्विते शक्त्युपगमादिति भावः।

## तर्कताण्डवम्

**नच विरुद्धविभक्त्यनवरुद्धनामार्थयोरभेदेनैवान्वयनियमान्न सम्बन्धोन्वयतया भातीति वाच्यम्। घटो न पटश्चन्द्र इव मुखमित्यादौ पट नञ्पदार्थयोः पटाभावयोः, चन्द्रेवशब्दार्थयोः चन्द्रसादृश्ययोः, चाभेदाभावात्।**

**तस्मात्कर्मधारये अभेदस्येव विग्रहसमानार्थे षष्ठीतत्पुरुषेपि संवन्धस्य योग्यतादिवशादन्वयतयैव भानमस्तु। नानाविधो ह्यन्वयः। कर्मधारये दर्शनमात्रेण तत्पुरुषेऽभेदान्वयापादने च विपरीतं किं न स्यात्।**

## न्यायदीपः

अन्वयबोधस्य वृत्तिं विना लाभेपि न विवक्षितार्थान्वयधीलाभः अतो लक्षणा युक्तेत्याशङ्क्य निराह ॥ **न च विभक्त्यनवरुद्धेति** ॥ नीलोत्पलं राजपुरुष इत्यादौ श्रुतविभक्तिः समुदायादुत्पन्नैव न तु समासावयवप्रातिपदिकात् तत उत्पन्नं पूर्वोत्तरपदस्थं विभक्तिद्वयं नतु "सुपो धातुप्रातिपदिकयो"रिति लुप्तमिति विभक्त्यनवरुद्धेत्युक्तम्। विभक्त्यर्थानवरुद्धेति पाठे सामानाधिकरण्यायोग्याभिन्नविभक्त्यर्थेनाप्रतिबद्धेत्यर्थः।

नायं नियमो व्यभिचारादित्याह ॥ **घट इति** ॥ न घट इत्यत्र नञोव्ययत्वे लुप्तविभक्तिकतया विभक्त्या वा तदर्थेन वानवरुद्धं नेति पदम्। तथा चन्द्र इवेत्यत्रापि ध्येयम्।

॥ **विग्रहेति** ॥ राज्ञः पुरुष इति समासार्थप्रदर्शकवाक्यसमानार्थ इत्यर्थः। बहुव्रीहौ नित्यसमासविधानेन विग्रहसमासयोर्भिन्नार्थत्वेपि विभाषाधिकारे विहितषष्ठीतत्पुरुषस्य

विग्रहतुल्यार्थत्वात् विग्रहे च सम्बन्धस्य भानात् समासेपि तद्भानमाकाङ्क्षायोग्यतादिवशात्स्यादिति भावः। राजत्वविशिष्टपुरुषस्यानयनाद्ययोग्यत्वेनाभेदस्य बाधात्सम्बन्धस्य योग्यतादिवशादन्वयतयैवेत्युक्तम्।

अभेदान्वयस्यबाधात् कोनामान्वय इत्यत आह ॥ **नानाविध इति** ॥ तत्स्वामिकत्वादिरूपोनेकविध इत्यर्थः ॥ **विपरीतमिति** ॥ तत्पुरुष इव कर्मधारयेपि सम्बन्धित्वरूपान्वयधीः स्यादित्यर्थः।

## तर्कताण्डवम्

**किञ्चैवं पाचक इत्यादिकृदन्तेषु पचिधातोरेवाकाद्युक्तकर्त्रादिना औपगव इत्यादितद्धितेषु उपगुशब्दस्यैव अणाद्युक्तापत्त्यादिना घटमित्यादावपि घटादिप्रातिपदिकस्यैव द्वितीयोक्तकर्मत्वादिना सह सम्बन्धे लक्षणा स्यात्।**

## न्यायदीपः

यदि सम्बन्धोऽन्वयतया न भायात्तर्हि कृत्तद्धितकारकविभक्त्यन्तेष्वपि प्रातिपदिकस्य लक्षकता स्यादित्याह ॥ **किञ्चैवमिति** ॥ डुपचष् पाक इत्यस्मात् ''ण्वुल्तृचा''विति सूत्रेण कर्त्रर्थे ण्वुल्प्रत्यये तस्य ''युवोरनाका'' वित्यकादेशे ''अत उपधाया'' इति वृद्धौ च पाचक इति रूपम्। तत्र ण्वुल्प्रत्ययस्य ''कृदतिङिति'' सूत्रेण कृत्सञ्ज्ञिकत्वात्कृदन्तेष्वित्युक्तम्।

॥ **औपगव इति** ॥ उपगुशब्दादपत्येर्थे ''तद्धिता'' इत्यधिकारे ''तस्यापत्यमिति'' सूत्रेणाण्प्रत्यये आदिवृद्धौ गुणावादेशयो रूपम्।

॥ **द्वितीयोक्तेति** ॥ ''कर्मणि द्वितीय'' इत्यनुशासनादिति भावः। षष्ठ्यन्तानां लक्षणेत्यनेन, तृतीयान्तानां च सहेत्यनेनान्वयः। तत्रान्वयस्यान्यलभ्यत्वान्न लक्षणा चेत्तर्हि तत्पुरुषेपि तथा स्यात्। समास एवायं नियमो न त्वन्यत्रेत्यस्य नियामकशून्यत्वादिति भावः।

## तर्कताण्डवम्

एतेन – राजपुरुषं राज्ञः पुरुषं राजसम्बन्धिनं पुरुषमानये-त्यादेः पर्यायत्वात्तत्पुरुषे राजसम्बन्धी अन्वये प्रतियोगितया भाति राजसम्बन्धिनः पुरुषाभेदस्तु अन्वयतया अन्वयप्रति-योग्युपस्थितिश्च न वृत्तिं विनेति वृत्त्यर्थे लक्षणा। नीलोत्पल-मित्यत्र तु नीलाभिन्नं नान्वयप्रतियोगि किन्तु नीलपदोक्त-नीलमेव नीलाभेदस्त्वन्वय एवेति न तत्र लक्षणेति निरस्तम्। नीलोत्पलं नीलमुत्पलं नीलाभिन्नमुत्पलमित्यादेरपि पर्याय-त्वात्तत्रापि नीलाभिन्नमन्वयप्रतियोगि नीलाभिन्नस्य उत्पलाभेदस्तु अन्वय इत्यपि सुवचत्वात्।

तस्माद्व्यासे यः सम्बन्धो विभक्तिसापेक्षो भासते स एव समासे तदनपेक्षोऽन्वयतया भासत इत्युक्तम्।

## न्यायदीपः

प्रागुक्तदृष्टान्तवैषम्यमनूद्य निराह ॥ **एतेनेति** ॥ निरस्तमित्यन्वयः ॥ **अन्वयप्रतियोग्युप-स्थितिश्चेति** ॥ राजपदेन राजसम्बन्धीत्यर्थस्य राजपदे लक्षणावृत्तिं विना अलाभादित्यर्थः ।

॥ **नीलमेवेति** ॥ नीलगुणयुक्तमेवेत्यर्थः ॥ **तस्मादिति** ॥ कर्मधारयादिवैषम्यायोगादित्यर्थः ॥ **व्यास इति** ॥ विग्रहवाक्ये।

## तर्कताण्डवम्

वस्तुतस्तु दधि पश्येत्यादौ लुप्तया द्वितीययेव गर्गा हरीतकीत्यादौ लुप्तेन तद्धितेनेव, अस्यापत्यं इः इत्यादौ लुप्तेन अ इति प्रातिपदिकेनेव, व्यतिस इत्यादौ लुप्तेना-

**स्तिधातुनेवेहापि लुप्तया स्मृतया षष्ठ्यैव स्वार्थोपस्थितिः। अन्यथा ह्यलुप्तस्य दधिप्रातिपदिकादेरेव कर्मत्वादौ लक्षणा स्यात्।**

**यदि च दधि कर्मत्वं दर्शनं कृतिः इत्यादावन्वयाप्रतीतेः कर्मत्वं विभक्त्यैवाभिधेयं तर्हि राजा सम्बन्धः पुरुषः इत्यादावन्वयाप्रतीतेः सम्बन्धोपि षष्ठ्यैवाभिधेयः।**

## न्यायदीपः

ननु – व्यासे विभक्तिसापेक्षः कथं समासे तन्निरपेक्षो भासेत। अन्यथा व्यासेपि तथा भायादित्यनुशयादाह ॥ **वस्तुतस्त्विति** ॥ **लुप्तयेति** ॥ स्वमोर्नपुंसकात् इति सूत्रेण लुग्विधानाल्लुप्तयेत्युक्तम्।

॥ **गर्गा इति** ॥ गर्गस्य गोत्रापत्यानीत्यर्थे ''गर्गादिभ्यो यञ्'' इति यञि कृते यञञोश्च इति बहुत्वे यञो लुकि सति गर्गा इति रूपम्। गार्ग्यः गार्ग्यौ गर्गा इति। इरीतकीत्ययं शब्दः प्राग्लक्षणादेरभिधातो भेदसमर्थनवादे विवृतः। अ इति कस्यचिन्नाम। अस्य अकारनामकस्यापत्यमित्यर्थे अत इञ् इति इकारप्रत्यये यस्येति चेति सूत्रेण प्रातिपदिकाकारलोपे इरिति प्रत्ययस्यैव सुबन्तस्य श्रवणम् ॥ **व्यतिस इति** ॥ विवृतमेतदुपसर्गाणां वाचकत्वोक्तिवादे ॥ **स्वार्थेति** ॥ सम्बन्धोपस्थितिरित्यर्थः।

दधि पश्येत्यादि वैषम्यमाशङ्क्य साम्येन निराह ॥ **यदि चेति** ॥ **सम्बन्धोपि षष्ठ्यैवाभिधेय इति** ॥ प्रकृते षष्ठ्याः लुप्तत्वेपि स्मृतया तयाभिधेय इत्यर्थः।

## तर्कताण्डवम्

**न च काष्ठकरणकतण्डुलकर्मकपाककृतिरित्यादिसमासे विभक्त्यनभिहितस्यान्वयो दृष्ट इति वाच्यम्।**

स्वादुदधिपश्येत्यादिसमासे दधिपदस्यैव कर्मत्वे लक्षणापातात्। दधिकर्मत्वदर्शनकृतय इत्यादिसमासेपि विभक्तिं विनान्वयाप्रतीतेः। काष्ठकरणकेत्यादिसमासे अन्वयधीस्तु विभक्त्यर्थोपरक्तधर्मिणोभिधानात्। इह तु धर्मिणः पुरुषपदेनैवोक्ततया विग्रहे षष्ठ्या निष्कृष्टस्य सम्बन्धस्यैवोक्ततया च तदेकार्थे समासेपि तस्यैव लक्षणीयत्वात्। पुरुषस्य सम्बन्धं प्रत्याश्रयता राज्ञः पुरुष इत्यत्रेव अन्वयतया भासताम्।

न चैवं नीलघट इत्यत्रापि नीलरूपं प्रत्याश्रयतान्वयतयैव भासेतेति नीलपदं नीलरूपाश्रयलक्षकं न स्यादिति वाच्यम्। इष्टापत्तेः।

अन्यथा व्यतिस इत्यादावपि लुप्तस्यास्तिधातोरर्थः व्यतीत्युपसर्गेण वा सेप्रत्ययेन वा लक्ष्येत। समासश्रवणकाले विग्रहस्थषष्ठ्याः स्मरणनैयत्ये च दधि पश्येत्यादौ द्वितीयादि स्मरणवत्तदर्थधीरेव मानम्।

## न्यायदीपः

एतेन मणौ राज्ञः पुरुष इति विग्रहे समासविधानात्स्मृता लुप्ताषष्ठी सम्बन्धस्मारिकेति पक्षमनूद्य राजपुरुषमानयेत्यस्मात्पूर्वं नियमेन विग्रहास्मरणादिति यद्दूषणमुक्तं तन्निरस्तम्। दधि पश्येत्यादिष्वपि तथात्वापरिहारादित्यग्रे व्यक्तत्वात्। दधि पश्येत्यादावसमासे विभक्त्युपस्थितस्य सम्बन्धस्य भाननियमेपि समासे नियमो नास्ति। क्वचिद्विभक्त्यनुक्तस्यापि अन्वयप्रतीतेरिति भावेनाशङ्क्य निराह ॥ **न चेति** ॥ काष्ठैस्तण्डुलान्पचीत्यस्यार्थकथनं काष्ठेत्यादि।

॥ **समास इति** ॥ स्वादु दधीत्यादिकर्मधारयसमास इत्यर्थः। क्वचित्समासे विभक्त्यनभि-

हितस्याप्यन्वयदर्शनेन स्वादु दधीत्यादावपि स्मृतविभक्त्यनुक्तस्यापि कर्मत्वस्य दधिपदाल्लक्षणयोपस्थितस्यान्वयसम्भवेन दधिपदस्य लक्षकत्वं स्यादित्यर्थः। यद्वतं कर्मत्वं विभक्त्यभिधेयमित्युक्तम् तद्वाचिपदस्यैवेत्येवकारार्थः। स्वाव्याघातकमेतदिति भावः।

विभक्त्यनभिहितस्याप्यन्वयदृष्टेर्विभक्त्याभिधानं सम्बन्धस्य नापेक्षितमिति यथोच्यते त्वया तथा क्वचित्समासे विभक्तिं विनान्वयाप्रतीतेः स्मृतविभक्त्याभिधानमावश्यकमित्यपि वक्तुं शक्यमेवेति भावेनाह॥ **दधीति**॥

कथं तर्हि काष्ठकरणकेत्यादावन्वयधीरित्यत आह॥ **काष्ठेति**॥ राजपुरुषेत्यादावपि तथैवास्तु। किं स्मृतषष्ठ्यासम्बन्धबोधाङ्गीकारेणेत्यत आह॥ **इह त्विति**॥ षष्ठ्यापि धर्मिणो अभिधाने समासे षष्ठीस्मृतिर्नापेक्षिता। अन्यतोपि धर्मिणो लाभादित्यत आह॥ **षष्ठ्येति**॥ निष्कृष्टस्य धर्मिविनाकृतस्य॥ **लक्षणीयत्वादिति**॥ सा च लक्षणा दधिपश्येत्यादाविव नयुक्तेति स्मृतयैव षष्ठ्या सम्बन्धोऽभिधेय इति भावः।

नन्वेवमपि तत्पुरुषे लक्षणावश्यमाश्रयणीया विभक्त्यभिहित सम्बन्धाश्रयतावाचिनः कस्यचिदभावादित्यत आह॥ **पुरुषस्येति**॥ **अन्यथेति**॥ समभिव्याहारलभ्यस्यापि लक्ष्यत्व इत्यर्थः।

॥ **लक्ष्यतेति**॥ न चेष्टापत्तिः। उपसर्गप्रत्ययसमभिव्याहारेण वा स्मृतधातुना वा व्यत्यस्तोसीत्यर्थस्योपगमादिति भावः। षष्ठीस्मरणनैयत्यं नेत्युक्तं मणावित्यत आह॥ **समासेति**॥ **तदर्थधीरेवेति**॥ सा लक्षणयोपपन्ना चेद्दधि पश्येत्यादावपि तथा स्यादिति भावः।

## तर्कताण्डवम्

**किञ्च षष्ठीस्मृत्यभावे त्वदभिमता लक्षणैव न सिध्येत्। तथाहि – सम्बन्धे सम्बन्धिनि वा लक्षणा नतावद्वृत्तिं विनैव संसर्गमर्यादया प्रतीतान्वयानुपपत्त्येति युक्तम्। त्वन्मते विभक्त्यनवरुद्धप्रातिपदिकार्थयोरभेदरूपेऽन्वये व्युत्पत्तेः। इह च राज्ञोऽपि पुरुषत्वेन राजपुरुषयोरभेदाबाधात्। नीलघट**

**इत्यत्र तु त्वन्मते नीलरूपं न घट इति नील रूपे लक्षणास्तु। न त्वत्र।**

**किं च यदि राजपुरुषयोः सम्बन्ध एव वृत्तिं विना संसर्ग मर्यादया भासेत कथं तर्हि सम्बन्धे लक्षणावृत्तिः।**

### न्यायदीपः

लक्षणावादिनापि समासे षष्ठीस्मृतिरवश्यं वाच्येति वक्तुमाह ।। **किञ्च षष्ठीति** ।। **न सिध्येदिति** ।। तात्पर्यानुपपत्तिव्यतिरिक्ततद् बीजाभावात्तत्र च पक्षे षष्ठीस्मृतेरावश्यकत्वं वक्ष्यामि इति भावः। प्रतीतान्वयानुपपत्तिर्वा आनयनानुपपत्तिरेव वा बीजमस्त्वित्यत आद्य आह ।। **न तावदिति** ।।

अभेदान्वयसम्भवेनान्वयानुपपत्तिर्नेति भावेनाह ।। **त्वन्मत इति** ।। **व्युत्पत्तेरिति** ।। नीलोत्पलमित्यादावितिभावः। राजपुरुषमित्यत्र नीलोत्पलमित्यादाविव श्रुतविभक्तेः समासा दुत्पन्नत्वेन प्रातिपदिकद्वयस्य विभक्तिद्वयस्यापि समासावयवस्य लुप्तत्वेन विभक्त्यनवरुद्धप्रातिपदिकयोरित्युक्तम्। यदि व्युत्पत्तिवशादभेदान्वयस्तर्हि नीलघट इत्यादावपि रूपरूप्यभेदधीः स्यादित्यत आह ।। **नीलेति** ।। **लक्षणेति** ।। नीलाश्रये लक्षणेत्यर्थः।

### तर्कताण्डवम्

**नापि राज्ञोऽस्मदादिकर्तृकानयनान्वयानुपपत्त्या लक्षणा। राजपुरुषस्तिष्ठतीत्यादौ तदभावात्।**

**तस्माद्राजपदस्य सम्बन्धिनि निरूढतात्पर्यानुपपत्त्यैव निरूढलक्षणा वाच्या। इह चोक्ततात्पर्यग्राहकस्यान्यस्य अभावाद्राजपदस्य तत्पुरुषस्थत्वज्ञानमेव तद्ग्राहकं वाच्यम्। तज्ज्ञानं च विग्रहस्थषष्ठीस्मृतिं विना नेति कथं तदस्मृतिः। षष्ठीलोपानभिज्ञस्य तु राजपदे शक्तिभ्रमात्तदर्थधीः।**

## न्यायदीपः

द्वितीयं निराह ॥ **नापीति** ॥ एवं प्रसक्तं निरस्य प्रतिज्ञातं सहेतुकमुपसंहरति ॥ **तस्मादित्यादिना** ॥ लोपाज्ञस्य समासेऽर्थबोधो न स्यादित्यत आह ॥ **षष्ठीति** ॥ सुपो धातुप्रातिपदिकयोरिति विहितषष्ठीलोपानभिज्ञस्येत्यर्थः ॥ **शक्तिभ्रमादिति** ॥ राजपदं राजसम्बन्धिनि शक्तमिति भ्रमादित्यर्थः।

## तर्कताण्डवम्

**किञ्च सम्बन्धलक्षणापक्षे त्वन्मते नामार्थयोरभेदान्वयात् सम्बन्धपुरुषयोरभेदधीः स्यात्। सम्बन्धिलक्षणापक्षे तु राजसम्बन्धिपुरुष इति कर्मधारयस्येव राजपुरुष इत्यादितत्पुरुषस्यापि राजसम्बन्धिपुरुषयोरभेदोर्थः स्यात् न च तद्युक्तम्। राज्ञः पुरुष इति व्यास इव तत्समनार्थे समासेपि राजपुरुषयोः सम्बन्धस्यैवानुभवात् ॥**

**यत्तु सम्बन्धिलक्षणापक्षे सम्बन्धिपुरुषयोरभेदात् कर्मधारयापत्तिरिति।**

**तन्न। सम्बन्धिलक्षणायाः स्वोपजीव्यतत्पुरुषाघातकत्वात्। तदेवं विभक्तिर्व्यासे श्रुता सम्बन्धबोधिका समासे तु लुप्ता स्मृतेत्येव भेदः। अत एव भाष्ये समासाद्व्यासे सुबलोपादिरेव विशेष इत्युक्तम्॥**

## न्यायदीपः

लक्षणापक्षे बाधकं चाह ॥ **किञ्चेति** ॥ **स्वोपजीव्येति** ॥ तत्पुरुषसमासं ज्ञात्वा राजपदं राजसम्बन्धिलक्षकमित्युपेयत्वेन तदुपजीविनः कथं तद् बाधकत्वम्। ''सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति'' शाब्दिकन्यायादिति भावः। एवं हि व्याससमासयोर्भेदो न स्यात्।

उभयत्र विभक्त्यैव सम्बन्धाभिधानादिति चोद्यं परिहरन् किञ्च षष्ठीस्मृत्यभाव इत्यादिनोक्त-मुपसंहरति ।। **तदेवमिति** ।। भाष्ये महाभाष्ये।

### तर्कताण्डवम्

तस्माद्राजपुरुष इत्यादौ पूर्वपदे अर्धपिप्पलीत्यादावुत्तरपदे लक्षणेति तार्किकादिमतमयुक्तम्।

नापि – समासे पदानि वर्णवन्निरर्थकानि। तस्माज्जहत्स्वार्था वृत्तिरिति राजसम्बन्धिपुरुषेऽखण्डशक्तिरिति वैयाकरणमतं युक्तम्।

अवयवार्थानुभवात्। उक्तरीत्यान्य-लभ्यतयाऽखण्ड-शक्तिकल्पकाभावाच्च। वाक्यस्यापि स्वार्थेऽखण्डशक्ति-प्रसङ्गाच्च ।।

अत एव समर्थसूत्रे भाष्ये – वृत्तेर्जहदजहत्वेन द्वैविध्य-मुक्त्वा आद्यपक्षेपि ''जहदप्यसौ स्वार्थं नात्यन्तं जहाति। किन्तु परार्थविरोधिनमेव स्वार्थम्। यथा तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति। न तु हिक्कितहसित-कण्डूयितानि'' इत्यादिना वृत्तौ विग्रह इवासंसृष्टार्थ-परत्वाभावेऽपि पांसुपिण्डवत्संसृष्टार्थपरत्वमस्तीत्युक्तत्वात् जहत्पक्षोप्यजहत्पक्ष एव प्रवेशितः।

अत एव पदमञ्जर्यां च ''अन्ये तु जहत्स्वार्थावृत्तिरिति वदन्तो वृत्तिपदानामानर्थक्यमेवाहुः, तन्न रोचामहे'' इत्यादिना द्वितीयपक्ष एव सिद्धान्तितः ।।

## न्यायदीपः

परदूषणमुपसंहरति ॥ **तस्मादिति** ॥ **अर्धपिप्पलीति** ॥ पिप्पल्या अर्धं अर्धपिप्पलीति ‘‘अर्धं नपुंसकं’’ इत्यर्धपदस्य षष्ठ्यन्तेन समासे ‘‘उपसर्जनं पूर्वं’’ इति पूर्वनिपातादुत्तरपदे लुप्तषष्ठ्यन्ते लक्षणेत्यर्थः। तस्मान्निरर्थकत्वात् जहत्स्वार्था परित्यक्तावयवार्था वृत्तिः समास इत्यर्थः।

॥ **उक्तरीत्येति** ॥ भङ्गादौ वा वस्तुतस्त्वित्यादिना वोक्तरीत्येत्यर्थः ॥ **अत एवेति** ॥ अवयवार्थानुभवादेवेत्यर्थः। द्वितीयस्य प्रथमे पादे ‘‘समर्थः पदविधिः’’ इति सूत्रे महाभाष्य इत्यर्थः ॥ **वृत्तेरिति** ॥ समासस्येत्यर्थः।

## तर्कताण्डवम्

**नच छिद्रेतरत्वादिवदन्वयप्रकारतया सबन्धभानं शाब्द बोधे वृत्त्यनुपस्थितस्यान्वयाप्रकारत्वात्। छिद्रेतरत्वमपि न प्रकारः। तत्र प्रवृत्तिस्तु सन्निहित इव योग्यत्वात्। तस्मात् तत्पुरुषे योगरूपा मुख्यवृत्तिरेव।**

**अत एव श्रुतौ ‘‘तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षते। एतमेव सन्तं’’ इति षष्ठीतत्पुरषे वामदेवशब्दे, सूत्रे च द्युभ्वाद्यायतनशब्दे, अनुव्याख्याने च –**

**‘‘दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः।**
**गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः’’।**

**इति नारायणशब्दे,**

**‘‘वाक्यार्थोपि हि वाक्यार्थशब्देनैवोदितो भवेत्’’।**

**इति वाक्यार्थशब्दे चाभिधैवोक्ता।**

सुधायां च ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठीत्युक्तम्। यथा योगो यथा कुम्भकारः औपगवः राजपुरुष इति तत्पुरुषे योगरूपा मुख्यवृत्तिरेवोक्ता। श्रुतावाचक्षत इत्यनेन सूत्रे च समन्वयसूत्रस्थसंशब्देन मुख्यैव वृत्तिरुक्ता।

तत्पुरुषे लक्षणादिभङ्गः ॥७३॥

## न्यायदीपः

ननु सम्बन्धबोधार्थं न लुप्तविभक्तिस्मृतिरावश्यकी। प्रकारान्तरेणापि सम्बन्धबोधसम्भवादित्याशङ्क्य निराह ॥ **नचेति** ॥ यथा घटेन जलमाहरेत्यत्र घटपदेन छिद्रेतरत्वप्रकारिका धीर्जायते। अन्यथा छिद्रेतरघटे प्रवृत्तिर्न स्यात्। तथाच प्रकृतेपि राजसम्बन्धीपुरुष इति राजपुरुषान्वये प्रकारतया सम्बन्धस्य भानमित्यर्थः। दृष्टान्तं च निराह ॥ **छिद्रेति** ॥ **सन्निहित इति** ॥ सन्निहिते यथेत्यर्थः।

॥ **श्रुताविति** ॥ ऐतरेयोपनिषदि। तं प्रकृतप्राणनामकं, यत्-यस्मात्, नो-आस्माकं, वामः-मनोहरः। देववाम इति वक्तव्ये वामदेव इति परनिपातो निरुक्तिबलाद्ध्येयः। वामदेवशब्देभिधैवोक्तेत्यन्वयः।

॥ **सूत्रे चेति** ॥ ''द्युभ्वाद्यायतनं स्वशब्दात्'' इति व्याससूत्रे च द्युभ्वादेरायतनं द्युभ्वाद्यायतनमिति शब्देऽभिधैवोक्तेत्यन्वयः। अनुव्याख्याने च नारायणशब्दे वाक्यार्थशब्दे चाभिधैवोक्तेत्यर्थः ॥ **तत इति** ॥ अरविरुद्धत्वादित्यर्थः।

॥ **तद्वानिति** ॥ नाराणामयनं नारायण इति षष्ठीतत्पुरुषो ध्येयः। नारायणशब्द इत्यादौ षष्ठीतत्पुरुष इत्यनुषञ्जनीयम् ॥ **षष्ठीत्युक्तमिति** ॥ न तु ब्रह्मकर्मत्वे ब्रह्मपदं लाक्षणिकमित्युक्तमित्यर्थः ॥ **तथेति** ॥ सुधायामेवानुमानिकपादे वृत्तिलक्षणोक्तिप्रस्तावे ''योगो यथे''त्यादिना तत्पुरुषेपि योगरूपमुख्यवृत्तिरेवोक्तेत्यर्थः। कृत्तद्धितसमासानां क्रमेणोदाहरणं कुम्भकार इत्यादि।

नन्वयं वै न इति श्रुतौ मुख्यवृत्तिरिति कुत इत्यत आह ॥ **श्रुताविति** ॥ क्रियायुक्तस्याङो

मुख्यत्वार्थकत्वादिति भावः ॥ **सूत्रे चेति** ॥ ''तत्तु समन्वयात्'' इति सर्वशब्दसमन्वयप्रतिज्ञासूत्रे संशब्देन मुख्यवृत्तिं शब्दानामुक्त्वा तस्यैव ''ज्योतिरुपक्रमादि''त्यादौ प्रपञ्चनेन वामदेवादिशब्दे मुख्यवृत्तिरेवाभिमतेत्यर्थः।

यद्वा सौत्रद्युभ्वाद्यायतनशब्दे अभिधावृत्तिरुक्तेति कुत इत्यत आह ॥ **सूत्रे चेति** ॥ द्युभ्याद्यायतनसूत्रे चेत्यर्थः। एतेन शब्दानां लक्षणां वदन्तो निरस्ता ध्येयाः।

तत्पुरुषे लक्षणादिभङ्गः ॥ ७३ ॥

***

## तर्कताण्डवम्

### ७४. अथ बहुव्रीहौ लक्षणाभङ्गः।

**यच्चोक्तं मणौ –**

**चित्रगुमानयेत्यादिबहुव्रीहौ चित्रगोपदार्थयोरन्वयबोधानन्तरं गोपदं स्वज्ञाप्यचित्रगोसम्बन्धिनस्तत्स्वामिनो लक्षकम्। चित्रपदं तु गवान्वितस्वार्थबोधकतया मुख्यार्थमेव। न तु पदद्वये एका अनेका वा लक्षणा। उक्तरीत्यैकनिष्ठैकलक्षणयैवोपपत्तेः।**

## न्यायदीपः

एवं तत्पुरुषे लक्षणापक्षं समुदायशक्तिपक्षं वृत्तिं विनान्वयप्रकारतया सम्बन्धभानपक्षं च निरस्य योगवृत्तिमुक्त्वा बहुव्रीहौ योगरूढिवृत्तिं समर्थयमानो लक्षणावादानन्तरं मण्युक्तं लक्षणापक्षमनूद्य निराह ॥ **यच्चोक्तमिति** ॥ तन्नेत्यन्वयः। मणौ बहुव्रीहिचिन्तानन्तरं तत्पुरुषचिन्तनेपीह सोपानारोहणन्यायेन योगवृत्तिस्थलचिन्तानन्तरं योगरूढिवृत्तिस्थलचिन्तनाद्व्यत्यासः।

मुख्यार्थसम्बन्धलाभायोक्तम् ।। **चित्रगोपदार्थयोरन्वयबोधानन्तरमिति** ।। चित्रपदार्थगो-पदार्थयोरभेदरूपान्वयबोधानन्तरमित्यर्थः । लक्षणाबीजं मुख्यसम्बन्धमाह ।। **स्वज्ञाप्येत्यादि** ।।

सम्बन्धश्च स्वस्वामिभाव इत्याह ।। **तत्स्वामिन इति** ।। **पदद्वय इति** ।। समुदाय इत्यर्थः ।। **अनेकावेति** ।। चित्रपदार्थस्यापि परम्परया चित्रगोस्वामिसम्बन्धाच्चित्रपदेपि लक्षणा नेत्यर्थः ।

## तर्कताण्डवम्

**न च स्वामिनि समुदायशक्तिः । उक्तलक्षणयैवोपपत्त्या समुदायशक्तौ मानाभावात् । अनन्यलभ्ये हि शक्तिः ।**

## न्यायदीपः

ननु – अनन्यलभ्य एव शक्तिर्न तूक्तदिशा लक्षणादिलभ्य इति यथा तथा लक्षणावृत्ति-रप्यनन्यलभ्य एव स्वामी चेह वृत्तिं विनाऽपि लभ्योऽस्त्वित्यत आह ।। **न चेति** ।। पदार्थसंसर्गत्वेन वा विग्रहस्थ षष्ठ्यन्तयच्छब्देन वा स्वामिनो लाभः स्यात् । न चतद्द्वयमपि युक्तमित्यर्थः ।

## तर्कताण्डवम्

**न च स्वामी चित्रगोपदार्थयोः संसर्गः । येन वृत्तिं विनापि भासेत ।**

**नापि स्वामी चित्रा गावो यस्येति विग्रहस्थयच्छब्दा-र्थः । षष्ठ्यन्तेन तेनानयनकर्मत्वेनानुपस्थापनात् ।**

## न्यायदीपः

।। **अनुपस्थापनादिति** ।। स्वस्वामिभावादिसम्बन्ध एव षष्ठीशेष इति सूत्रेण षष्ठीविधानेन कर्मत्वादिबोधने सामर्थ्याभावादिति भावः ।

## तर्कताण्डवम्

**न च लक्षकत्वे लक्षणीयपदलिङ्गत्वं न स्यात्, लाक्षणिकस्य गङ्गादिपदस्य लक्षणीयपदलिङ्गाग्राहकत्वनियमादिति वाच्यम्। बहुव्रीहेर्नियतविशेषणपदत्वेन नियमतो विशेष्यपदलिङ्गत्वोपपत्तेः। अनियतलिङ्गत्वे सति विशेषणपदत्वमेव हि विशेष्यपदलिङ्गत्वे तन्त्रम्। न तु शक्तत्वे सतीत्यपि। गौरवात्। दण्डीत्यादिवाक्यस्य अशक्तस्यापि विशेष्यपदलिङ्गत्वदर्शनाच्च। तस्माद् बहुव्रीहावन्यपदार्थे लक्षणैवेति।**

**तन्न। अन्यपदार्थे समुदायशक्त्यभावे हि केशाकेशीत्यादिबहुव्रीहौ केशग्रहणप्रहरणकर्मव्यतिहारपूर्वकयुद्धरूपस्यान्यपदार्थस्यैकेनैव केशशब्देन लक्षणासम्भवेनेतरवैयर्थ्यं स्यात् ॥**

## न्यायदीपः

बाधकमाशङ्क्य निराह ॥ **न च लक्षकत्व इति** ॥ गोपदस्येति शेषः। नियतविशेषणपदत्वेनेति बहुव्रीहिः। पदसमुदायस्यान्यपदार्थवाचिपदं प्रति विशेषणपदत्वनियमादित्यर्थः ॥ **दण्डीत्यादि वाक्यस्येति** ॥ तार्किकमते प्रकृतिप्रत्ययसमभिव्याहारस्य वाक्यरूपत्वाद्वाक्ये वृत्तेरनङ्गीकाराद्वाक्यस्य अशक्तस्येत्युक्तम्।

॥ **विशेष्यपदलिङ्गत्वेति** ॥ दण्डिगृहं दण्डी पुरुषः दण्डिनीस्त्रीतिदर्शनादित्यर्थः ॥ **तस्मादिति** ॥ अनन्यलभ्यत्वाभावेन शक्तेरयोगात्। लक्षणैवोत्तरपदस्येति योज्यम्। न तु लक्षणाद्वयं समुदायशक्तिर्वेत्यर्थः। योगमग्रे साधयिष्यन् रूढिं तावद्विपक्षबाधकोक्त्या साधयति ॥ **अन्यपदार्थ इति** ॥ केशेषु केशेषु गृहीत्वेदं युद्धं प्रवर्तितमिति विग्रहे ''तत्र तेनेदमिति सरूपे'' इति बहुव्रीहिः। ''इच्कर्मव्यतिहार'' इति समासान्त इच् प्रत्ययः। ''अन्येषामपि दृश्यत'' इति पूर्वपदस्य दीर्घः।

"तिष्ठद्गुप्रभृतीनिचे" इत्यव्ययत्वे केशाकेशीति रूपम्।

## तर्कताण्डवम्

किं च विग्रहस्थयत्पदाक्षिप्ततच्छब्देनैवान्यपदार्थो मुख्यतयोच्यताम्। किं लक्षणया।

न च तच्छब्दाध्याहारादपि वरं श्रुतस्य गोशब्दस्यैव लक्षणेति वाच्यम्। आकाङ्क्षाद्यननुसन्धानेपि यच्छब्दाद् व्याप्तिबलेनैव तच्छब्दोपस्थित्याध्याहाराभावात्। तच्छब्दश्च चित्रगुमिति द्वितीयोक्तकर्मत्वान्वयार्थमविभक्तिकमेव कल्प्यते। न तु द्वितीयान्तः। तथात्वे तत्समानाधिकरणस्य गोशब्दस्यापि स्वामिपरत्वापातात्॥

न च तच्छब्दोक्तस्वामिनः कथं गोशब्दात्परद्वितीयोक्त-कर्मत्वान्वयः, सुब्विभक्तेः प्रकृत्यर्थगतस्वार्थाभिधायित्व-नियमादिति वाच्यम्।

तिङ्विभक्त्याक्षिप्तकर्तृगतसङ्ख्यावाचित्वाय सुबिति विशेषणवद् बहुव्रीहिप्रकृतिकविभक्तेर्विग्रहस्मारित-तच्छब्दार्थगतसङ्ख्यावाचित्वायाबहुव्रीहित्यपि विशेषणस्य युक्तत्वात्।

विदुषेव कथ्यत इत्यत्रेवार्थे सदृशे विद्वत्प्रातिपदिकात् परतृतीयोक्तकर्तृत्वान्वयस्य नानुयाजेषु ए यजामहं करोती-त्यत्र व्यस्तनञर्थेनुयाजव्यतिरिक्तेऽनुयाजप्रातिपदिकात् परसप्तम्युक्ताधारत्वान्वयस्य च दर्शनाच्च। विग्रह-स्मरणनैयत्ये च मानमुक्तं तत्पुरुषप्रस्तावे।

## न्यायदीपः

यत्तु नापीत्यादिनोक्तं तन्निराह ॥ **किं चेति** ॥ **तच्छब्देनैवेति** ॥ तथा च वक्ष्यमाणदिशा नयनकर्मत्वान्वयः सुशक इति भावः ॥ **अकाङ्क्षादीति** ॥ इषेत्वेत्यादौ छिनत्तीत्यादेरिवाकाङ्क्षायोग्यताद्यनुसन्धाने हि तादृशपदस्याध्याहारः। न चेह तथेति भावः।

ननु – तमिति तच्छब्दान्वये चित्रगुमिति कर्मत्वान्वयो न स्यादित्यत आह ॥ **तच्छब्दश्चेति** ॥ **सुब्विभक्तेरिति** ॥ तिङ्विभक्तेराक्षिप्तकर्तृगतसङ्ख्यावाचित्वेन तत्राव्यभिचाराय सुबिति विशेषणम् ॥ **आक्षिप्तेति** ॥ आख्यातवाच्यकृत्याक्षिप्तेत्यर्थः।

क्वाप्येवं नोपलब्धमित्यत आह ॥ **विदुषेवेति** ॥ विद्वत्सदृशेन कथ्यत इत्यर्थस्य तत्राभिमतत्वादिवार्थे सदृश इत्याद्युक्तम्।

वैदिकोदाहरणं चाह ॥ **नानुयाजेष्विति** ॥ यजति ए यजमहं करोति नानुयाजेष्वितिवाक्ये नञः पर्युदासत्वाश्रयणेनानुयाजव्यतिरिक्तेषु यजतिषु ये यजामहं करोतीत्यर्थस्य दशमान्त्यपादीयाद्याधिकरणे निर्णीतत्वादिति भावः ॥ **व्यस्तेति** ॥ समस्तत्वे अननुयाजेष्विति स्यादिति भावः।

समासश्रवणसमये विग्रहस्मरणनियमाभावात्कथं तच्छब्देन स्वामिन उक्तिरित्यत आह ॥ **विग्रहे इति** ॥ **उक्तमिति** ॥ समासश्रवणकाल इत्यादिना ग्रन्थेनेति भावः।

## तर्कताण्डवम्

**केचित्तु – बहुव्रीहौ चित्राणां गवां स्वामीत्येव विग्रहो न तु चित्रा गावो यस्येति। तथात्वे षष्ठीनिर्दिष्टस्य स्वामिनो राज्ञः पुरुषमित्यत्रेवोपसर्जनत्वेन क्रियानन्वयप्रसङ्गात्। तथा च विग्रहस्थस्मृतस्वामिपदेनैव तद्धीरिति न तत्र लक्षणेत्याहुः ॥**

**वस्तुतस्तु बहुव्रीहौ चित्रायां गवि योगोऽन्यपदार्थे रूढिरिति पङ्कजादिवद्योगरूढिः। चित्रगुसमुदायस्य अन्य-**

पदार्थे उत्सर्गतस्तात्पर्यनियमात्। तस्य च शक्तिव्याप्यत्वात्। न हि गङ्गापदस्य तीरे तन्नियमः।

## न्यायदीपः

॥ **केचित्त्विति** ॥ अत्रारुचिबीजं तु सर्वसिद्धव्युत्पत्तिविरोधाच्चित्रगुर्गोष्ठ इत्यादावयोगाच्च तच्छब्देन प्राधान्यावगत्या क्रियान्वयसम्भवाच्च नैवं कल्पनेति ज्ञेयम्।

नन्वेवं समुदायरूढ्यङ्गीकारेऽवयवार्थानुभवविरोध इत्यत आह ॥ **वस्तुतस्त्विति** ॥ रूढौ हेतुमाह ॥ **चित्रगुसमुदायस्येति** ॥ विशेषणत्वस्थले गव्यपि तात्पर्यदर्शनादुत्सर्गत इत्युक्तम्।

शक्तिव्याप्यत्वं व्यभिचाराभावेन व्यनक्ति ॥ **नहीति** ॥ समासस्थगोशब्दस्यैवान्यपदार्थतात्पर्यनियमेन तत्र शक्तिकल्पनम्भ्रान्त्वा तात्पर्यनियमादित्यस्य व्यभिचारमाशङ्क्य निराह ॥ **न चेति** ॥ **न नियम इति** ॥ अन्यपदार्थे तात्पर्यनियमोनेत्यर्थः।

## तर्कताण्डवम्

न च गोशब्दस्य गामानयेत्यादौ गव्यपितात्पर्यान्न नियमः, गुशब्दश्चैकदेशविकृतोपि गोशब्द एव, अन्यथा स्वामिमात्रं भासेत न तु गोस्वामीति वाच्यम्। व्यधिकरणत्वात्। न हि गोशब्दस्यान्यपदार्थे तात्पर्यनियमेन तस्य तत्र शक्तिः।

न च समुदायस्थगोशब्दस्य निरूढलक्षणयैवान्यपदार्थधीसम्भवेन समुदायशक्तौ मानं नेति वाच्यम्। तात्पर्यप्रयोगप्रतीतानां नियमे सत्यप्यस्वरसनिरूढलक्षणया स्वरसाभिधापलापे पटशब्दस्य व्यक्तौ, मण्डपादिशब्दसमुदायस्थपादिशब्दस्य गृहविशेषे, पङ्कजशब्दसमु-

**दायस्थजशब्दस्यापि पद्मे तया तदपलापापातात्।**

## न्यायदीपः

ननु – गोशब्दस्य तथात्वेपि गुशब्दे किमायातमित्यत आह ।। **गुशब्दश्चेति** ।। "गोस्त्रियो-रुपसर्जनस्येति" सूत्रेणौकारस्य उकाररूपह्रस्वादेशे गुशब्दनिष्पत्तेरौकाररूपैकदेशेन उकारात्मना विकृतो "प्येकदेसविकृतमनन्यवद्भवतीति" न्यायेन गोशब्द एवायमित्यर्थः।

।। **अन्यथेति** ।। गोशब्दादन्यत्व इत्यर्थः ।। **लक्षकत्वं वेति** ।। वा शब्द उपमायाम्। यथा गङ्गेशादिर्लक्षकत्वं ब्रूते न तथावयं शक्तिं ब्रूम इत्यर्थः। अलक्षकत्वमितिपाठे तु न क्लेशः ।। **किं तु समुदायस्येति** ।। तथा च न दोष इति भावः।

समुदायस्यान्वयपदार्थे तात्पर्यनियमोपि न शक्तिकल्पक इति भावेनाशङ्क्य निराह ।। **न चेति** ।। **तयेति** ।। निरूढलक्षणया समुदायशक्त्यपलापप्रसङ्गादित्यर्थः।

## तर्कताण्डवम्

**किञ्च–**

**लक्षणाया निरूढत्वं न तावन्मञ्चाः क्रोशन्तीत्यादिवत् प्रयोजनानपेक्षत्वं प्रयोगप्राचुर्यं वा। तथात्वेपि तद्वदेव मुख्यार्थानुपपत्त्यनुसन्धानसापेक्षत्वापातात्। न चेष्टापत्तिः। चित्रगुः, व्यूढोरस्कः, द्विमूर्धः, व्याघ्रपात्, प्रज्ञुः, सज्ञुः, इत्यादौ यत्र बहुव्रीहिलिङ्गमस्ति तत्र गवादिरूपमुख्यार्थानुपपत्त्यननुसन्धानेप्यन्यपदार्थप्रतीतेः।**

**नापि – घटं करोतीत्यादाविव मुख्यार्थस्य गोमच्छ-शब्दस्य कदाप्यप्रयोगो निरूढत्वम्; तत्र हि सिद्धे कारकत्व-योग्ये कृतिविषये घटावयवे कृत्युद्देश्यघटवाचको घटशब्द**

एव लक्षणया प्रयुज्यते, न तु वाचको घटावयवशब्द इति वाच्यम्। तद्वदेवानुपपत्तिसापेक्षत्वापातात्। इह च चित्रगो-स्वामीति वाचकस्यापि प्रयोगाच्च ॥

नापि – मुख्यार्थस्य तात्पर्यस्य चानुपपत्तिमनपेक्ष्य बहुव्रीहिस्थत्वमात्रेण ज्ञातत्वं वा मुख्यार्थानुपपत्तिमनपेक्ष्य बहुव्रीहिस्थत्वमात्रेण ज्ञानतात्पर्यकत्वं वा लक्षणाया निरूढत्वम्। गोशब्दाद्गोरनुपस्थितौ तस्याश्चित्रान्वयासिद्धेः।

उपस्थितौ तस्य वा तत्र तात्पर्यस्य वा त्यागहेत्व-नुपपत्त्यननुसन्धाने तन्मूललक्षणाव्याहतेः। अन्यथा पङ्कजशब्दस्थजशब्दस्यापि पद्मे निरूढलक्षणा स्यादि-त्युक्तम्।

## न्यायदीपः

एवं निरूढलक्षणेति पक्षमतिप्रसङ्गेन निरस्य विकल्पमुखेनापि निरसितुं हृदि पञ्चधा विकल्प्य क्रमेण निराह ॥ **किञ्चेत्यादिना इत्युक्तमित्यन्तेन** ॥ **चित्रगुरिति** ॥ ''गोस्त्रियोरुपसर्जनस्येति'' समासान्तो ह्रस्वः।

॥ **व्यूढोरस्क इति** ॥ ''उरप्रभृतिभ्यः कबि''ति कप्रत्ययः समासान्तः ॥ **द्विमूर्ध इति** ॥ ''द्वित्रिभ्यां ष मूर्ध्नः'' इति षः प्रत्ययः ॥ **व्याघ्रपादिति** ॥ व्याघ्रस्य पादाविव पादौ यस्य सः। ''पादस्य लोपोऽहस्त्यादिभ्यः'' इत्यन्तलोपः।

॥ **प्रज्ञुः सज्ज्ञुरिति** ॥ प्रकृष्टं जानु यस्य सः प्रज्ञुः। सम्यग्जानु यस्य सज्ज्ञुः ''प्रसम्भ्यां जानुनो ज्ञुः'' इति जानुशब्दस्य ज्ञुरादेशः ॥ **बहुव्रीहिलिङ्गमिति** ॥ ह्रस्वत्वादिकम् ॥ **इत्यादाविति** ॥ तत्र यथा घटावयवं करोतीति कदाप्यप्रयोगः एवं गोमच्छब्दस्येत्यर्थः।

घटं करोतीत्यादाविवेत्युक्तं व्यनक्ति ॥ **तत्र हीति** ॥ **अनुपपत्तीति** ॥ तत्र यथा कृत्युद्देशे घटे

कृतिविषयत्वमनुपपन्नमित्यनुसन्धानेन घटावयवं प्रत्येति। एवं चित्रगुमित्यादावपि चित्रगवानयनाद्यनुपपत्त्यनुसन्धानेनान्यपदार्थधीः स्यादित्यर्थः।

मुख्यशब्दान्तराप्रयोगोऽसिद्ध इत्याह ॥ **इहेति** ॥ बहुव्रीहिस्थत्वमात्रेणेत्युक्तमात्रपदव्यावर्त्यविवरणम् ॥ **मुख्यार्थस्येत्यादि** ॥ पक्षद्वयेपि मुख्यार्थानुपपत्तिमनुपेक्ष्येति लक्षणावादिना न वक्तुं युक्तमित्याह ॥ **गोशब्दादिति** ॥

गोरूपार्थस्योपास्थितिर्नास्त्युतास्ति आद्य आह ॥ **गोरिति** ॥ अन्त्य आह ॥ **उपस्थिताविति** ॥ गोशब्दादित्यनुषङ्गः ॥ **उक्तमिति** ॥ तात्पर्यप्रयोगप्रतीतानां नियमे सत्यपीत्यादिग्रन्थेनेति भावः।

## तर्कताण्डवम्

**ननु – तथापि यदवयवरूपमनेकं पदं न तदन्यपदार्थवृत्ति। यश्चान्यपदार्थवृत्तिः समुदायः नासावनेकः। ततश्च "अनेकमन्यपदार्थ" इति सूत्रं कथमिति चेन्न। समुदायस्याप्यनेकावयवगर्भितत्वात्। अवयवस्यापि परम्परयाऽन्यपदार्थबोधकत्वात्।**

**न हि चित्रगोपदयोरभावे चित्रगोस्वामिलाभः। त्वन्मतेपि गोपदमेव लक्षणयान्यपदार्थवृत्ति। चित्रपदं तु परम्परया तद्बोधकमात्रम्।**

**न च तर्हि चित्रपदेपि लक्षणास्त्विति वाच्यम्। पङ्कजादाविवावयवयोः समुदायस्य च मुख्यवृत्तिसम्भव उभयलक्षणायोगात्। सूत्रोक्तमन्यत्वं च समासारम्भकवृत्तिपदार्थापेक्षयेति समुदायोऽन्यपदार्थवृत्तिरेव।**

**किञ्च त्वन्मते चित्रगुमित्यत्र चित्रपदस्येव चित्रगोस्वामीत्यत्र स्वामिपदे सत्यपि चित्रगोपदयोः परम्परया**

विशिष्टस्वामिबोधोपयुक्तत्वेनान्यपदार्थवृत्तित्वाद् बहुव्रीहिसञ्ज्ञायां चित्रगुस्वामीति स्यात्। अस्माकं तु तत्र समुदायो नान्यपदार्थवृत्तिरिति न तत्सञ्ज्ञा।

तस्माद् बहुव्रीहाववयवार्थपूर्वकान्यपदार्थप्रतीतेः पङ्कजादिवद्योगरूढिरेव ॥

## न्यायदीपः

एवमुक्तदिशा अन्यपदार्थे समासपदस्य शक्तत्वेपि सूत्रमयुक्तं प्राप्नोतीति शङ्कते ॥ **नन्विति** ॥ **अनेकमिति** ॥ अन्यपदार्थे वर्तमानमनेकं सुबन्तं समस्यते स समासो बहुव्रीहिरिति सूत्रार्थः। यदवयवरूपमित्यादिना प्रागुक्तपक्षद्वयेपि सूत्रं युक्तमिति भावेनाह ॥ **समुदायस्यापीति** ॥ तवापि सममेतदित्याह ॥ **त्वन्मतेपीति** ॥

नन्वेवं चित्रपदस्याप्यन्यपदार्थलक्षकत्वमस्तु। एवं चानेकमन्यपदार्थ इति स्वरसमापद्यत इति पदद्वयलक्षणामतमाशङ्क्य निराह ॥ **न च तर्हीति** ॥ सूत्रस्वारस्यस्यानुसर्तव्यत्वपक्ष इत्यर्थः।

ननु समुदायस्य शक्तत्वे शक्यस्य स्वार्थत्वेन कथमन्यपदार्थ इत्युक्तिरित्यत आह ॥ **सूत्रोक्तमिति** ॥ तत्पुरुषस्थलेपि षष्ठ्यन्तस्यान्यपदार्थे लक्षणाङ्गीकारेण बहुव्रीहिसञ्ज्ञापत्त्या रूपविकारप्रसङ्ग इत्याह ॥ **किञ्चेति** ॥

॥ **चित्रगोस्वामीति** ॥ चित्राणां गवां स्वामीति विग्रहे चित्रगवस्वामीति वा चित्रगवीस्वामीति वा भाव्यमिति न शङ्क्यम्। समासान्तविधेरनित्यत्वादिति ज्ञेयम् ॥ **चित्रगोपदयोरिति** ॥ चित्रपदस्य चित्रत्वविशिष्टगोरूपार्थद्वारातत्स्वामिबोधोपयुक्तत्वमिव गोपदस्यापि गोरूपार्थोपस्थितिद्वारा तत्सम्बन्धिलक्षकत्वात् चित्रगोपदयोः परम्परयेत्युक्तम्। पदद्वयस्य समुदायस्येत्यर्थः ॥ **विशिष्टेति** ॥ चित्रगोसम्बन्धित्वविशिष्टेत्यर्थः। इतरव्यावृत्तेति वार्थः।

॥ **बहुव्रीहीति** ॥ "अनेकमन्यपदार्थे" इति बहुव्रीहिसञ्ज्ञायां "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वे चित्रगुस्वामीति स्यादित्यर्थः ॥ **नान्यपदार्थवृत्तिरितीति** ॥ तत्पुरुषे लक्षणानङ्गीकारादिति

भावः ॥ **सुधायामपीति** ॥ आनुमानिक पादे वृत्तिनिरूपणप्रस्तावे ''योगो यथा'' इत्युपक्रम्य ''कुम्भकारः, औपगवः, राजपुरुषः'' इति कृत्तद्धितसमासानामुदाहरणस्थले तत्पुरुष एवोदाहृत इत्यर्थः।

## तर्कताण्डवम्

**सुधायामपि राजपुरुष इति तत्पुरुष एव योग उक्तः। न तु बहुव्रीहौ। कृत्तद्धितसमासेत्युत्तरवाक्यस्थसमासशब्दोपीतरसमासपर इति बहुव्रीहौ योगरूढिस्वीकारे न सुधाविरोधः।**

**यद्वा बहुव्रीहौ समासान्तानां कबादीनामेवान्यपदार्थे शक्तिः, न तु समुदायस्य। तस्य तु योग एवेति न तद्विरोधः। यत्र न समासान्तस्तत्रापि चित्रगुरुद्रन्धिरित्यादौ ह्रस्वादिविकारोस्त्येव। भवति च विकारेणाप्यर्थभेदः उपोमन्यायेत्यादावुपशब्दस्थाकारस्यौकाररूपेण विकारेण।**

**उक्तं हि कर्मनिर्णये – ''ओ अतिशय'' इति सूत्रमिति।**

**यत्र विकारोपि न तत्रापि ह्यर्थपरः स्वरविशेषोऽस्त्येव। ''मन्त्रो हीन'' इति श्रुतौ वर्णहीनस्येव स्वरहीनस्याप्यवाचकत्वोक्तेः। भ्रातृव्यादिपदे स्वरविशेषेणैव सपत्नाद्यर्थप्रतीतेश्च। इन्द्रशत्रुरिति पदे स्वरेणैवान्यपदार्थोक्तेश्च ॥**

**तस्माद् बहुव्रीहौ शक्तिरेव।**

## न्यायदीपः

नन्वेवं तत्रैव ''नैते यौगिकाः किं नाम, रूढा एव, कृत्तद्धितासमासकरणं तु व्युत्पादनार्थमिति'' चोद्यं कृत्वा केवलयौगिकत्वस्य समासमात्रे समर्थनेन तद्विरोध इत्यत आह ॥ **कृत्तद्धितेति** ॥

सुधास्वारस्यानुरोधेन समासमात्रस्य यौगिकत्वमुपेत्य बहुव्रीहावन्यपदार्थे शक्तिं प्रकारान्तरेणाह **॥ यद्वेति ॥ कबादीनामिति ॥** "उरःप्रभृतिभ्यः कप्" इत्यादिनोक्तकप्प्रत्ययादीनामित्यर्थः **॥ नतदिति ॥** सुधाविरोध इत्यर्थः ।

**॥ उपोमन्यायेति ॥** "उपोमन्यायमन्यव उपेहि विश्वघ" इति मन्त्रे उपमन्यायेति वाच्ये उपोमन्यायेत्युक्तिरोकाररूपविकारविशेषेणातिशयार्थलाभायेत्येतत् कर्मनिर्णये भगवत्पादैरुक्तमित्यर्थः । विकारेणेत्यनन्तरमर्थभेद इत्यनुषङ्गः।

**॥ सूत्रमिति ॥** महाव्याकरणसूत्रमित्यर्थः । कथं स्वरविशेषस्यार्थविशेषपरत्वमित्यत आह **॥ मन्त्र इति ॥**

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोपराधात्"।

इति श्रुतावित्यर्थः **॥ भ्रातृव्यादीति ॥** "व्यन्सपत्ने" इतिसूत्रे भ्रातृशब्दात्सपत्नेर्थे व्यन्प्रत्ययो भवतीत्युक्ततया व्यन्प्रत्ययस्य नकारेत्सञ्ज्ञकत्वेन "ञ्नित्यादिर्नित्यमिति" विहितेनाद्युदात्तस्वरेण "परास्य भ्रातृव्यो भवती"त्यादौ शत्रुरित्यर्थप्रतीतेः । अन्यथा "तु भ्रातुर्व्यच्चेति स्वरेण सहोदरपुत्र इत्येव प्रतीतेरिति भावः।

**॥ इन्द्रेति ॥** "इन्द्रशत्रुर्वर्धस्व" इत्यत्रेन्द्रस्य शत्रुः शातयिता इति तत्पुरुषो वा, इन्द्र एव शत्रुः शातयिता यस्येति बहुव्रीहिर्वेति सन्देहे तत्पुरुषज्ञापकस्य "समासस्ये"ति सूत्रविहितान्तोदात्त-स्वरस्याभावेन "बहुव्रीहौ प्रकृत्या पूर्वपदं" इत्युक्तपूर्वपदप्रकृतिस्वरेण बहुव्रीहित्वावगमकेनान्य-पदार्थोक्तेरित्यर्थः। **शक्तिरेवेति ॥** अन्यपदार्थविषय इति योज्यम् ।

## तर्कताण्डवम्

**अत एव श्रुतौ "तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च**

**तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षते। एतमेव सन्तम्'' इति बहुव्रीहौ विश्वामित्रशब्दे, स्मृतौ च ''अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः'' इति नारायणपदे। सूत्रे चादृश्यत्वादिगुणकशब्दे भगवति मुख्यतैवोक्ता।**

**इति बहुव्रीहौ लक्षणाभङ्गः ॥७४॥**

## न्यायदीपः

**॥ तदिति ॥** यद्यस्मात्तत्प्रसिद्धमिदं विश्वमस्य प्रकृतप्राणनाम्नो भगवतो मित्रमासीत् तस्मादित्यैतरेयश्रुतावित्यर्थः। बहुव्रीहौ मुख्यतैवोक्तेत्यन्वयः **॥ ता इति ॥** आप इत्यर्थः।

''आपो नारा इति प्रोक्ता आपो वै नरसूनवः''।

इति पूर्वशेषे अपां प्रकृतत्वात्, विश्वं मित्रं यस्य नारा अयनं यस्येति विग्रहसूचनात्, सूत्रे कप्प्रत्ययप्रयोगाद् बहुव्रीहावित्युक्तम्। समन्वय सूत्रत्वात्सूत्रे मुख्यतावगम्य इति भावः।

इति बहुव्रीहौ लक्षणाभङ्गः ॥ ७४॥

***

## ७५. अथ कर्मधारयतत्पुरुषयोः मण्युक्तवैषम्यभङ्गः।

## तर्कताण्डवम्

**यच्चोक्तं मणौ – नीलोत्पलमिति कर्मधारये व्यास इव विशेषणविभक्तेरभावेन सामानाधिकरण्याभावेपि नामार्थयोरभेदान्वयव्युत्पत्तेरभेदान्वयतया भातीति न लक्षणेति।**

**तत्र ब्रूमः। अभेदान्वये न तावन्नामार्थत्वमात्रं तन्त्रम्। चैत्रस्य पुत्र इत्यत्रापि तत्प्रसङ्गात्। नाप्यविभक्तिकनामार्थत्वम्। गौरवात्। नीलं चतदुत्पलं चेति व्यासेऽभावाच्च॥**

**ननु – गुर्वपि समासव्यासानुगतं भिन्नविभक्तिरहित-नामार्थत्वं तन्त्रम्। नचैवं व्यासे विभक्तिवैयर्थ्यम्। विशेष्य-विभक्तेः कर्मत्वाद्यर्थकत्वात्। विशेषणविभक्तेश्च शब्द-साधुत्वार्थत्वादिति चेन्न। चन्द्र इव मुखं, घटो न पटः, नील उत्पलमित्यत्राप्यभेदधीप्रसङ्गात्। इवशब्दे नञ्शब्दे च विभक्तेरभावात्। नील उत्पलमित्यत्र नीलप्रातिपदिकस्य अविभक्तिकत्वेनासाधुत्वेपि गाय्यादिवट्टादिप्रत्ययमात्रवच्च नीलं प्रतीव स्वार्थमभेदं प्रत्यपि बोधकत्वावश्यम्भावात्॥**

## न्यायदीपः

नन्वस्त्वेवं तत्पुरुषे बहुव्रीहौ च शक्तिर्न लक्षणेति। कर्मधारये तु न शक्तिर्नापि लक्षणा। विनैव ताभ्यामभेदस्यान्वयतयैव भानोपपत्तेरिति मण्युक्तेरित्यत आह **॥ यच्चेति ॥ सामानाधिकरण्येति ॥** एकविभक्तिकत्वरूपशब्दसामानाधिकरण्याभावेपीत्यर्थः। अनेन शक्त्यभाव उक्तः। नामार्थयोः प्रातिपदिकार्थयोरित्यर्थः।

कर्मधारयेपि स्मृतविभक्तिमादाय सामानाधिकरण्यसत्त्वेन शक्त्यैवाभेदान्वयबोध इति वक्तुं पराभिमतं तावत्खण्डयति **॥ अभेदान्वय इत्यादिना ॥** अनन्यगत्या गौरवमपि सह्यमित्यत आह **॥ नीलं चेति ॥ भिन्नेति ॥** विरुद्धविभक्तिरहितेत्यर्थः।

**॥ न चैवमिति ॥** विरुद्धविभक्तिराहित्यस्यैव तन्त्रत्व इत्यर्थः। प्रातिपदिकमात्रप्रयोगेपि तत्सम्भवादिति भावः।

तमेव प्रसङ्गं व्यनक्ति **॥ इवेत्यादिना ॥** भिन्नविभक्तिराहित्यव्यक्त्यर्थमुक्तम् **॥ विभक्ते-**

**रभावादिति ।।** ''अवयादाप् सुप'' इति लुप्तत्वादिति भावः। विभक्तेरभावेन नीलपदं स्वार्थमेव न बोधयतीति कथं तदभेदान्वयबोधकमित्यतः तिङन्ते ष इत्यादौ प्रकृते।

## तर्कताण्डवम्

**ननु – नीलं नीलप्रातिपदिकस्यार्थः। अभेदस्त्वन्वयः। अन्वयबोधे चाकाङ्क्षा हेतुः। अविभक्तिके च नाकाङ्क्षेति नाभेदधीरिति चेन्न। तथात्वे विभक्तेः शब्दसाधुत्वमात्रार्थत्वायोगात्॥**

**किञ्चैवं समासे त्वन्मते विभक्तेरभावेनाकाङ्क्षाविरहादभेदधीर्न स्यात्। समासेऽन्यैव व्युत्पत्तिरिति चेत्तर्हि राजपुरुष इत्यत्रापि समासव्यासानुगतमेकविभक्तिरहितनामार्थत्वं सम्बन्धस्यान्वयत्वे तन्त्रम् व्यासे तु षष्ठी साधुत्वार्था राजन् पुरुष इत्यत्राकाङ्क्षाभावान्न सम्बन्धोऽन्वयतया भाति समासे त्वन्यैव व्युत्पत्तिरिति सुवचत्वेन तत्र त्वदङ्गीकृता लक्षणा न स्यात्।**

**तस्माल्लाघवात्समासे व्युत्पत्त्यन्तरे मानाभावाच्चैकविभक्तिकत्वमभेदस्यान्वयत्वे तन्त्रम्। भिन्नविभक्तिकत्वं च सम्बन्धस्यान्वयत्वे तन्त्रम्। तच्च कर्मधारये तत्पुरुषे च लुप्तं स्मर्यत इति नोभयत्रापि लक्षणेत्येव युक्तम्।**

## न्यायदीपः

नीले त्यादिप्रयोगेऽतिप्रसङ्गोद्धारमाशङ्क्य निराह ।। **नन्वित्यादिना ।। किञ्चैवमिति ।।** विभक्त्यभावप्रयुक्ताकाङ्क्षाविरहेणान्वयबोधाभावे सतीत्येवंशब्दार्थः ।। **त्वन्मत इति ।।** सिद्धान्ते तु लुप्तत्वेपि सस्मर्यमाणतोपगमादभावो नेति भावः।

**॥ अन्यैव व्युत्पत्तिरिति ॥** तथाच तत्र विभक्त्यभावेप्याकाङ्क्षासत्त्वेनान्वयबोधो नायुक्त इति भावः। तस्मादित्यस्य विवरणं लाघवादित्यादि **॥ एकेति ॥** समानेत्यर्थः **॥ नोभयत्रापीति ॥** यथा कर्मधारये लक्षणा नेत्युच्यते तथा तत्पुरुषेपि नेति कर्मधारय एव लक्षणानेत्युक्तमित्यर्थः **॥ अभेदान्वयानन्तरमिति ॥** नीलप्रातिपदिकार्थेन सहाभिन्नं नीलमित्यन्वयानन्तरमित्यर्थः।

## तर्कताण्डवम्

**एतेन विशेषणविभक्तेरभेदार्थकत्वे विभक्त्यर्थाभेदान्वयानन्तरं नीलस्य घटान्वयः स्यात्। तथा चाभिन्ननीलाभिन्नत्वेन घटधीः स्यात्।**

**न तु नीलाभिन्नत्वेनेत्यनुभवविरोध इति निरस्तम्। पदद्वयनिष्ठत्वेन ज्ञातैकविभक्तेरेवाभेदान्वयबोधकत्वेनैकनिष्ठत्वमात्रज्ञानेन तदसिद्धेः।**

**उक्तं च ब्रह्मतर्के—**

**“नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः।**
**ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति॥**
**नामादिस्थितिरेवात्र ब्रह्मणो ह्यभिधीयते।**
**सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मता।”**

**इति।**

**उक्तं च सुधायां तत्त्वमसिवाक्यस्य गौणत्वोक्तिप्रस्तावे, सामानाधिकरण्यमात्रस्य गौणत्वमिति।**

**इति कर्मधारयतत्पुरुषयोर्मण्युक्तवैषम्यभङ्गः ॥७५॥**

## न्यायदीपः

एतेनेत्युक्तमाह ॥ **पदद्वयेति** ॥ **एकेति** ॥ समानेत्यर्थः ॥ **उक्तं चेति** ॥ पदद्वयनिष्ठत्वेन ज्ञातैकविभक्तिकत्वमेवाभेदबोधे तन्त्रमित्येत ''न्नप्रतीकेन हि स'' इति सूत्रभाष्योदाहृतब्रह्मतर्काख्यग्रन्थे नाम ब्रह्मेत्युपासीतेत्यादिच्छान्दोग्यवाक्यव्याख्यानपरे उक्तमित्यर्थः।

॥ **नामेति** ॥ नामब्रह्मेत्युपासीतेत्यारभ्य प्राणोब्रह्मेत्युपासीतेत्यन्तेषु पञ्चदशसु प्रकरणेषु विद्यमाननामादिशब्दब्रह्मशब्दयोः प्रथमाविभक्त्यन्तत्वादित्यर्थः।

कथमित्यत आह ॥ **सर्वार्थेति** ॥ यस्मात्प्रथमा सर्वविभक्त्यर्थका तस्मादिह सप्तम्यर्था मता। यस्मात्सप्तम्यर्था तस्मान्नामादिस्थितिरेवात्राभिधीयत इत्यन्वयः। अत्र स्मृतावुभयोः प्रथमात्वादित्युक्तत्वादेतदवसीयत इति भावः।

॥ **सामानाधिकरण्येति** ॥ पदद्वयनिष्ठैकविभक्तिकत्वरूपसामानाधिकरण्यमात्रस्येत्यर्थः। गौणत्वममुख्याभेदपरत्वम्।

इति कर्मधारयतत्पुरषयोर्मण्युक्तवैषम्यभङ्गः ॥ ७५ ॥

***

## ७६. अथ नञर्थनिर्णयः।

**यच्चोक्तं मणौ–**

**''संसर्गाभावरूपे प्रसज्यप्रतिषेधे नञः शक्तिः। भिन्नरूपे पर्युदासे तु लक्षणा। न चान्योन्याभावे तद्वति वा शक्तिः, प्रतिषेधे तु लक्षणास्त्विवति वाच्यम्। भूतले न घटः न पचतीत्यादौ नञः केवलप्रतिषेध इव केवलान्योन्याभावे क्वाप्यप्रयोगात्।**

**यद्यपि घटो न पट इति व्यासेऽपटो घट इति समासे चान्योन्याभाववति प्रयोगोस्ति। तथापि तदपेक्षया प्रतिषेधस्य लघुत्वेन तत्रैव शक्तिकल्पनेऽन्योन्याभाववति लक्षणयैव प्रयोग उपपन्नः।**

**नचान्योन्याभाववति शक्तिश्चेच्छक्ये गौरवम्, लक्षणा चेल्लक्ष्ये गौरवमिति साम्यमिति वाच्यम्। फलमुखगौरवस्य अदोषत्वात्'' इति।**

## न्यायदीपः

एवं लक्षणानिरूपणानन्तरं तद्विषयव्यवस्थार्थं तत्पुरुषबहुव्रीही न लक्षणास्थलमित्युपपाद्य प्रसङ्गात्कर्मधारयतत्पुरुषयोर्वैषम्यं च व्युदस्येदानीं नञर्थैकदेशोपि न लक्षणविषय इति भावेन परोक्तमनूद्य निराह ॥ **यच्चेति** ॥ शब्दखण्डे कर्मधारयचिन्तानन्तरमुक्तमित्यर्थः।

॥ **भिन्नेति** ॥ अब्राह्मणमानयेत्यादौ ब्राह्मणभिन्नमित्यर्थरूपपर्युदास इत्यर्थः। ब्राह्मणत्वाभावरूपमुख्यार्थसम्बन्धः तात्पर्यानुपपत्तिश्च लक्षणाबीजमितिभावः। वैपरीत्यमाशङ्क्य निराह ॥ **न चेति** ॥ प्रतिषेधे संसर्गाभावरूप इत्यर्थः।

अन्योन्याभावे शक्तिरिति पक्षं तावन्निराह ॥ **भूतल इति** ॥ द्वितीयपक्षे प्रागुक्तपक्षेपि दोषमाशङ्क्य निराह ॥ **न चेति** ॥

॥ **गौरवमिति** ॥ यथा तथेति योज्यम् ॥ **फलमुखेति** ॥ लक्षणया विशिष्टोपस्थितौ पश्चाद्गौरवोपस्थितेरिति भावः।

## तर्कताण्डवम्

**अत्रोच्यते–**

**लोके भूतले न घट इत्यादौ वेदे च न तौ पशौ करोती–**

**त्यादावभावे लोके अपटो घट इत्यादौ वेदे च नानुयाजेष्वित्यादावन्यस्मिन्नसुरा अधर्मोऽनर्थोऽविद्येत्यादौ विरोधिनि च प्रचुरप्रयोगादिरूपस्य प्रत्येकं व्युत्पत्तिरूपस्य च शक्तौ प्रमाणस्य सत्त्वेन विनिगमकाभावादक्षादिवन्नानार्थ एव नञ्।**

## न्यायदीपः

येन मानेन प्रतिषेधे शक्तिकल्पना तेनैवान्योन्याभाववति विरोधिनि च शक्तिकल्पना शक्येति भावेनोभयत्रार्थे लौकिकवैदिकप्रयोगमानं दर्शयन्नेव शक्तिमाह ।। **लोक इत्यादिना** ।। **न ताविति** ।। तावाज्यभागौ पशुयागे न करोतीत्यर्थस्य दशमान्त्यपादे द्वितीयाधिकरणे व्यवस्थापितत्वादिति भावः।

।। **अपट इति** ।। नञो नलोपेनात्राकारमात्रश्रवणेपि नञेवायमिति भावः ।। **नानुयाजेष्विति** ।। यजतिषु येयजामहं करोति नानुयाजेष्वित्यत्रानुयाजभिन्नेषु यजतिषु यागेषु येयजामह इति मन्त्रमुच्चारयेदित्यर्थस्य दशभान्त्य एव तृतीयाधिकरणे स्थिततत्वान्मणावङ्गीकृतत्वाच्चेति भावः।

।। **अन्यस्मिन्निति** ।। अन्योन्याभाववतीत्यस्य शक्तौ प्रमाणस्य सत्त्वेनेत्यन्वयः। विरोधिनि चेति शक्तावित्यादिनान्वयः ।। **प्रयोगादिरूपस्येति** ।। प्रत्यय आदिपदार्थः।

## तर्कताण्डवम्

**न हि प्रतिषेधमात्रे व्युत्पन्नस्य पुंसोऽसुरशब्देन सुरविरोधिधीः। न चोक्तं लाघवं विनिगमकम्। प्रतियोगिनमारोप्य प्रतिषेधरूपसंसर्गाभावे प्रतियोगिरूपविरोधिनोऽनुप्रवेशेन संसर्गाभावादपि विरोधिनो लघुत्वात्।**

**किञ्च सघटं भूतलं न घट इत्यत्र कथमन्योन्याभाववति लक्षणा। सघटस्य भूतलस्य घटाभावरूपमुख्यार्था-**

**सम्बन्धात्।**

## न्यायदीपः

प्रत्येकं व्युत्पत्तिरूपस्य चेत्युक्तं व्यनक्ति ॥ **न हीति** ॥ तस्मात्तद्धीसिद्ध्यर्थं तत्रापि प्रत्येकं व्युत्पत्त्या भाव्यमिति भावः। सुरविरोधिधीरित्युपलक्षणम्। पटाद्यन्यधीरित्यपि ध्येयम्।

विनिगमकाभावादित्यसिद्धमिति शङ्कते ॥ **न चोक्तमिति** ॥ प्रतिषेधमात्रस्य लघुत्वेनेत्युक्तं लाघवमित्यर्थः। आरोप्येत्यनन्तरं क्रियमाणेति वा ज्ञायमानेति वा बोध्यम्। तेन ल्यबन्तसाधुत्वं ज्ञेयम्। प्रतियोगित्वं नाम विरोधित्वमित्युपेत्याह ॥ **प्रतियोगिरूपविरोधिन इति** ॥

नन्वेवमस्तु विरोधिन्यपि शक्तिः। अन्यस्मिंस्तु कथं शक्तिः। तत्र लाघवयुक्तेरनुक्तेरित्यतो लक्षणापक्षे बाधकोक्त्या शक्तिं साधयति ॥ **किञ्चेति** ॥

॥ **मुख्यार्थेति** ॥ नञः प्रतिषेधो हि मुख्यार्थ उक्तः, न घट इति तु घटप्रतिषेधरूपमुख्यार्थसम्बद्धं घटान्योन्याभावयुक्तं भूतलं लक्षणया बोधयतीति वाच्यम्। त्वया च घटवति भूतले घटप्रतिषेधे सत्यपि भूतलेन तस्य सम्बन्धो नेति स्वीकृतम्। प्रतियोगिदेशान्यदेशत्वरूपत्वात्सम्बन्धस्य। तथा च मुख्यार्थसम्बन्धाभावाल्लक्षणा न युक्तेत्यतः शक्तिरेवोपेयेति भावः।

## तर्कताण्डवम्

**अन्ये तु – घटो न पट इत्यादौ भेद एव नञ्। भेदस्य स्वरूपत्वे तस्य घटाभिन्नत्वेन सामानाधिकरण्यसम्भवात्। धर्मत्वेपि घटे तद्वैशिष्ट्यस्यान्वयत्वेन भानोपपत्तेः। तथा च केवलान्योन्याभावात्कथं संसर्गाभावो लघुरित्याहुः ॥**

**किञ्च– गौरवभयात्प्रमितशक्तित्यागे हरीतीकीशब्दस्य वृक्ष एव शक्तिर्लाघवात् फले तु लक्षणा, चशब्दस्यापि लाघवात् समुच्चये शक्तिः इतरेतरयोगे तु लक्षणा, एव-**

**कारस्यापि लाघवादयोगव्यवच्छेदे शक्तिः अत्यन्तायोगव्यवच्छेदे तु लक्षणेत्यादि स्यात्॥**

**नच हरीतकीशब्दे इष्टापत्तिः। फले तद्धितलुबुक्त्ययोगात्। अन्यथा गङ्गाशब्दस्यापि सम्बन्धे तद्धितस्तल्लोपश्चोच्येत।**

## न्यायदीपः

एवमन्यस्मिन्नञः शक्तिरित्यत्र स्वयं लक्षणानुपपत्तिरूपयुक्तिमुक्त्वा अन्योन्याभावे शक्तिरित्यत्र लाघवयुक्तिमन्यमुखेन दर्शयति ॥ **अन्ये त्विति** ॥ भेद इति सप्तम्यन्तम्। कथं तर्हि सामानाधिकरण्यमित्यत आह ॥ **भेदस्येति** ॥ **धर्मत्व इति** ॥ भेदस्येत्यनुषङ्गः।

अत्रारुचिबीजं तु – स्वरूपत्वपक्षे भेदवाचिघटवाचिपदयोः पर्यायतापत्त्या घटकरीरपदयोरिव सहप्रयोगायोगः। भिन्न इति प्रयोगायोगश्च। भेदं वा सविशेषाभेदं वोपेत्य भेदस्य धर्मत्वोपगमपक्षेपि सामानाधिकरण्यायोग एव। अन्यथा नीलोत्पलमित्यादौ गुणवचनेभ्यो मतुब्लोपादिर्न वाच्यः स्यात्। वैशिष्ट्यस्यान्वयतया भानोपपत्तेः। अतः स्वोक्तरीतिरेवाश्रयणीयेति।

अतिप्रसङ्गाच्च त्रिषु शक्तिरुपेयेत्याह ॥ **किञ्चेति** ॥ **फले तद्धितलुबिति** ॥ तस्य विकार इत्यनेन हरीतक्याः फलमिति फलेर्थेऽण्प्रत्यये हरीतक्यादिभ्यश्चेत्यनेन तद्धितप्रत्ययस्य लुग्विधानं न स्यादित्यर्थः। कुतो न स्यादित्यतो विपक्षे बाधकमाह ॥ **अन्यथेति** ॥

## तर्कताण्डवम्

**अपिच तदन्यतद्विरोधिनोर्लक्ष्यत्वे तीरस्यैव मुख्यार्थानुपपत्तिपुरःसरा धीः स्यात्। नचेष्टापत्तिः। अब्राह्मणस्तिष्ठतीत्यादौ प्रतिषेधानुपपत्तेरभानेपि ब्राह्मणादन्यप्रतीतेः ॥**

**किञ्च न घट इत्येवोक्ते प्रतिषेधो वा पर्युदासो वेति**

**सन्देहो न स्यात्। अस्ति चोपपदाद्यभावेऽक्षादिष्विवं सन्देहः। न हि गङ्गस्तीत्येवोक्तेपि नीरं वा तीरं वेति सन्दिह्यते। मुख्ये शब्दस्वारस्यात्।**

**तस्मात् त्रिष्वपि नञः शक्तिरेव। उक्तं चैतरेयभाष्ये अ इत्ययं शब्दः प्रस्तुतस्याभावं विरोधिनमन्यं च वदतीति। कर्मनिर्णये चासद्विलक्षणमित्यत्र अभावान्यविरोधिनां मध्ये नञः कोऽर्थ इति।**

**इति नञर्थनिर्णयः ॥७६॥**

**न्यायदीपः**

लक्षणाबीजाभावाच्च न लक्षणा युक्ता किन्तु शक्तिरेवेत्याह॥ **अपि चेति**॥ संशयान्यथानुपपत्त्या च शक्तिरेवेत्याह॥ **किञ्चेति**॥ अन्यथा नेक्षेतोद्यन्तमित्यस्य चतुर्थाद्यपादे तृतीयाधिकरणे न तौ पशौ करोति नानुयाजेष्वित्यादेर्दशमे अष्टमपादीयप्रथमाधिकरणे सन्देह पूर्वं विचारं न कुर्यादिति भावः।

यत्तु मणिरुचिदत्तयोरुक्तम् – नानुयाजेष्वित्यादौ नञ्समासपक्षेऽननुयाजेष्विति स्यात् अतोऽसमस्तं पदद्वयमेतदित्युक्त्वा; नसमास एवायं किं न स्यात् तस्मिन्पक्षेऽननुयाजेष्वितिस्यादिति दोषाभावादित्याशङ्क्य निषेधार्थकनशब्दो निषेधार्थक अकारो वा नास्त्येव येन समासेनोपपत्तिः ''अमानोनाः प्रतिषेध'' इति तु नञ एव समासवाक्यभेदेन लुप्तनकारालुप्तनकारभेदेन अ इति न इति भेदेन निर्देशः अन्यथा निषेधार्थकनकारसत्त्वे प्रसज्यप्रतिषेधार्थको नञेव न स्यात् तेनैव गतार्थत्वात् गमिकर्मीकृतनैकनीवृतानैकयशाः नैककीर्तिरित्यादौ नञ्समासेपि नञुत्तरपदस्य सवोत्तरपदत्वाभावान्नलोपाभावोपपत्तौ न तदर्थं तेषु नसमासः कल्प्यः तथैव भागवृत्तावुक्तेः एवं च नञो निषेधैकशक्तिकत्वसिद्धिरिति तदेतेनैव निरस्तम्। नञोऽर्थत्रये शक्तेः प्रामाणिकतयोपपादितत्वेनैव प्रतिषेधैकार्थवाचितयैवोक्ताकारनशब्दयोर्नञ्त्वायोगस्य सूचितत्वात्।

यदपि निषेधार्थकनशब्देनैव गतार्थत्वान्निषेधार्थकनञेव न स्यादिति। तदपि न। तथात्वे हि

निषेधार्थकमाशब्देनैव गतार्थत्वान्माङपि न स्यादिति ''अमानोना'' इत्यत्र माङ एवायं निर्देशो न माशब्दस्येत्यापि स्यात्।

यदि च माहि भूदित्यादौ माङः प्रयोगस्येव प्रथमेध्याये ''चादयोऽसत्त्व'' इत्यत्र तृतीये'' माङि लुङित्यत्र'' च वृत्त्यादावुक्तदिशा मास्तुमाभवत्वित्यादिप्रयोगस्यापि दर्शनान्माशब्दोप्यस्तीति कल्प्यते तर्हि ''नसंहतास्तस्य नभिन्नवृत्तयः'' इति भारव्यादिकाव्यनाटकालङ्कारादिग्रन्थेषु बहुशो नसमासप्रयोगस्य दर्शनात् तत्तद्व्याख्यातृभिर्नसमासोयमिति तत्र तत्र व्याख्यानाच्च नशब्दोप्यस्तु।

किञ्च समासप्रकरणे महाविभाषानुवृत्त्या समासस्येवासमासस्यसमाससमानार्थकवाक्यस्यापि सम्भवेन इत्यादौ सर्वोत्तरपदाभावेन च न लोपाभावोक्तावपि नकिरिन्द्रत्वदुत्तरः नकिष्टं घ्नन्त्यन्तितो नदूरादित्यादौ नकश्चिदित्यर्थके ''नप्रयोजनवत्त्वा''दिति ब्रह्मसूत्रे च कथं न लोपाभावः।

किञ्च नलोपसूत्रे उत्तरपदेपरत इत्यस्य सर्वोत्तरपदेपरत इति विवक्षैव न युक्ता। तथात्वे–

''अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्''।

''अनेकसूर्याभकिरीटकुण्डलः''।

इत्यादौ नलोपाभावापत्तेः।

अपि च लुप्तालुप्तनकारभेदेन पृथङ्निर्देशे फलाभावेनाकारनशब्दयोर्निषेधार्थकयो-रङ्गीकार्यत्वाच्च, समासे लुप्तनकारस्यैव सत्त्वनियमाभावेन तदभिप्रायेण नञ्प्रकृतिक एवायमकारो निर्दिष्ट इति वक्तुमशक्यत्वाच्च, अमानोनञ् इति निर्देशापाताच्च, ''चादयोऽसत्त्व'' इति सूत्रोक्तचादिगणपाठे नञं तत्र पृथक्पठित्वा ''अमानोनाः प्रतिषेध'' इति पृथक्पाठाच्च, कौमुदीप्रसादे ''अ विप्र इव भाषसे नैकः सुप्तेषु जागृया''दित्यकारनशब्दयोः प्रयोगस्य दर्शितत्वाच्च, नपदस्याभावे नञिति ञकारमनुबध्य नलोपो नञ इत्यादौ सानुबन्धनिर्देशे कृत्याभावेन सर्वत्र न शब्दस्यैव निर्देशापाताच्च, अस्त्येव पृङ्नशब्द इत्याद्यूह्यम्। अत एव सुधायां चन्द्रिकायां च ''अमानोनाः प्रतिषेध'' इति नसमास इत्युक्तम्।

इति नञर्थनिर्णयः ॥ ७६ ॥

* * *

## ७७. अथ द्वन्द्वे साहित्ये लक्षणाभङ्गः ।

### तर्कताण्डवम्

एवं द्वन्द्वेपि न लक्षणा। तथाहि – यद्यपि चार्थमात्रे द्वन्द्व उक्तः। तथापि धवं छिन्धि खदिरं चेति समुच्चये, भिक्षामट गां च पश्यसि चेदानयेत्यन्वाचये, च न समासः। तत्र द्वयोः कर्मकारकयोरन्योन्यनिरपेक्षयोरेव क्रियान्वयेन व्यपेक्षा-लक्षणसामर्थ्याभावात्। तत्रोभयत्र क्रियान्वयस्योद्देश्यत्वे समुच्चयः। एकगतस्यैवोद्देश्यत्वेन्वाचयः।

### न्यायदीपः

॥ **एवमिति** ॥ यथा तत्पुरुषादौ तथेत्यर्थः। द्वन्द्वार्थं निष्कृष्य दर्शयन् न लक्षणेत्युक्तं व्यनक्ति ॥ **तथाहीत्यादिना** ॥ **चार्थमात्र इति** ॥ ''चार्थे द्वन्द्व'' इति पाणिनिसूत्रे समुच्चयान्वाचयेतरेतरयोग-समाहाररूपार्थचतुष्टयसाधारण्येन चशब्दार्थे द्वन्द्व उक्तः द्वितीयस्य द्वितीयपादे। तथाप्यर्थद्वये समासस्तावन्नास्ति।

अन्यत्रार्थद्वये हेतूक्त्या व्यनक्ति ॥ **तथापीत्यादिना** ॥ **सामर्थ्याभावादिति** ॥ ''समर्थः पदविधि''रित्यन्योन्यसाकाङ्क्षत्वरूपसमर्थयोरेव समासविधानादिति भावः, समुच्चयान्वाचययोः को भेद इत्यत आह ॥ **तत्रेति** ॥

### तर्कताण्डवम्

धवखदिरौ छिन्धीति इतरेतरयोगे पाणिपादमित्यादि-समाहारे चान्योन्यसापेक्षयोरेव क्रियान्वयात्समासः। तत्र धर्मिप्राधान्ये इतरेतरयोगः, साहित्यरूपधर्मप्राधान्ये तु समाहारः।

**तत्र न तावदितरेतरयोगद्वन्द्वे लक्षणा। शक्ययोर्धव-खदिरयोरेव क्रियान्वयात्।**

## न्यायदीपः

अर्थद्वये च समासं हेतूक्त्याह ॥ **धवखदिराविति** ॥ यद्यप्यन्यतरेणापि छिदिक्रियानिवृत्तिरस्ति। तथापि विवक्षितस्योभयकर्मकछेदनस्यान्यतरेणासिद्धेस्तादृशक्रियायामन्योन्यसापेक्षत्वमस्तीति भावः। यत्त्वैककस्य पदस्य पदद्वयार्थवाचकत्वात्समुच्चयस्थळे न समास इति। तन्न। समासस्थळेपि तदभावस्याग्रे व्यक्तत्वात्।

एवमुपयुक्तमुक्त्वा प्रकृतमाह ॥ **तत्र न तावदिति** ॥ समाहारेपि वक्ष्याम इति तावच्छब्दः। शक्ययोः—शक्तिविषययोः।

## तर्कताण्डवम्

**अत्र मीमांसकाः—**

**इतरेतरयोगद्वन्द्वे धवखदिरौ प्रत्येकं न विभक्त्यर्थ-द्वित्वान्वययोग्यौ। न वा तत्र साकाङ्क्षौ। एकत्र द्वित्वाभावात्।**

**यद्यपि द्वित्वस्य व्यासज्यवृत्तित्वेनैकाश्रितत्वमपि, तथापि नैकत्र विश्रान्तिः। यत्र च विश्रान्तिस्तत्रैवाकाङ्क्षादि। अन्यथैकत्रापि द्वौ बहव इति स्यात्। अतो द्वन्द्वे पदशक्यस्य धवत्वादिनोपस्थितस्य धवादेर्न प्रत्येकं द्वित्वान्वयबोधः। बोधे वा धवद्वयस्य खदिरद्वयस्य च धीः स्यात्।**

**तस्मात्सहितावस्थमुभयं द्वित्वान्वययोग्यं तत्साकाङ्क्षं चेति सहितयोर्धवखदिरयोरुपस्थितये धवपदे लक्षणा प्राथम्यात्।**

न चैवं वृत्तिद्वयापत्तिः । दध्युपघातकत्वेन रूपेण काकस्येव सहितत्वेन रूपेणे धवस्यापि लक्ष्यत्वात्। न चैवं खदिरपदवैयर्थ्यम्। तेन विना साहित्याश्रयस्य खदिररूपस्य द्वितीयविशेषस्यासिद्धेः। खदिरपदाभावे हि लक्षणाविरहेण धवद्वयधीः स्यात्।

तस्माद्द्वन्द्वे साहित्ये लक्षणेति।

## न्यायदीपः

षष्ठाद्यपादीयपञ्चमनये क्षौमेवसानाविति वाक्यचिन्ताप्रस्तावे तन्त्ररत्नाद्युक्तं मणौ पूर्वपक्षदशायामुक्तं च, निष्कृष्य स्पष्टमाह॥ **इतरेतरेति**॥ **तत्रेति**॥ द्वित्वान्वये। आकाङ्क्षादीत्यादिपदेनान्वययोग्यता ग्राह्या।

॥ **अन्यथेति**॥ द्वित्वविश्रान्त्यनधिकरणेप्याकाङ्क्षादिसत्त्व इत्यर्थः॥ **वृत्तिद्वयेति**॥ धवपदं शक्त्या धवरूपमर्थं लक्षणया धवसाहित्यमुपस्थापयतीति वाच्यत्वादिति भावः।

॥ **दधीति**॥ काकेभ्यो दधि रक्ष्यतामित्यत्रेति योज्यम्॥ **न चैवमिति**॥ धवपदेनैव सहितयोर्धवखदिरयोर्लक्षणयोपस्थितौ सत्यामित्यर्थः। तदभावे कथं धीः स्यादित्यत आह ॥ **खदिरेति**॥

## तर्कताण्डवम्

अत्राहुः—

न तावद्धवखदिरयोर्युगपदुपस्थित्यर्थमेकस्मिन्धवपदे उभयलक्षणेति युक्तम्। धवशब्दश्रवणजनितसंस्कारसचिवेन खदिरशब्दसन्निकृष्टेन श्रोत्रेण युगपद्गृहीतेन समासेन स्वार्थयोर्धवखदिरयोर्धवत्वादिना युगपदुपस्थितेः।

**अन्यथा वर्णानां क्रमेणाभिव्यक्त्या घटमिति शब्दस्यापि युगपदुपस्थितिर्न स्यात्।**

**नापि द्वित्वान्वयबोधार्थं साहित्ये लक्षणा। इन्द्रियसन्निकृष्टे धवखदिरस्वरूपे इमौ धवखदिराविति प्रत्यक्षेणेव विभक्त्यापि धवादिशब्दोपस्थापिते धवादिस्वरूपे साहित्याज्ञानेपि द्वित्वबोधनात्। न हि प्रत्यक्षस्थले क्रियान्वये तुल्यद्वारत्वादिरूपसाहित्यमस्ति। ज्ञायते वा।**

## न्यायदीपः

**॥ अत्राहुरिति ॥** तार्किका इत्यर्थः। अत्रोच्यते इत्यादिना मण्याद्युक्तं निष्कृष्यानुवदन्किं युगपदुपस्थित्यर्थं लक्षणोत द्वित्वान्वयबोधार्थं यद्वा द्वित्वान्वययोग्यतावच्छेदकरूपेणोपस्थित्यर्थमथ विभक्त्यर्थान्वययोग्यनामार्थत्वाद्यर्थं किं वा व्युत्पत्तिवशात्।

आद्यं प्रत्याह **॥ न तावदिति ॥** द्वितीयं निराह **॥ नापीति ॥** दृष्टान्तासिद्धिमाशङ्क्याह **॥ न हीति ॥** यथा दर्शपूर्णमासयोः स्वर्गाख्यफलजननेऽपूर्वाख्यद्वारतौल्यरूपं साहित्यं दृष्टम्। न चैवं प्रकृतेस्तीत्यर्थः। आदिपदेन छिनत्तीत्यादिधातूपनीतफलानुकूलसजातीयविजातीयव्यापारप्रचयेन सहैकरूपेण सम्बन्धात्मकं रूपं वेति गृह्यते।

## तर्कताण्डवम्

**किञ्च व्यासज्यवृत्तिद्वित्वान्वयार्थं साहित्यापेक्षा चेत् साहित्यस्यापि व्यासज्यवृत्तित्वात्तदन्वयार्थं तादृश्यधर्मान्तरापेक्षेत्यनवस्था। एवं घटमानयेत्यादावप्येकत्वान्वयार्थमेकमात्रवृत्तिधर्मलक्षणास्यात्।**

**यद्यप्येकमात्रं द्वित्वान्वयायोग्यमिति न तत्र द्वित्वधीः।**

तथाप्येकत्वद्वयाधिकरणं द्वित्वान्वययोग्यमेव।

ननु - तथापि शाब्दी अन्वयधीर्योग्यतावच्छेदक-रूपेणोपस्थित एव भवति साहित्यमेव द्वित्वान्वययोग्यता-वच्छेदकमिति चेन्न।

योग्ये उपस्थिते शाब्दान्वयबोधसम्भवेऽवच्छेदकरूपेण इत्यस्याधिकत्वात्। अन्यथा साहित्यान्वययोग्यतावच्छेदकं द्वित्वमित्यपि सुवचत्वादन्योन्याश्रयः स्यात्॥

## न्यायदीपः

बाधोक्त्यापि न साहित्यलक्षणा युक्तेत्याह॥ **किञ्चेति**॥ अथैकत्रापि द्वौ बहव इति स्यादित्युक्तदोषमनूद्य निराह॥ **यद्यपीति**॥

द्वित्वान्वयार्थं साहित्यापेक्षावश्यम्भाविनीति तृतीयपक्षमाशङ्क्य निराह॥ **नन्वित्यादिना**॥ **तथापीति**॥ प्रत्यक्षस्थले साहित्याज्ञानेऽपि द्वित्वान्वयबोधसम्भवेपीत्यर्थः।

## तर्कताण्डवम्

नन्वेवमपि – विभक्त्यर्थान्वये नामार्थत्वं तन्त्रम्। पदा-र्थान्तरान्वये तु पदार्थत्वम्। धवखदिरस्वरूपद्वयं च न नामार्थः। मिलिते धवादिशब्दे प्रातिपदिकत्वरूपस्य नामार्थत्वस्य तदधीनपदत्वस्य चाभावात्। एकैकेन धवादिशब्देनोभयाबोधनात्।

अतो द्वित्वान्वयक्रियान्वययोर्निर्वाहकनामार्थत्व-पदार्थत्वयोर्निर्वाहाय धवपदे उभयलक्षणेति चेन्न। पदार्थत्वं हि वृत्त्या पदोपस्थाप्यत्वम्, पदतात्पर्यविषयत्वं वा। एवं

नामार्थत्वमपि। न तु वृत्त्या एकपदोपस्थाप्यत्वादिकं तत्। एकपदस्याधिकत्वात्। विद्येते च धवादिस्वरूपयोः तत्तन्नामपदार्थत्वे।

यदि च द्वन्द्वादन्यत्र दर्शनमात्रेण द्वन्द्वेप्येकस्यैव नामाद्यर्थस्य विभक्त्याद्यर्थान्वयः। तर्हि वृक्षमित्यादाव-खण्डेर्थे विभक्त्याद्यर्थान्वयदर्शनात्कुम्भकार औपगव इत्यादावप्यखण्डे तदन्वयः स्यात्।

एवमौपगवादिप्रातिपदिकान्तरार्थानवच्छिन्ने प्रत्ययार्थे तद्दर्शनाद्राजपुरुष इत्यादावपि तदनवच्छिन्नेऽर्थे स स्यात्। तत्पुरुषे राजोपलक्षिते पुरुषे तद्दर्शनात्। कर्मधारयेपि नैल्योपलक्षिते उत्पले स स्यात्।

यदि तु कृत्तद्धितादिसूत्रेण समासादेरपि प्रातिपदिक-सञ्ज्ञोक्त्या राजपुरुष इत्यादिकमप्येकं प्रातिपदिकं पदं च। तर्हि तत एव धवखदिरावित्यप्येकं प्रातिपदिकं पदं च ॥

## न्यायदीपः

चतुर्थमाशङ्कते ॥ **नन्वेवमपीति** ॥ **नामार्थत्वमपीति** ॥ प्रातिपदिकार्थमित्यर्थः ॥ **तदधीनेति** ॥ सति प्रातिपदिकत्वे ''ङ्याप्प्रातिपदिकादि''त्यधिकृत्य विहितसुप्प्रत्यये सति सुप्तिङन्तं पदमिति पदत्वविधानादिति भावः। एकैकस्य नामत्वमस्तीत्यत आह ॥ **एकैकेन चेति** ॥ **एवं नामार्थत्वमपीति** ॥ वृत्त्या प्रातिपदिकोपस्थाप्यत्वं वा प्रातिपदिकतात्पर्यविषयत्वं वा नामार्थत्वमित्यर्थः।

॥ **तत्तन्नामेति** ॥ तत्तन्नामार्थत्वतत्तत्पदार्थत्व इत्यर्थः। नामादीत्यादिपदेन पदार्थग्रहः ॥ **वृक्षमिति** ॥ वृक्षमानयेत्यादौ ॥ **अखण्डे तदन्वयः स्यादिति** ॥ तथा च कृत्तद्धितसमासानां

यौगिकत्वं न स्याद्रूढत्वमेव स्यादिति भावः। अतिप्रसङ्गान्तरं चाह ॥ **एवमिति** ॥ **तद्दर्शनात्** ॥ विभक्त्याद्यर्थान्वयदर्शनादित्यर्थः ॥ **स स्यादिति** ॥ प्रत्ययार्थान्वयः स्यादित्यर्थः।

ननु समासस्य ''कृत्तद्धितसमासा'' श्चेति प्रातिपदिकसञ्ज्ञायामेकप्रातिपदिकत्वेन प्रातिपदिकान्तरानवच्छिन्नत्वमस्तीत्यतोऽतिप्रसङ्गान्तरमाह ॥ **तत्पुरुष इति** ॥ तद्दर्शनात्। प्रत्ययार्थान्वयदर्शनादित्यर्थः ॥ **पदं चेति** ॥ एकमित्यनुकर्षः ॥ **तत एवेति** ॥ ''कृत्तद्धितसमासा'' श्चेति समासस्य प्रातिपदिकसञ्ज्ञाकथनादेवेत्यर्थः।

## तर्कताण्डवम्

**ननु विभक्तेः पदार्थतावच्छेदकधर्मेण नियतसमानाधिकरणसङ्ख्याबोधकत्वं व्यत्पन्नं न तु तेन समानाधिकरणसङ्ख्याबोधकत्वं व्युत्पन्नम्। तथात्वे घटवानय पटं चेत्यत्र घटत्वसमानाधिकरणं द्वित्वं पटेपीति तमादाय द्वित्वान्वयबोधापातात्।**

**इह च धवत्वखदिरत्वयोरपदार्थतावच्छेदकत्वे द्वित्वं तद्व्याप्यं नेति पदार्थतावच्छेदके साहित्ये लक्षणेति चेत्। विभक्तेर्हि योग्यतादिमत्प्रकृत्यर्थगतस्वार्थाभिधायकत्वमेव व्युत्पन्नं लाघवात्। न च पटावित्यत्र पटपदं प्रकृतिः, द्वन्द्वे तु धवखदिरशब्दौ प्रकृतिभूतसमासान्तर्गतविति युक्तौ धवखदिरयोर्द्वित्वाद्यन्वयक्रियान्वयौ।**

**एवं येन रूपेण प्रकृत्या स्वार्थ उपस्थापितस्तेनैव रूपेण तस्य विभक्त्यर्थाद्यन्वयो व्युत्पन्नः तथाच तत्पुरुषे उत्तरपदार्थः प्राधान्येनोपस्थापित इति तत्र तस्यैव तथैव विभक्त्यर्थान्वयः। द्वन्द्वे तु उभावपि प्राधान्येनोपस्थापिताविति तत्र द्वयोरपि तथैव विभक्त्यर्थान्वयो युक्तः।**

## न्यायदीपः

पञ्चमं पक्षमाशङ्कते ॥ **ननु विभक्तेरिति** ॥ नित्या व्याप्या तादृशधर्मसमानाधिकरणा च या सङ्ख्या तद्बोधकत्वमित्यर्थः ॥ **पटेपीति** ॥ घटपटावित्यादिप्रयोगान्तरे पटेपि द्वित्वस्य सत्त्वादिति भावः ॥ **इह चेति** ॥ द्वन्द्वस्थल इत्यर्थः।

नैवं व्युत्पत्तिः, किं त्वन्यथैव, सा चास्ति प्रकृत इति परिहरति ॥ **विभक्तेर्हीति** ॥ प्रागुक्तदोषं निराह ॥ **न च घटाविति** ॥ **प्रकृतिभूतसमासेति** ॥ ''कृत्तद्धितसमासाश्च'' इति सूत्रेण समासस्य प्रातिपदिकसञ्ज्ञोक्तेः समासादेव च ''ङ्याप्प्रातिपदिकात्'' इति सुब्विभक्त्युत्पत्त्या तां प्रति तस्य प्रातिपदिकापरपर्यायप्रकृतित्वात्प्रकृतिभूतेत्युक्तम्। साहित्यलक्षणां विनैव प्रकारान्तरेण विभक्त्यर्थ-क्रियापदार्थान्वयोपपत्तिमाह ॥ **एवमिति** ॥

## तर्कताण्डवम्

**किञ्च ''चन्द्रे कलङ्कः सुजने दरिद्रता'' इत्यादौ द्वन्द्वाभावेन साहित्येनानुपस्थितेषु प्रत्युत प्रत्येकमेकत्वेन उपस्थितेषु कलङ्कादिषु कथयन्तीत्याख्यातोक्तबहुत्वान्वयो यदा तदा किं वक्तव्यं द्वन्द्वे प्रत्येकमेकत्वेनुपस्थितयोःन धवखदिरयोर्द्वित्वान्वयः।**

**न च साहित्यं विना धवखदिरयोः प्रत्येकमन्वये धवं खदिरं च छिन्धीत्यत्रेव वाक्यभेदः स्यादिति वाच्यम्। द्वित्वस्य व्यासज्यवृत्तित्वेन तयोस्तेन सह प्रत्येकमनन्वयात्। क्रियायास्त्वव्या सज्यवृत्तित्वेन साहित्यलक्षणापक्षेपि प्रत्येकमन्वयात्।**

**यदितु साहित्याश्रयत्वेनैकीकृते छिदाजातीयान्वया-देकवाक्यता तर्हि द्वित्वाश्रयत्वेनैकीकृते तज्जातीयान्वया-**

**देकवाक्यतेति समम् ॥**

## न्यायदीपः

कैमुत्येनापि विभक्त्याद्यर्थान्वयमाह ॥ **किं चेति** ॥

"चन्द्रे कलङ्कः सुजने दरिद्रता
विकासलक्ष्मीः कमलेषु चञ्चला।
मुखाप्रसादः सधनेषु सर्वदा
यशो विधातुः कथयन्ति खण्डितम्" ॥

इत्यादावित्यर्थः।

उक्तार्थे बाधकमाशङ्क्य निराह ॥ **न चेति** ॥ **अन्वय इति** ॥ विभक्त्याद्यर्थ द्वित्वाद्यन्वये सतीत्यर्थः। प्रत्येकं विभक्त्यार्थान्वयाद्वाक्यभेदश्चोद्यतेऽथ क्रियान्वयात्।

आद्य आह ॥ **द्वित्वस्येति** ॥ अन्त्य आह ॥ **क्रियायास्त्विति** ॥ साहित्यलक्षणापक्षेपीत्युक्त-दोषाभावमाशङ्क्य साहित्यलक्षणाभावपक्षेपि स दोषो नेत्याह ॥ **यदित्विति** ॥ **तज्जातीयेति** ॥ क्रियाजातीयान्वयादित्यर्थः।

## तर्कताण्डवम्

**किञ्च चैत्रमैत्रौ गच्छत इत्यत्रैकैकमात्रवृत्तिगमनान्वयार्थं चैत्रत्वादिना द्वित्वान्वयार्थं च सहितत्वेनोपस्थाप्यत्वाद् युगपद्वृत्तिद्वयापत्तिः।**

**अपिच सहितावस्थे गमनकर्तृत्वाभावाद्गच्छत इत्याख्यातार्थसङ्ख्यान्वयो न स्यात्।**

**किञ्च लक्षणा न तावत्सहिते। खदिरसहितो धव**

**इतिवदेकवचनापत्तेः।**

**न च द्वन्द्वे साहित्याश्रयः प्रधानम्, साहित्यं त्ववच्छेदकतया गुणभूतम्, साहित्याश्रयस्य चानेकत्वाद् द्विवचनादिकं युक्तम्, खदिरसहितो धव इत्यत्र तु खदिरः साहित्यं प्रति गुणभूत इति वाच्यम्।**

**एवं हि साहित्यस्य लक्ष्यतावच्छेदकत्वेन सहितौ गच्छतीति धीः स्यात्। न तु चैत्रमैत्रौ गच्छत इति।**

**नापि साहित्ये लक्षणा। तस्यैकत्वेन सुतरामेकवचनापत्तेः।**

**न च पदवृत्तिवैचित्र्याद् द्वन्द्वे साहित्यं प्रत्युपसर्जनभूताश्रयगतसङ्ख्याभिधायिनी विभक्तिः, मधुरतरं मधुरतममित्यादौ तरबादेरुपसर्जनमाधुर्यगतस्वार्थाभिधायित्वदर्शनादिति वाच्यम्। समाहारद्वन्द्वेपि द्विवचनादिप्रसङ्गात्। इतरेतरयोगस्य समाहाराद्भेदाभावापाताच्च।**

## न्यायदीपः

बाधकाभावाच्च न साहित्ये लक्षणा युक्तेत्याह ॥ **किञ्चेत्यादिना** ॥ सङ्ख्यान्वयरूपबाधकमाह ॥ **अपि चेति** ॥ **न स्यादिति** ॥ कर्तर्येव तदन्वयादिति भावः। एकवचनापत्तिपरिहारमाशङ्क्य निराह ॥ **न च द्वन्द्व इति** ॥

साहित्यलक्षणापक्षे द्विवचनादियोगं प्रकारान्तरेणाशङ्क्य निराह ॥ **न च पदवृत्तीति** ॥ **उपसर्जनमाधुर्यगतेति** ॥ मधुरशब्दो हि माधुर्ययुक्तद्रव्यवाची। तत्र द्रव्यं गुडादि प्रधानम्। तत्र इदं मधुरमिदम् मधुरमनयोरिदमतिशयेन मधुरं मधुरतरं इदं मधुरमिदं मधुरमिदं मधुरमेतेषामिदमतिशयेन मधुरं मधुरतममिति "अतिशायने तमबिष्ठनौ" "द्विवचनविभज्योपपदे तरबीयसुना"विति

सूत्रद्वयविहितातिशयार्थकतरप्तमपोः प्रत्यययोः गुडादिद्रव्यनिष्ठं यन्माधुर्यं द्रव्यं प्रति विशेषणतयोपसर्जनभूतं च तदतिशयितमित्येवं रूपेणोपसर्जनमाधुर्यगतस्वार्थाभिधायित्वदर्शनादित्यर्थः ॥ **समाहारेति** ॥ तदाश्रयस्यानेकत्वादिति भावः।

अस्तु समाहारेपि तदाश्रयापेक्षया द्विचनादिकमिति मन्वानं प्रत्याह ॥ **इतरेति** ॥ साहित्यस्यापि समाहाररूपत्वेन समाहारस्येव साहित्यस्यापि समस्यमानपदार्थत्वे समाहाराद्भेदो न स्यादित्यर्थः।

## तर्कताण्डवम्

**नन्वेवं – धवखदिरौ छिन्दीत्यत्र धातूपनीतफलानुकूलजातीयविजातीयव्यापारप्रचयेण सहैकरूप्येण सम्बन्धात्मकं तयोः साहित्यं न प्रतीयेतेति चेत्सत्यम्। द्वित्वान्वयात्प्राङ्न प्रतीयत एव। उत्तरकालं तु विभक्त्या क्रियापदेन च सम्भूयसंसर्गमर्यादया साहित्यं बोध्यत इति साहित्यं न पदार्थः। नापि पदार्थतावच्छेदकम्। तस्मान्नेतरेतयोगद्वन्द्वे लक्षणा।**

## न्यायदीपः

साहित्यस्य लक्षणाया धवादिपदार्थत्वाभावे बाधकमाशङ्क्य निराह ॥ **नन्वेवमित्यादिना** ॥ **फलेति** ॥ द्वैधीभावरूपफलानुकूलाः ये सजातीयविजातीया व्यापारास्तत्समूहेनेत्यर्थः।

॥ **न पदार्थ इति** ॥ लक्षणया धवपदार्थो न भवतीत्यर्थः ॥ **नापीति** ॥ सहितौ छिन्धीति साहित्यप्रकारेण प्रतीत्यापत्त्या धवत्वादिप्रकारेण प्रतीत्यभावापातेनावच्छेदकमपि नेत्यर्थः।

## तर्कताण्डवम्

**समाहारद्वन्द्वे यद्यपि समाहाररूपं साहित्यं पदार्थः। अत एव तत्रैकवचनम्। तथापि तत्पुरुषप्रस्तावोक्तरीत्या**

विग्रहस्थसमाहारपदेन वा समासगतसमुदायशक्त्या वा तद्धीरिति न तत्रापि लक्षणा।

घटाविति सरूपैकशेषे वक्रदन्तश्च कुटिलदन्तश्च वक्रदन्ताविति समानार्थविरूपैकशेषे च लक्षणा प्रसक्तिरेव न। श्रुतस्य घटपदस्यैव घटान्तरेपि वक्रदन्तपदस्य च कुटिलदन्तान्तरेपि शक्तत्वात्।

पिता च माता च पितराविति भिन्नार्थविरूपैकशेषे तु विग्रहस्थमातृशब्देनैव मातृधीरिति न तत्रापि लक्षणेति।

द्वन्द्वे साहित्ये लक्षणाभङ्गः ॥७७॥

## न्यायदीपः

नन्वस्त्वेवमितरेतरयोगे समाहारसमासे तु मण्याद्युक्तदिशा लक्षणा वा शक्तिर्वेत्यत आह ॥ **समाहारेति** ॥ समाहरणं समाहारो अनेकस्यैकीकरणमिति शाब्दिकोक्तरीत्या समाहाररूपं साहित्यमित्युक्तम्।

॥ **समाहारेति** ॥ पञ्चानां फलानां समाहारः पञ्चफलीत्यादिविग्रहस्थसमाहारपदेनेत्यर्थः। एकशेषस्थलेपि न मण्याद्युक्तरीत्या लक्षणेत्याह ॥ **घटाविति** ॥ **सरूपेति** ॥ घटश्चघटश्चेति विग्रहे घटघटाविति प्राप्तौ "सरूपापाणामेकशेष एकविभक्तौ" विति सूत्रेण समानरूपाणां शब्दानां मध्ये एकस्य शेष उक्त इति सरूपैकशेष इत्युक्तम्॥ **समानार्थेति** ॥ समानार्थानामपि विरूपाणामेकशेषो वक्तव्यः इत्युक्तैकशेषे चेत्यर्थः ॥ **भिन्नार्थविरूपेति** ॥ पितामात्रेत्युक्तैकशेष इत्यर्थः।

द्वन्द्वे साहित्यलक्षणाभङ्गः ॥७७॥

***

समाप्तः समासार्थवादः

# अध्याहारवादः

## ७८. अथ शब्दाध्याहारसमर्थनम् ।

### तर्कताण्डवम्

द्वारमित्यादौ तु पिधेहिपदस्यैवाध्याहारः। नत्वर्थस्य। न वा द्वारपदस्यैव पिधाने लक्षणा। प्राभाकरास्तु–

अन्वयप्रतियोग्यलाभादन्वयानुपपत्तिरिति अन्वयप्रतियोगिनोऽर्थस्यैवाध्याहारः। न तु पदस्य।

ननु – पदबोधित एवार्थोऽन्वयप्रतियोगी। अन्यथा घटमानयेत्यादौ स्वयं स्मृतरक्तादेरन्वयधीः स्यादिति चेन्न। द्वारमित्यत्र पिधान इव तत्र रक्ते तात्पर्यग्रह इष्टापत्तेः। तदग्रहे तु तत एवान्वयाबोधात्। अन्यथा तवाऽपि दैववशात्स्मृतरक्तपदाद्रक्तोपस्थितौ रक्तान्वयधीः स्यात्।

यत्तूक्तं मणौ – क्रियाकारके हि क्रियाकारकपदोपस्थापिते एव परस्परमाकाङ्क्षतः। नतूपस्थितमात्रे। घटः कर्मत्वमानयनं कृतिरित्यदावपि अन्वयधीप्रसङ्गात्। क्रियाकर्मणोरुपस्थितौ विशेषाभावात्। तस्मादाकाङ्क्षानुरोधेन पदविशेषजन्यपदार्थोपस्थितित्वेन कारणतेति शब्दाध्याहारसिद्धिः।

किञ्च द्वारमित्यादौ सकर्मकक्रियापदानध्याहारे द्वितीया न स्यात्। न हि सकर्मकक्रियायोग्यतामात्रेण सा। घटः

**आनयनमित्यादावपि तत्प्रसङ्गात्। एवं पुष्पेभ्य इत्यत्र स्पृहयतिपदानध्याहारे चतुर्थी न स्यात्। न हि स्पृहयत्यर्थ-योगमात्रेण सा। पुष्पमिच्छतीत्यत्रापि तत्प्रसङ्गात्। एवं देवदत्त ओदनमित्यत्र क्रियापदानध्याहारे कर्तुरनभिधानात् तृतीया स्यात्। न तु प्रथमेति ॥**

## न्यायदीपः

लक्षणास्थलप्रतिषेधप्रस्तावाद् द्वारमित्यत्रापि न लक्षणेत्याह ॥ **द्वारमित्यादौ त्विति** ॥ अनुपपत्तिरितीतिशब्दो हेत्वर्थः ॥ **तवापीति** ॥ पदाध्याहारवादिनोपीत्यर्थः। प्राभाकरमुखेनैव मण्युक्तमनूद्य निरस्यति ॥ **यत्त्वित्यादिना** ॥ तन्नेत्यन्वयः।

द्वितीयाविभक्त्यादेः साधुत्वान्यथानुपपत्त्या च पदाध्याहार इत्याह ॥ **किञ्चेति** ॥ **चतुर्थी न स्यादिति** ॥ "स्पृहेरीप्सित" इति चतुर्थीविधानादिति भावः ॥ **इच्छतीत्यत्रापीति** ॥ स्पृह ईप्सायामिति स्पृहधातोर्व्याख्यानादीप्सायाश्चाप्तीच्छारूपत्वेन स्पृहयत्यर्थत्वमिच्छतेरिति भावः।

॥ **क्रियापदेति** ॥ करोतीतिपदानध्याहार इत्यर्थः ॥ **कर्तुरिति** ॥ "अनभिहिते" इत्यधिकृत्य तिङ्कृत्तद्धितसमासैरनभिहिते कर्तृकारककरणकारकादौ कर्तृकरणयोस्तृतीयेत्यादिना तृतीयादिविभक्ति-विधानादिह च तिङ्पदानध्याहारे कर्तुस्तिङनभिहितत्वात् "कर्तृकरणयोस्तृतीया" इति कर्तृवाचिदेवदत्तपदे तृतीयाविभक्ति रेव स्यान्न तु प्रथमेत्यर्थः।

## तर्कताण्डवम्

**तन्न**

**पदविशेषो ह्यन्वयविरोधी वाच्यः। तथाच अन्वय-विरोधिपदजन्यपदार्थोपस्थितित्वं शाब्दबोधकारणताव-च्छेदकं स्यात्। न च तद्युक्तम्। तदपेक्षया लघुत्वात्।**

पदजन्योपस्थितिसाधारण्ये न सामान्यत्वादावश्यकत्वाच्च अन्वयविरोध्यजन्योपस्थितित्वस्यैव तदवच्छेदकत्वात्। एवं च घटः कर्मत्वमित्यादावुपस्थितेरन्वयविरोधिपदजन्यत्वान्न ततोन्वयधीः।

द्वारमित्यादौ तु पिधानोपस्थितेरन्वयविरोध्यजन्यत्वात् ततोऽन्वयधीः॥

यच्चोक्तं – द्वितीयाविभक्त्यादेः साधुत्वाय पदाध्याहार इति।

तन्न। तथात्वे नीलो घट इत्यादौ पदाध्याहारासिद्ध्यापातात्। न हि तत्र भवतीत्यादिपदाभावेऽसाधुत्वमस्ति।

किञ्चैवमपभ्रंशात्मके वाक्ये शब्दाध्याहारो न स्यात्। तस्मादर्थस्यैवाध्याहारो न तु शब्दस्येति।

अत्रोच्यते–

स्मृतिरूपोपस्थितेरेव नास्तीत्युक्तत्वेन तस्या अविरोधिपदजन्यत्वेन हेतुत्वं वा विरोध्यजन्यत्वेन हेतुत्वं वेति चिन्तैवायुक्ता॥

यच्चोक्तं स्वमते लाघवमिति।

तन्न। अन्वयविरोधित्वं हि अन्वयबोधे स्वरूपायोग्यत्वम्। तथाचाभावद्वयगर्भितान्वयविरोध्यजन्यत्वापेक्षया तदगर्भितस्वरूपयोग्यतात्मकान्वयाविरोधिपदजन्यत्वमेव लघु॥

### न्यायदीपः

शाब्दबोधं प्रति न त्वदुक्तपदजन्योपस्थितित्वेन पदार्थोपस्थितेः कारणता। किन्त्वन्यथैव। सा चार्थाध्याहारपक्षेपि युक्तेति भावेनाह ॥ **पदेत्यादिना** ॥

प्रागुक्तदोषं निराह ॥ **एवं चेति** ॥ **तथात्व इति** ॥ द्वितीयादिविभक्त्यन्यथानुपपत्त्या पदाध्याहार-कल्पन इत्यर्थः ॥ **अपभ्रंशेति** ॥ तत्र सर्वथा साधुत्वाप्रसक्तेरिति भावः।

पूर्वपक्षमुपसंहरति ॥ **तस्मादिति** ॥ इतिशब्दस्य प्राभाकरास्त्विति पूर्वेणान्वयः ॥ **उक्तत्वेनेति** ॥ भट्टाभिमताभिहितान्वयभङ्ग उक्तत्वेनेत्यर्थः।

### तर्कताण्डवम्

**ननु द्वारमिति पदमप्यन्वयाविरोध्येव। अन्यथा तस्य कर्मत्वान्वयो न स्यात्। अन्वयाविरोधियावदन्वयप्रति-योग्युपस्थापकपदत्वेन तु न हेतुता। गौरवादिति चेन्न। ज्ञायमानं हि कारणं स्वसम्बन्धितया ज्ञातयोरेव अन्वय-बोधकम्। पक्षसाध्योभयसम्बन्धितया ज्ञातस्यैव लिङ्गस्य पक्षसाध्यसम्बन्धबोधकत्वदर्शनात्॥**

**अन्यथा वह्निसम्बन्धित्वेन ज्ञाताद्धूमाज्जातानुमितिः कदाचिद्दैवात्स्मृतघटविषयिणी स्यात्। तथा च शब्द-वृत्तिविषयत्वेनाज्ञातस्य पिधानस्य द्वाराऽन्वयं कथं शब्दो बोधयेत्। न चानुमान एवायं नियमः। सामान्ये बाधका-भावात्॥**

### न्यायदीपः

अन्वयाविरोधिपदजन्यत्वमेवोपस्थितौ शाब्दबोधहेतुतावच्छेदकमित्यस्याप्यर्थाध्याहारस्थले

न च विभक्तेः प्रकृत्यर्थगतस्वार्थाभिधायकत्वस्य व्युत्पन्नत्वाद्गङ्गायामिति सप्तम्यर्थान्वयार्थं लक्षणेति वाच्यम्। योगरूढिमनङ्गीकुर्वतस्तव मते पङ्कजपदवृत्त्यविषयस्यापि पद्मस्य पङ्कजमिति द्वितीयाविभक्त्यर्थान्वयवदुपपत्तेः ॥

## न्यायदीपः

इष्टापत्तिं मन्वानं प्रत्यनुभवविरोधे सत्यपि दोषान्तरमाह ॥ **अपि च तीरस्यापीति** ॥ **शब्दाध्याहारोस्त्विति** ॥ तेन विना पिधानाद्यर्थे तात्पर्यानिर्वाहात्। शब्दवृत्तिविषयस्यैव तात्पर्यविषयत्वादिति भावः। द्वारपदस्यैव पिधाने शक्त्यभावेपि लक्षणावृत्तिरस्तु। एवं च ज्ञायमानं हीत्यादिनोक्तदोषः कोपि नास्तीत्यत आह ॥ **द्वारशब्दस्येति** ॥ **त्वन्मत** ॥ अर्थाध्याहारवादिमते। न केवलं मन्मत इत्यपेरर्थः।

लक्षणोच्छेददोषो नेत्याशङ्क्य निराह ॥ **न चेति** ॥

## तर्कताण्डवम्

किञ्चेहापि कारकपदस्य क्रियापदोपस्थापितान्वितस्वार्थाभिधायकत्वस्य व्युत्पन्नत्वात्तदर्थमेव शब्दाध्याहारोस्तु।

किञ्चैवमन्वयस्यापि वृत्त्यविषयस्यैव तात्पर्यवशादेव शाब्दबोधसम्भवेनान्विते शक्तिर्न स्यात्। एवं घटमानयेत्युक्ते स्वयंस्मृतरक्तादेरप्यन्वयधीः स्यादित्यादिपूर्वोक्तदोषोपि सुस्थ एव।

यच्चोक्तं शब्दासाधुत्वप्रसङ्गः सर्वाध्याहाराननुगत इति। तच्छलम्। मया क्वचिच्छब्दसाधुत्वाय शब्दाध्याहारे सिद्धेऽन्यत्रापि शब्दस्यैवाध्याहारः क्लृप्तत्वादित्येवोक्तेः।

**किञ्चार्थाध्याहारे सौर्ययागेऽतिदिष्टेऽग्नये जुष्टं निर्वपामीति मन्त्रेऽग्निपदस्थाने सूर्यपदप्रक्षेपरूपाध्याहारोक्तिः, छेदने विनियुक्ते इषेत्वेत्यादिमन्त्रे छिनत्तीत्यादिशब्दाध्याहारोक्तिः, स्रुवेणावद्यतीत्यादा "वर्थाद्वा कल्पनैकदेशत्वा"दित्यादि जैमिनिसूत्रभाष्यादौ द्रवद्रव्यमित्यादिशब्दाध्याहारोक्तिश्च न स्यात्। न ह्यर्थः शब्दस्यैकदेशः॥**

## न्यायदीपः

रूढ्यविषयस्यापि योगवृत्तिविषयतास्तीति वदन्तं प्रति दोषान्तरमाह॥ **किञ्चेति** ॥ **तदर्थमेव** ॥ क्रियान्वितस्वार्थाभिधानार्थमेवेत्यर्थः ॥ **इत्यादिपूर्वोक्तेति** ॥ पदबोधित एवार्थोऽन्वयप्रतियोगीत्यादिना तन्नेत्यन्तेनोक्तेत्यर्थः ॥ **तच्छलमिति** ॥ अभिप्रायान्तरकल्पनपूर्वकदोषाभिधानरूपच्छलोत्तरमित्यर्थः।

॥ **सौर्ययागेऽतिदिष्ट इति** ॥ दर्शपूर्णमासयोः श्रुतोऽग्नये जुष्टं निर्वपामीति मन्त्रः सौर्यं चरुं निर्वपेदिति विकृतौ चोदकप्राप्तः। तत्राग्निपदस्थाने सूर्यपदप्रक्षेपेणोहितव्य इति नवमे प्रकृतौयथोत्पत्तिवचनमर्थानामिति तृतीयपादीयाद्याधिकरणेऽभिधानादिति भावः।

॥ **छेदन इति** ॥ इषेत्वेति छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीति विनियुक्त इत्यर्थः ॥ **छिनत्तीत्यादीति** ॥ "समेषु वाक्यभेदः स्यात्" इति द्वितीयाद्यपादीयषोडशेऽधिकरणे तथोक्तेरिति भावः ॥ **सूत्रेति** ॥ प्रथमाध्यायान्त्याधिकरणसूत्रे शाबरभाष्यादौ चेत्यर्थः।

॥ **अर्थादिति** ॥ सामर्थ्यादित्यर्थः। ननु तत्रापि द्रवद्रव्यरूपार्थस्यैवाध्याहारोस्त्वित्यत आह ॥ **न ह्यर्थ इति** ॥ तथाचैकदेशत्वादिति सूत्रोक्तिविरोध इति भावः।

## तर्कताण्डवम्

**यत्तु – शब्दाध्याहारे मीमांसकेन द्वारमित्युक्ते श्रोतुनैयायिकस्याभिप्रायिकपदाभावनिश्चयादन्वयधीर्न स्यात्।**

नचास्यार्थाध्याहारेपि शुकोदीरिताद् द्वारमिति वाक्याद-न्वयधीर्न स्यादिति वाच्यम्। तत्राप्यनिश्चयेन शब्दस्यार्थस्य वा नाध्याहार इत्युभयसम्मतत्वेनान्वयाबोधस्येष्टत्वादिति।

तन्न। अर्थाध्याहारपक्षेपि नैयायिकेन द्वारमित्युक्ते श्रोतुर्मीमांसकस्याभिप्रायिकार्थाध्याहाराभावनिश्चयादन्वयधीर्न स्यादिति साम्यात्। तत्रान्वयबोध एव न भवति, भवन्वा-हार्यरूपमर्थाध्याहारमाक्षिपति, मानस एव वान्वय-बोध इति कल्पनं तु शब्दाध्याहारेपि समम् ॥

तस्माद् द्वारमित्यादौ साकाङ्क्षे शब्दाध्याहार एव। यत्र तु गङ्गाशब्देन तीरमिव धूमशब्देन वह्निमभिप्रेत्य धूमोस्तीति वदति तत्र धूमशब्दस्य वह्नौ लक्षणैव। यत्र तु पुनर्धूम उक्ते वह्निं स्वयमेव ज्ञास्यतीत्यभिप्रेत्य धूमोस्तीति वदति तत्र धूमशब्दो धूमपर एव श्रोतुर्वह्निधीस्त्वनुमानात्। न तु तत्र घूमपदस्य वह्नौ लक्षणा। न वा वह्निपदाध्याहार इति ज्ञेयम्।

एतदेवाभिप्रेत्य जिज्ञासासूत्रे भाष्यकारादिभिः–

"यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम्।
वाक्यं वेति सतां नीतिः सावकाशो न तद्भवेत्"

इति कर्तव्यपदाध्याहारः, "व्यतिहारो विशिंषन्तिहीतरवद्" इति सूत्रे च सूत्रभाष्यटीकाकारैरस्तिभगवः प्राणाद्भूय इत्यादिशब्दाध्याहार एवोक्तः।

इति शब्दाध्याहारसमर्थनम् ॥७८॥

## न्यायदीपः

शब्दाध्याहारे बाधकशङ्कामनूद्य साम्येन निराह ।। **यत्त्वित्यादिना** ।। तन्नेति यच्छब्दान्वयः। परमुखेन समाधिं वाचयित्वा तदपि सममित्याह ।। **तत्रान्वयेति** ।। **मानस एवेति** ।। शाब्दत्व एव ह्यध्याहारापेक्षा मानसप्रत्यक्षत्वे तु संसर्गबोधस्य न दोष इति भावः।

।। **एतदेवेति** ।। शब्दाध्याहारो न त्वर्थाध्याहार इत्येतदेवेत्यर्थः। यत्र वाक्ये माहावाक्ये वा येन पदेन वाक्येन वा विनान्यत्रार्थान्तरेऽवसरे घटना नास्ति तत्र वाक्ये महावाक्ये वा तत्पदं तद्वाक्यं वा प्रतिष्ठितं अध्याहार्यम्। सावकाशे येन पदेन वाक्येन वा विना वाक्यस्य महावाक्यस्य वार्थघटना भवति तत्र तत्पदं तद्वाक्यं वा नाध्याहार्यमित्यर्थः।

।। **सूत्रे चेति** ।। तृतीयाध्यायतृतीयपादीयव्याससूत्रे चेत्यर्थः ।। **अस्तीति** ।। छान्दोग्ये सप्तमे प्राणप्रकरणानन्तरं अस्ति प्राणाद्भूय इति प्रश्नस्य सत्यं वाव प्राणाद्भूय इति परिहारस्य चाभावात् प्राणप्रकरणं सत्यप्रकरणमेकमिति शङ्कायां प्रश्नाद्यध्याहारेण भिन्नप्रकरणमित्युक्तत्वादिति भावः।

इति शब्दाध्याहारसमर्थनम्।। ७८।।

* * *

समाप्तः अध्याहारवादः

---

# बलाबलवादः

## ७९. अथ मीमांसकोक्तस्योपसंहारादुपक्रमप्राबल्यभङ्गः ।

### तर्कताण्डवम्

अत्र स्वार्थे शब्दात्मकानामप्युपक्रमादीनां समन्वय सूत्रे–

"उपक्रमोपसंहारावभ्यासोपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।"

इति भाष्ये च तात्पर्यलिङ्गत्वमुक्तम्। अनुव्याख्याने च–

"उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम्।
श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात्।"

इत्युपक्रमादीनां परबलीयस्त्वमुक्तम्।

न्यायविवरणे चोपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकर्तव्यं, व्याख्यानस्य पश्चात्तनत्वनियमादित्युपसंहारस्योपक्रमात्प्राबल्ये हेतुरुक्तः।

टीकायामपि – तदनुरोधेनोपक्रमादुपसंहारो बलीयान् व्याख्यानरूपत्वादित्युक्तम्। उपक्रमादित उपसंहारादेः प्राबल्ये उदाहरणादिकमस्माभिः समन्वयसूत्रे चन्द्रिकायामुक्तं द्रष्टव्यम्।

## न्यायदीपः

योग्यतावादान्ते विष्णावेववेदस्यशक्तितात्पर्येयुक्ते इति कृतप्रतिज्ञासिद्ध्यर्थं शक्तिसद्भावं तदवान्तरभेदं तत्प्रसङ्गागताममुख्यवृत्तिं च सपरिकरं द्वासप्ततिप्रकरणैर्निरूप्य विष्णौ शक्तिरित्ययमंशः समर्थितः। अथेदानीं तात्पर्ययुक्तमित्ययमंशः समर्थनीयः। स च तात्पर्यलिङ्गभूतोपक्रमादेर्बलाबल-निर्णयाधीन इति भावेन शब्दरूपस्य कथं लिङ्गत्वमित्यत उपक्रमादेस्तात्पर्यलिङ्गत्वं बलाबलं च निरूपयति॥ **अत्रेत्यादिना**॥ ब्रह्मतन्त्र इत्यर्थः॥ **समन्वयेति**॥ ''तत्तु समन्वयाद्'' इति चतुर्थसूत्रे यद्भाष्यं भगवत्पादकृतं तेनेत्यर्थः। क्वचिद्भाष्य इति सप्तम्यन्तपाठः।

॥ **अनुव्याख्यान इति**॥ ज्ञानपादीय इति योज्यम्॥ **श्रुत्यादौ**॥ श्रुतिलिङ्गवाक्यप्रकरणस्थान-समाख्यासु॥ **न्यायविवरणे चेति**॥ वैराग्यपादे प्रथमे श्रवणादित्यत्रेति ज्ञेयम्॥ **टीकायामिति**॥ अर्थतोऽनुवादोऽयम्।

## तर्कताण्डवम्

**मीमांसकास्तु – उपसंहारादुपक्रमो बलीयानित्याहुः। तन्न। तथात्वे अक्ताधिकरणादिबहुबाधप्रसङ्गात्। अक्ताधि-करणे ''अक्ताः शर्करा उपदधाति'' इत्युपक्रमेण व्याख्यान रूपस्य तेजो वै घृतमित्युपसंहारस्य, ''वासः परिधत्त'' इत्युपक्रमेण च ''एतद्वै सर्वदैवत्यं यत्क्षौमम्'' इत्युपसंहारस्यानुसरणात्।**

**वैश्वानराधिकरणे च वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इत्युपक्रमेऽसंवलिताधिकारप्रतीते ''यस्मिन्जात एतामिष्टिं निर्वपति पूत एव स तेजस्वी अन्नाद'' इत्युपसंहारेण बाधात्।**

**तद्व्यपदेशाधिकरणे च ''श्येनेनाभिचरन् यजेत''**

इत्युपक्रमस्थश्येनशब्दस्य ''यथा वै श्येन'' इत्युपसंहारेण गौणार्थस्वीकारात्।

## न्यायदीपः

बहुबाधमेव व्यनक्ति ॥ **अक्ताधिकरण इत्यादिना** ॥ सन्दिग्धे तु वाक्यशेषादित्याद्याध्याय-चतुर्थपादीयोपान्त्याधिकरणे अक्ताः शर्करा उपदधातीत्यत्र शर्कराणामञ्जनं येन केनचित्तैलादिना द्रवद्रव्येणेति प्राप्ते तेजो वै घृतमित्यर्थवादबलेन घृतेनैवाञ्जनमिति, तथा वासोवाक्ये येन केन चिद्वाससा परिधानमिति प्राप्ते वाक्यशेषबलेन क्षौमेणेति येन केनचिद्वाससा परिधानमिति प्राप्ते वाक्यशेषबलेन क्षौमेणेति सिद्धान्तितत्वादिति भावः।

॥ **वैश्वानरेति** ॥ फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वादिति चतुर्थस्य तृतीयपादे सप्तदशाधिकरणे ह्युपक्रमेण फलामिश्रपुत्रजन्ममात्रनिमित्तवतो या अधिकारप्रतीतिस्तस्याः फलबोधकोपसंहारेण फलसंवलिताधिकारोक्त्या बाधादित्यर्थः। तत्र हि यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीति वाक्यशेषस्य रात्रिसत्रन्यायेन फलपरत्वे सिद्धे सति तत्फलं किमिष्टिकर्तुः पितुरत पुत्रस्येति संशये अन्यफले कर्मण्यन्यस्य प्रेरणासम्भवात्पितुरेव प्रेर्यत्वादादधीतेत्याधानगतात्मनेपदादग्निसाध्यकर्मफलानामाधातृगामित्वनियमात्पितुरेवेति प्राप्ते वाक्यशेषे यस्मिन्जात एतामिष्टिं निर्वपति स पूत इति स्पष्टम्पुत्रगामित्वेन फलश्रवणात् पुत्रफलस्यापि पितुरभिलषितत्वेनाधानगतात्मनेपदाविरोधाच्च पुत्रगतमेव फलमित्युक्त्या ''वैश्वानरं द्वादशकपालं निर्वपति पुत्रे जात'' इति पुत्रजन्ममात्रनिमित्ताधिकारप्रतीतिमतोपि पूतपुत्रकत्वकामनावत्त्वेन संवलिताधिकारसिद्धेरिति भावः।

॥ **तद्व्यपदेशेति** ॥ तद्व्यपदेशं चेत्याद्याध्यायचतुर्थपादीयचतुर्थाधिकरणे। अभिचरन् शत्रुबाधार्थम्। ''लक्षणहेत्वोः क्रियाया'' इति शतृप्रत्ययः। तत्र हि श्येनशब्दः किं द्रव्यवचनः कर्मनामधेयं वेति सन्देहे द्रव्यविशेषे रूढत्वाद्द्रव्यवचन इति प्राप्ते ''यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त'' इति वाक्यशेषे श्येनसादृश्योक्त्या गौण्या वृत्त्या कर्मनामधेयमित्युक्तेरिति भावः।

## तर्कताण्डवम्

''नन्वक्ता'' इत्यत्रोपदधाति'' इति वर्तमानापदेशत्वेन विधेरप्रत्यक्षतया स्तुत्योन्नेयत्वादुपजीव्यस्तुतिसमर्पकत्वादर्थवादोऽनुसृतः। न तूपसंहारत्वात्। अत एव शाबरभाष्ये वर्तमानापदेशत्वादित्युक्तमिति चेन्न।

अक्तशर्करोपधानस्य वर्तमानस्याभावेनोपदधातीत्याख्यातस्य पञ्चमलकारतया वसन्ताय कपिञ्जलानालभत इत्यादाविव लिङादेरभावेपि स्तुतिनिरपेक्षमेव विधिसिद्धेरिमां स्पृष्ट्वोद्गायेदिमां हि विश्वानि भूतान्युपजीवन्तीत्यक्ताधिकरणोदाहरणान्तरे लिङ एव श्रवणाच्च।

## न्यायदीपः

नन्वत्रोपसंहारप्राबल्ये अक्ता इति वाक्योक्तिरयुक्ता। तत्रोपदधातीत्यस्य शाबरभाष्योक्तदिशा विधित्वार्थमेव वा विधित्वेपि वार्तिकोक्तरीत्या विधिपर्यवसानार्थमेव वा अर्थवादत्वेनैव वाक्यशेषानुसरणात्। तेजो वै घृतमित्यस्य पदैकवाक्यतया वाक्यैकवाक्यरूपोपसंहारत्वाभावात्। उपसंहारत्वेपि वा तस्योपक्रमनिर्णायकत्वेन वा तत्सङ्कोचकत्वेन वोपपत्त्योपक्रमाबाधकत्वात्। बाधकत्वेऽपि वा विशेषविषयत्वेनैव न तूपसंहारत्वेनेत्युपपत्तेरित्यत आद्यं तावदाशङ्क्य निराह ।। **नन्वित्यादिना** ।। अपदेशो निर्देशः। स्तुत्या तेजो वै घृतमिति घृतस्य तेजस्त्वरूपगुणाभिधानेन।

।। **उपजीव्येति** ।। स्तुतिं विना विधित्वानिर्णयात्स्तुतिरुपजीव्येत्युपजीव्यत्वेन प्राबल्यमित्युक्तं भवति ।। **अक्तशर्करेति** ।। आर्द्रक्षुद्रपाषाणेत्यर्थः।

।। **इत्यादाविवेति** ।। कपिञ्जलवाक्येऽर्थवादाभावेपि यथा लेट्कल्पनेन विधित्वमुपेयते तथेत्यर्थः। लेटः पञ्चमलकारत्वं च लट्, लिट्, लुट्, लृट्, लेट् इति निर्देशापेक्षयेति ध्येयम् ।। **इमामिति** ।। औदुम्बरीमित्यर्थः।

## तर्कताण्डवम्

नन्वथापि–

"समाप्यते विधिः कश्चित्कदाचिन्नाप्ररोचितः।
घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते"

इति वार्तिकोक्तन्यायेन प्रवृत्त्युपयुक्तप्ररोचनां विना प्रवर्तकस्य विधेरपर्यवसानात्सति चार्थवादे वसन्तायेत्यादिनिरर्थवाद-विधेरेव प्ररोचकत्वकल्पनायोगात्स्वसमाप्त्यर्थमपेक्षितत्वाद् विधिनार्थवादोनुसृतः। न तूपसंहारत्वादिति चेन्न।

उपसंहारस्याप्राबल्ये हि न विधौ परः शब्दार्थ इति न्यायेन विधेरनन्यपरत्वात्प्रधानत्वादर्थवादस्य तु वैपरीत्यात् तत्स्थघृतशब्दस्य "गुणे त्वन्यायकल्पन" इति न्यायेन घृताघृतलक्षकत्वं वा घृतस्तुतेरेवाष्टाकपालस्तुतेरेवावयव-द्वारावयविद्वादशकपालस्तुतिपरत्ववद्विशेषद्वारा सामान्य-स्तुतिपरत्वं वा स्यात् ॥

### न्यायदीपः

द्वितीयं पक्षमाशङ्कते ॥ **नन्वथापीति** ॥ **अनुमीयते** ॥ परिसमाप्यत इत्यर्थः। प्रवर्तनात्मा विधिरनुमीयत इति वार्थः ॥ **स्वसमाप्त्यर्थमिति** ॥ पुरुषप्रवृत्त्युत्पत्त्यर्थम्।

अक्ताधिकरणपूर्वपक्ष्यभिमतार्थापादनेन परिहरति ॥ **उपसंहारस्याप्राबल्ये हीत्यादिना** ॥ **पर इति** ॥ स्वार्थादन्यो लाक्षणिकादिः शब्दार्थो नेति शबरोक्तन्यायेनेत्यर्थः।

॥ **इति न्यायेनेति** ॥ "विप्रतिपत्तौ विकल्पः स्यादसमर्थत्वाद्गुमे त्वन्यायकल्पनैकदेशत्वात्" इति नावमिकाधिकरणन्यायेनेत्यर्थः। तत्रादितिः पाशान्प्रमुमोक्त्वितिमन्त्रस्थबहुवचनं प्रधानप्रति-पादकानुरोधेनावयवबहुत्वेनास्वरसं नीयते तथेहापीत्यर्थः। घृतस्तुतेरेवेत्यस्य सामान्यस्तुतिपरत्वं

वेत्यन्वयः ॥ **अष्टाकपालेति** ॥ पूर्ववन्तो विधानार्था इति नामधेयपादीयवैश्वानराधिकरणे यदष्टाकपालो भवतीत्यादेर्गुणविधित्वमाशङ्क्याष्टाकपालादेर्द्वादशकपालावयवत्वात् अष्टाकपालादिचतुरवयव-स्तुतिद्वारा द्वादशकपालरूपावयविस्तुतिपरत्वसम्भवेनार्थवादत्वोक्तेरिति भावः ॥ **विशेषेति** ॥ घृतरूपविशेषद्वाराञ्जनसाधनद्रव्यमात्ररूपसामान्यस्तुतिपरत्वमित्यर्थः।

## तर्कताण्डवम्

**किञ्च पशुमालभेतेति पशुशब्दश्च ''छागस्य वपाया मेदसोनुब्रूही''ति मन्त्रस्थछागशब्दाद्विशेषपर इति षष्ठान्ते ''छागो वा मन्त्रवर्णा''दित्यत्रोक्तम्। न चात्र मन्त्रो विधि-समाप्तिहेतुप्ररोचनार्पकः। किन्तु विधिवाक्यप्रापितकर्मसम-वेतद्रव्यप्रकाशकत्वादुपसंहार इव तद्व्याख्यानरूपः।**

**एतेनार्थवादानां विधिना पदैकवाक्यत्वाद्गामानय शुक्लामित्यत्र गोशब्दस्य शुक्लव्यक्ताविवाञ्जनक्रिया-क्षिप्तस्नेहनसमर्थद्रव्यसामान्यस्य घृते पर्यवसानं; उपसंहारस्य तु वाक्यरूपत्वान्न पदैकवाक्यतेति निरस्तम्। वाक्यैक-वाक्यतापन्नमन्त्रादपि पशुविशेषे पशुशब्दपर्यवसानस्य उक्तत्वात्।**

## न्यायदीपः

प्ररोचनार्पकत्वशङ्कानवकाशं स्थलान्तरमाह ॥ **किञ्चेति** ॥ **विधीति** ॥ विधिवाक्यप्रापितं यत्कर्मसमवेतपशुपुरोडाशादिद्रव्यं तत्प्रकारकात्वादित्यर्थः। तथैव मन्त्राधिकरणे उक्तत्वादिति भावः।

तृतीयं निराह ॥ **एतेनेति** ॥ **पदैकवाक्यत्वादिति** ॥ पदेन सहैकवाक्यत्वं पदैकवाक्यत्वं उक्तं हि नयविवेकवरदराजीयेऽर्थवादनयेप्रशस्त्याविशिष्टविधेयपरपदविशेषतैव पदैकवाक्यतेति। तथाचात्तपदाक्षिप्तद्रव्यसामान्यस्य घृतविशेषे पर्यवसायकत्वादत्तपदेन सहैकवाक्यता घृतपदस्येत्यर्थः।

यद्वा पदं सदेकवाक्यं पदैकवाक्यं तस्य भावः पदैकवाक्यता घृतपदेन रूपेण विधिशेषतेत्यर्थः।

## तर्कताण्डवम्

ननु – सन्दिग्धमुपक्रमस्थमक्ता इति पदमुपसंहारेण निर्णीयते केवलम्। न तु बाध्यते। अत एवोक्तं वार्तिके – "सन्देहमात्रं तत्र बाधितमिति"। निश्चितमुपक्रमस्थं तु नोपसंहारनुसारान्नीयते।

अत एव वेदोपक्रमाधिकरणे उपक्रमस्थो निर्णीतो वेदशब्दः उपसंहारस्थऋगादिशब्दानुसारान्न नीतः।

अत एव चाक्ताधिकरणे उपसंहारानुसारान्निर्णयो वेदोपक्रमाधिकरणे तु उपक्रमादिति तयोर्विरोध इति परास्तम्। अक्ता इत्युपक्रमस्योपसंहारविप्रतिपत्तिपर्यालोचनं विनैव स्वत एव सन्दिग्धत्वेनानिर्णायकत्वात्। त्रयो वेदा इत्युपक्रमस्य तु उपसंहारविप्रतिपत्तिपर्यालोचनेन सन्दिग्धत्वेपि स्वतः सन्दिग्धत्वाभावेन निर्णायकत्वात्॥

अत एव वार्तिके–

"विधिस्तुत्योः सदावृत्तिः समानविषयेष्यते।
तस्मादेकत्र सन्दिग्धमितरेणावधार्यते"।

इत्युक्तमिति चेन्न।

अक्ता इत्यत्राप्यक्षादिशब्दवन्नानार्थशब्दाभावे नासन्देहात्। सामान्यनिश्चयेपि विशेषसन्देहस्तूपसंहारस्थघृतेपि समः। तत्रापि नवपुराणगव्यमाक्षिकादिससन्देहसम्भवात्।

## न्यायदीपः

चतुर्थमाशङ्कते ॥ **ननु सन्दिग्धमिति** ॥ **वेदोपक्रमेति** ॥ तृतीये वेदो वा प्रायदर्शनादिति तृतीयपादीयाद्याधिकरणे "त्रयो वेदा असृज्यन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" इति श्रुतो वेदशब्दः; "उच्चैर्ऋचा क्रियते उच्चैः साम्ना। उपांशु यजुषा" इतिश्रुतोपसंहारस्थऋगादि-शब्दानुसारान्ननियतः। किन्तु विपरीत एवनियत इत्यर्थः ॥ **विप्रतिपत्तीति** ॥ विरोधपर्यालोचनमित्यर्थः।

नन्वञ्जनसाधनद्रव्यमिति सामान्यनिश्चयेपि तत्किमिति विशेषसन्देहोस्त्येवेत्यत आह ॥ **सामान्येति** ॥ **नवपुराणेति** ॥ नूतनपुरातनेत्यर्थः।

## तर्कताण्डवम्

**न च सामान्यशब्दस्य सङ्कोचमात्रं न तु बाधः सामान्यस्य प्रतिव्यक्ति समाप्तत्वादिति वाच्यम्। शाबरभाष्ये "यद्वा सामान्यमादौ विशेषोपलक्षणार्थम् यद्वा निगमने विशेषः सामान्यलक्षणार्थः आरम्भनिगमनयोः किं समञ्जसं किं वा न समञ्जसम्" इतिवाक्याभ्यां, "यच्छ्रुतिवृत्तं तत्समञ्जसम् न लक्षणावृत्तम्" इति वार्तिकेन च, सामान्य-शब्दस्य विशेषलक्षकत्वरूपबाधोक्तेः। सङ्कोचस्यापि बाधत्वाच्च।**

**अन्यथा पदाहवनीयशास्त्रयोरपि बाध्यबाधकभावो न स्यात्। तथा वाक्यप्रकरणाद्यधिकरणोक्तः प्रकरणादेः वाक्यादिना सङ्कोचोपि बाधो न स्यात्।**

## न्यायदीपः

पञ्चममाशङ्क्य निराह ॥ **न चेति** ॥ आदौ प्रथमतो विद्यमानमक्ता इति सामान्यमित्यर्थः

**।। निगमन इति ।।** उपसंहारे श्रुतो घृतादिरूपो विशेष इत्यर्थः **।। आरम्भनिगमनयोः ।।** उपक्रमोपसंहारयोः **।। पदेति ।।** जुहोतीति शास्त्रेणाहवनीये जुहोतीति शास्त्रस्य तद्व्यतिरिक्तपरत्वेन सङ्कोचकरणात्तत्र बाध्यबाधकभावो न स्यादित्यर्थः। तथाचाविशेषेण यच्छास्त्रन्यायत्वाद्विकल्पस्येति दशमाष्टमपादीयाधिकरणविरोध इति भावः।

**।। वाक्यप्रकरणेति ।।** तृतीयस्य तृतीये पादे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षा"दित्येतत्प्रपञ्चनप्रकरणे "अग्नीषोमाविदं हविरजुषेतां" इत्यादिसूक्तवाकनिगदस्थस्येदं हविरजुषेतामित्यस्याग्नीषोमावित्यनेनैकवाक्यतापन्नस्य दर्शपूर्णमासप्रकरणं स्वान्तर्गतेन्द्राग्न्यादिदेवतावाचिपदान्तरशेषत्वं न सम्पादयति किन्तु तदन्यस्येत्युक्तसङ्कोचोपि बाधो न स्यात्।

## तर्कताण्डवम्

**यदाहवनीये जुहोतीतिवाक्यस्थजुहोतेर्होकं पदहोमं त्युक्त्वेतरेषु बहुषु पर्यवसानामिति स्वल्पः सङ्कोचः। अक्ताशब्दस्येतरान्बहून्हित्वैकस्मिन्घृते पर्यवसानमिति भूयान् सङ्कोचः। आत्यन्तिकबाधस्तु ममाप्यनभिमतः।**

## न्यायदीपः

तथा राजसूयप्रकरणगताभिषेचनीयेष्टिसन्निधावक्षैर्दीव्यतीतिश्रुतविदेवनादीनामिष्टिसन्निधिरूपं स्थानं नेष्टावङ्गत्वेन विनियोजकम्। किं तु प्रकरणमेव सन्निधिबाधेन राजसूयाङ्गताबोधकम्। सन्निधिस्तु प्राकरणिकादन्यस्येत्युक्तोपि सङ्कोचो बाधो न स्यादित्यर्थः। एवं स्थानसमाख्ययोरपि बोधे न स्यादिति ध्येयम्।

प्रत्युताक्ता इत्यत्रैव बाधव्यवहारो युक्त इत्याह **।। यदाहवनीय इति ।।** बहुन्द्रवद्रव्यपदार्थान् **।। ममापीति ।।** उपसंहारेणोपक्रमबाधवादिनोप्यप्रामाण्यलक्षणो बाधो नाभिमतः। किं त्वर्थान्तरकल्पनादिरूप एवेति भावः।

## तर्कताण्डवम्

ननु तथापीहार्थवादस्य प्राबल्ये विशेषविषयत्वं हेतुः। न तूपसंहारत्वमिति चेन्न। विशेषेणोपक्रम्य सामान्येन उपसंहारेपि व्याख्यानरूपोपसंहारानुसारेणोपक्रमस्थविशेषशब्दस्य सामान्यपरताया "विष्णुशर्मा भोज्यतां ब्राह्मणः प्रशस्तः" इत्यादौ सिद्धत्वात्। श्येनेनाभिचरन्नित्याद्युपक्रमस्य यथा वै श्येन इत्यादिविशेषाविषयोपसंहारानुसरणदर्शनाच्च।

एतेनोपक्रमाकाङ्क्षितविशेषसमर्पक एवोपसंहारो न तद्बाधक इति नयविवेकोक्तं परास्तम्। भाष्यविरोधात्। विशेषासन्निहितसामान्यस्येवात्रापि वासःसामान्यान्तर्भूतानियतविशेषोपादानेन पर्यवसानसम्भवेपि क्षौमाख्यविशेषसन्निधानात्सामान्यस्य नियतविशेषोपसंहारे सङ्कोचलक्षणबाधस्यापरिहाराच्च। वासःशब्दस्य सम्बन्धिशब्दत्वाभावेन पदिन्यायाविषयत्वाच्च।

तस्मादुपसंहारप्राबल्यादेवाक्ताधिकरणसिद्धान्तो वाच्यः।

## न्यायदीपः

षष्ठमाशङ्कते ।। **ननु तथापीति** ।। **विशेषाविषयेति** ।। श्येनसादृश्यस्यानेकेषु सम्भवादयमित्यस्यापि बुद्धिस्थवाचितयानेकपरत्वसम्भवादिति भावः ।। **उपक्रमाकाङ्क्षितेति** ।। पदिन्यायेन यथा पदेन जुहोतीत्यत्र कस्य पद इत्याकाङ्क्षायां सन्निहितगोपद इत्युच्यते तथेति भावः

।। **नयविवकोक्तमिति** ।। अक्ताधिकरण उक्तमित्यर्थः ।। **भाष्येति** ।। यद्वा सामान्यमादौ

विशेषोपलक्षणार्थमित्यादिपूर्वोक्तभाष्यविरोधादित्यर्थः।

नयविवेकमते सङ्कोचलक्षणबाधोस्त्येवेति दोषान्तरं चाह ॥ **विशेषेति** ॥ बलीवर्दमानयेत्यादि-वाक्यासन्निहित्य गामानयेति सामान्यस्य यथा क्वचिद्गोविशेषे पर्यवसानं सामान्यस्यानयनादि-क्रियान्वयायोगात् तथानेकविशेषेषूपस्थितेषु क्षौमाख्यविशेष एवोपसंहारशब्दितपर्यवसानं कार्यमिति सङ्कोचरूपबाधस्यापरिहार्यत्वाच्चेत्यर्थः। पदिन्यायवैषम्यमाह ॥ **वासः शब्दस्येति** ॥

## तर्कताण्डवम्

एवं तद्व्यपदेशाधिकरणसिद्धान्तोऽपि। अन्यथा श्येनेनेत्युपक्रमस्य प्राबल्ये श्येनशब्दस्य मुख्यार्थत्वाद्य''था वै श्येनो निपत्यादत्त'' इत्याद्युपसंहारो ''रामरावणयोर्युद्धं रामरावणयोरिव'' इत्यादाविवाभेदेपि कथं चिन्नीयेत। न तूपसंहारानुसारेण श्येनशब्दो यागे गौणोङ्गीक्रियेत। एवमन्यत्राप्यूह्यम्।

तस्माद्व्याख्यानरूपत्वादुपसंहार एव प्रबलः। न चैवं वेदोपक्रमाधिकरणविरोधः। न हि ''तत्रोच्चैर्ऋचा क्रियते उच्चैः साम्ना उपांशु यजुषे ति'' उहपसंहारस्थो ऋगादिशब्दः ''त्रयो वेदा असृज्यन्त'' इत्युपक्रमस्थाद्वेदशब्दाद्वेदे लाक्षणिकः। किन्तु ऋक्छब्दादपि चरमादुच्चैः साम्नेत्यस्मात्। यदि ऋक्छब्दो मन्त्रपरः स्यात्तदा ''ऋच्यध्यूढं साम गायतीति'' ऋक्सामयोरवियोगात्सामाधारमन्त्रेष्वुच्चैष्ट्वस्योच्चैर्ऋचेत्यनेनैव प्राप्तत्वादुच्चैः साम्नेत्यस्य वैयर्थ्यं स्यात्।

अत एव ''वेदो वा प्रायदर्शना''दिति सूत्रोक्ते प्राथम्य-

**रूपप्रायदर्शनेऽपरितोषाद् ''धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः'' इति सूत्रे इदमेव हेतूकृतम्।**

## न्यायदीपः

एवमक्ताधिकरणविषयवाक्ये उपसंहारप्राबल्यमुपपाद्योपसंहृत्य प्रागुक्तद्वितीयोदाहरणेपि तदुपपादयति ॥ **एवमिति** ॥ उपसंहारप्राबल्यादेव वाच्य इत्यनुषङ्गः। एवमन्यत्रापि वैश्वानराधिकरणसिद्धान्तोप्युपसंहारप्राबल्यादेव वाच्यः। अन्यथा हि पुत्रजन्ममात्रनिमित्ताधिकारमुपक्रमप्रतीतमुपादाय यस्मिन् जात इत्युपसंहारोऽर्थवाद एव न तु फलसमर्पक इत्युपेत्यासंवलिताधिकारैवजातेष्टिरित्युपादीयेतेत्याद्यूह्यमित्यर्थः।

॥ **न चैवमिति** ॥ उपसंहारप्राबल्ये सति। तृतीयाध्यायतृतीयपादीयाद्याधिकरणे ''श्रुतेर्जाताधिकारः स्याद्'' इतिसूत्रेणोच्चैर्ऋचा क्रियते उच्चैः साम्नेत्युपसंहारे श्रवणात्तत्रक्त्वादिजातिमत एवोपादानं न तूपक्रमबलात् ऋक्छब्दो ऋक्समुदायवेदपर इति पूर्वपक्षयित्वा ''वेदो वा प्रायदर्शनादित्याद्'' सूत्रैर्वेद एव ऋगादिशब्देन ग्राह्यः त्रयो वेदा असृज्यन्त अग्नेर्ऋग्वेद इत्यादिवेदोपक्रमे वाक्ये ऋगादिशब्दानामन्ते दर्शनादित्युपक्रमप्राबल्यस्य तत्रोक्तत्वात्तद्विरोध इत्यर्थः।

धर्मोपदेशाच्च न हि द्रव्येण सबन्ध इति वक्ष्यमाणस्य सिद्धान्ते तृतीयगुणसूत्रस्योच्चैः साम्नेति साम्न उच्चैस्त्वधर्मोपदेशाच्च वेद एव ऋक्छब्दार्थः। ऋच उच्चैस्त्वोक्त्यैव साम्न उच्चैस्त्वस्य सिद्धत्वात् सामरूपद्रव्येणोच्चैस्त्वधर्मसम्बन्धो न वक्तव्य एव स्यादिति शाबरभाष्याद्युक्तमर्थं हृदि कृत्वा तात्पर्यं व्यनक्ति ॥ **यदीत्यादिना** ॥

## तर्कताण्डवम्

**किञ्चोपक्रमस्थो वेदशब्दस्त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इत्यभ्यस्तः। अभ्यासश्चोपसंहारादपि प्रबल इति तेनानुसृतः। एवं च प्रायवचनाच्चेत्यादाविवात्रापि सूत्रस्थप्रायशब्दस्य**

बाहुल्यमर्थोस्तु न तु वेदप्रायो वेदोपक्रम इति शाबर-भाष्योक्तरीत्या क्लिष्टकल्पनया प्राथम्यं प्रायशब्दार्थः ॥

किञ्च ऋग्वेदमधीमह इत्यादिलौकिकप्रयोगात् "ऋग्भिः पूर्वायां दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्येन्हः सामवेदेनास्तमयेन हीयते" इत्यादिवैदिकप्रयोगाच्च ऋगादिशब्दानां वेदवाचित्वादुपसंहारास्वारस्याभावेन उपक्रमेणोपसंहारबाधे नेदमुदाहरणम् ॥

तस्माद्वेदशब्दाभ्यासादिनैव वेदार्थत्वनिर्णयः। अन्यथा प्राभाकरमते विद्यतेऽनेनेति वेदनकरणवाचिनो वेदशब्दस्य मन्त्रवाचिऋगादिशब्दसन्निधानादक्ताशब्दस्य घृतपरत्व-वन्मन्त्रपरत्वं स्यात्।

## न्यायदीपः

ननु – धर्मोपदेशाच्चेति हेतुरभ्युच्चययुक्तित्वेनोक्तो न पूर्वारुच्येति वदन्तं प्रत्याह ॥ **किञ्चेति** ॥ **प्रबल इति** ॥ बहुवादोक्तिरूपत्वादभ्यासस्यैकवादोक्तिरूपादुपसंहारात्प्राबल्यम् बहुबाधस्य अन्याय्यत्वादिति भावः ॥ **तेनेति** ॥ अभ्यासेनोपक्रमोऽनुसृत इत्यर्थः।

कथं तर्हि प्रायदर्शनादिति सूत्रमित्यत आह ॥ **एवं चेति** ॥ **इत्यादाविवेति** ॥ "पौर्णमासी-वदुपांशुयाजःस्याद्" इति द्वितीयाध्यायद्वितीयपादीयचतुर्थाधिकरण गुणसूत्रे "तस्य वा एतस्य यज्ञस्याग्नेर्य एव शिरः हृदयमुपांशुयाजं पादावग्नीषोमीय" इति प्रधानाग्नेयादिप्रायपाठादुपांशुयाजस्यैवं विधीयत इत्यर्थोक्तेर्वार्तिके च प्रधानप्राये यत्रान्यानि प्रधानानि तत्र वचनादित्यर्थोक्तेरिति भावः।

॥ **क्लिष्टकल्पनयेति** ॥ वेदपदबाहुल्यदर्शनादित्यर्थोपेक्षया वेदप्राये वेदोपक्रमे वाक्ये निगमने ऋगादिपदानां दर्शनादित्यर्थोक्त्या प्रायपदस्योपक्रमार्थत्वस्य वेदे क्लिष्टत्वात्। अत एव वार्तिके "प्रायवचनाच्च, विषये प्रायदर्शना"दित्यादाविवह प्रायपदार्थो नेति वेद बुद्धिजनितसंस्कारव्याप्ते मनसि

ऋगादिशब्ददर्शनादिति क्लेशेन प्रायः शब्दार्थ इति भावः।

**।। ऋग्भिरिति ।।** ऋङ्नामकवेदेनेत्यर्थः। देव इत्युत्तरत्राप्यन्वेति। देवः सूर्यः। ''वेदैरशून्यस्त्रिभिरेति सूर्य'' इति वाक्यशेषात्। नेदमुदाहरणमिति छेदः **।। वेदशब्दाभ्यासादिनैवेति ।।** ऋगादिशब्दानां ऋग्वेदादौ मुख्यार्थत्वं उच्चैः साम्नेत्यस्य वैयर्थ्यान्यथानुपपत्तिश्चादिपदार्थः।

**।। अन्यथेति ।।** अभ्यासादिना अर्थानिर्णये सति। प्राभाकरमते रूढेरनङ्गीकारेण सर्वेषां यौगिकत्वाद्योगव्युत्पत्त्या मन्त्रब्राह्मणादिसाधारणो वेदशब्दो वाक्यशेषादृगादिमन्त्रपर एव स्यादित्यर्थः।

## तर्कताण्डवम्

**न च ब्राह्मणवाक्यं मन्त्रवद्विनियोजकसापेक्षं वित्तिकरणं नेति निरपेक्षब्राह्मणपरो वेदशब्द इति युक्तम्। पाकसापेक्षस्यापि पृथिवीशौक्ल्यस्य तन्निरपेक्षाबादिशौक्ल्यस्य इव शुक्लशब्दमुख्यार्थत्वेन तुल्यतया प्रतीतेः। व्याप्तिसङ्गतिसञ्ज्ञानादिसापेक्षयोरप्यनुमानशब्दयोस्तन्निरपेक्षप्रत्यक्षवत् प्रमाणशब्दमुख्यार्थत्वेन तुल्यतया प्रतीतेश्च।**

## न्यायदीपः

ननु—साधारणोपि वेदशब्दो निरपेक्षब्राह्मणपर एव न सापेक्षमन्त्रपर इति भावेन शङ्कित्वा निराह **।। नचेति ।।** ब्राह्मणवाक्यं यजेतेत्यादिविनियोजकवाक्यं विनियोगसापेक्षं सत् ज्ञानकरणं न यथाग्नेयादिमन्त्र आग्नेय्याग्नीध्रमुपतिष्ठत इत्यादिविनियोगमपेक्ष्य ज्ञानकरणं तथा न भवतीत्यर्थः। निरपेक्षत्वादिकमप्रयोजकमित्याह **।। पाकेति ।। प्रतीतेश्चेति ।।** यथा च न ब्राह्मणपरो वेदशब्द इति वाक्यशेषः।

## तर्कताण्डवम्

**किञ्च मन्त्रस्यापि वित्तिकरणत्वं स्वत एव। तात्पर्य-**

अचोदितं चेत्यतः पूर्वतने ''दोषात्त्विष्टिर्लौकिके शास्त्रादिं वैदिके न दोषः स्याद्'' इत्यधिकरणे इयमिष्टिर्वैदिककर्माङ्गं न स्वतन्त्रेति स्थिते सत्यङ्गप्रधानयोरेककर्तृकत्वस्य सर्वत्र क्लृप्तत्वात् इष्टेः फलान्तरकल्पनेनाधिकारान्तरकल्पने गौरवेणाश्वदानयुक्तकर्मकर्तुरेव तदङ्गाश्व प्रतिग्रहेष्टेरपि कर्तृत्वाद्दातुरिष्टिरिति। तन्त्रसारे मीमांसाग्रन्थविशेषे। अभ्युपेत्येदमुक्तम्।

## तर्कताण्डवम्

**किञ्च ''सा लिङ्गादार्त्विज'' इत्यादिसूत्रानुसाराद् भाष्यकारान्तरैस्तत्राप्युपसंहारानुरोधात्प्रतिग्रहीतुरेवेष्टिरुक्तेति शास्त्रदीपिकायामेवोक्तत्वाद्याज्ञिकैरपि तथैव स्वीकृतत्वात्प्राभाकरैरपि पौण्डरीके श्रूयत इति कृत्वा चिन्तेयमन्यथा दातुरिष्टिरिति सिद्धान्तासिद्धेरिति वदद्भिर्वस्तुतः प्रतिग्रहीतुरिष्टिरिति स्वीकृतत्वाच्चेयमिष्टिः प्रतिग्रहीतुरेवास्तु।**

**एवं सर्वत्र लिङ्गाच्छ्रुतेरिवोपक्रमादुपसंहारस्योत्सर्गतो बाधकाभावे बलवत्त्वमूह्यम् ॥**

## न्यायदीपः

वस्तुतस्तु न दातुः किन्तूपसंहारबलात् प्रतिग्रहीतुरिति भावेनाह ॥ **किञ्चेति** ॥ इयमिष्टिः प्रतिग्रहीतुरेवास्त्विति वक्ष्यमाणेनान्वयः। तत्र हेतुत्रयमुक्तत्वात्स्वीकृतत्वात्स्वीकृतत्वाच्चेति सा इष्टिः ॥ **लिङ्गात्** ॥ उपसंहारप्राबल्यरूपाल्लिङ्गात्। आर्त्विजे ऋत्विग्व्यापाररूपप्रतिग्रहे निमित्ते सति स्यादिति गुणसूत्रानुसारात्।

॥ **भाष्यकारान्तरैः** ॥ शबरस्वामिरूपभाष्यकारापेक्षया पूर्वभाष्यकारैरित्यर्थः। पौण्डरीको नामैकादशरात्रोऽहीनविशेषः। तत्रायुतं दक्षिणा अश्वसहस्रमेकादश इत्यश्वदानं विहितम्। तत्प्रकरणे चेयमिष्टिर्न पठिता। तैत्तिरीयाणां काम्येष्टिकाण्डे एव पाठात्। अतो दातुरिति सिद्धान्त सिद्ध्यर्थं

पौण्डरीके श्रूयत्र इति कृत्वा चिन्तयेदमधिकरणं प्रवर्तितमिति वदद्भिरित्यर्थः।

**॥ एवं सर्वत्रेति ॥** उपसंहारस्य बलवत्त्वमूह्यमित्यन्वयः। तत्किमप्रतिहतमेव नेत्याह **॥ उत्सर्गत इति ॥** तस्य विवरणं बाधकाभाव इति। यथा लिङ्गाच्छ्रुतेर्बलवत्त्वस्य "श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात्" इत्यत्र सिद्धत्वेपि क्वचिदर्थाद्वा कल्पनैकदेशत्वादिति नामपादीयान्तिमाधिकरणे स्रुवेणावद्यतीत्यादाववदानसामान्यशेषत्व-बोधकतृतीयाश्रुतेः सामर्थ्यरूपलिङ्गेनाज्यावदानमात्रविशेषताबोधकत्वेन सङ्कोचोक्त्या लिङ्गस्यापि श्रुतितो बलवत्त्वमुपेयते तथेत्यर्थः।

## तर्कताण्डवम्

**अत्र यदुक्तं वार्तिके – सर्वस्यापि शब्दस्य स्वार्थलङ्घने विरोधः कारणम्। स च प्रतियोगिनि दृष्टे ज्ञायते। न चोपक्रमदशायां विरोध्युपसंहारो ज्ञात इत्युपक्रमो मुख्यवृत्तिरेव। अथेदानीमुपरितन उपसंहारो मुख्यवृत्तिश्चेन्न सम्बध्यत इति बलाल्लक्षणां प्रतिपद्यत इति। तन्न। तथात्वे अक्ता इत्याद्युपक्रमाबाधायोपसंहारस्थघृतादिशब्दे लक्षणा स्यात्। अपच्छेदादौ पूर्वदौर्बल्यं च न स्यात्।**

## न्यायदीपः

**॥ अत्रेति ॥** उपक्रमप्राबल्यविषये। यदसञ्जातविरोधित्वं साधकं उपसंहारदौर्बल्ये च सञ्जातविरोधित्वमुक्तं "वेदो वा प्रायदर्शनाद्" इतिसूत्रव्याख्यावसरे तन्नेत्यन्वयः **॥ प्रतियोगिनीति ॥** विरोधिनीत्यर्थः। अथेत्यर्थान्तरवाची। उपसंहार इत्यर्थान्तरेऽथशब्दः।

**॥ अपच्छेदादाविति ॥** तथा च "पौर्वापर्ये पूर्वदौर्बल्यम्प्रकृतिवदिति" षष्ठस्थपञ्चमपादीया-पच्छेदाधिकरणविरोधः। तत्राहि – "यदि प्रतिहर्तापच्छिद्यात्सर्ववेतसं दद्यात्। यद्युद्गातापच्छिद्याददक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत। तत्र तद्दद्याद्यत्पूर्वस्मिन् दास्यन् स्याद्" इति विलक्षण-

प्रायश्चित्तकापच्छेदद्वयस्य क्रमेणैकत्रैव ज्योतिष्टोमप्रयोगे समावेशे सति पूर्वापच्छेदनिमित्तप्रायश्चित्तमकृत्वा पश्चात्तनापच्छेदनिमित्तप्रायश्चित्तस्य कर्तव्यतोक्तेरिति भावः।

अपच्छेदो नाम बहिष्पवमानेन स्तोष्यमाणानां शालाया बहिः पूर्वम्पूर्वं गच्छतां कच्छं गृहीत्वा पिपीलिकापङ्क्त्याकारेण प्रसर्पतामृत्विजां कच्छग्रहणत्यागः।

## तर्कताण्डवम्

यदत्रोक्तं वार्तिके—

"पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत्"।

यत्र भिन्नवाक्यगताः परस्परनिरपेक्षा विरोधिनोऽर्थाः श्रूयन्ते तत्र पूर्वस्योत्तरानुपमर्देनैव लब्धात्मकत्वादुत्तरस्य च पूर्वोपमर्देन विनात्मलाभानुपपत्तेः परबलीयस्त्वम्। अपच्छेद शास्त्रद्वयं च पूर्वोपमर्देन विनात्मलाभानुपपत्तेः परबलीयस्त्वम्। अपच्छेदशास्त्रद्वयं च परस्परनिरपेक्षमिति, तत्र परबलीयस्त्वम्। यत्र त्वेकवाक्यतया परस्परापेक्षाणां श्रवणं न तत्रैतद्भवति तत्र ह्याकाङ्क्षावशेनैकवाक्यत्वे पूर्वप्रतीतश्चार्थ उत्तरमर्थं स्वानुगुणमेवाकाङ्क्षत इत्युपक्रमानुगुणार्थपर उपसंहारः अननुगुणं ह्यनपेक्षितत्वान्नैवास्मिन्वाक्येऽस्ति न चाविद्यमानेन पूर्वबाधः शक्य इति पूर्वबलीयस्त्वम्। एवं च त्रयो वेदाः प्रजापतिर्वरुणायेत्युपक्रमस्योच्चैर्ऋचा यावतोऽश्वानित्युपसंहारेणैकवाक्यत्वादत्र पूर्वबलीयस्त्वमिति। तन्न।

पूर्वप्रतीति इत्यत्र हि पूर्वप्रतीतः को विवक्षितः।

किमुपक्रमादापातप्रतिपन्नः किं वा परामृष्ट उपसंहारानुगुणः।

नाद्यः। श्येनेनाभिचरन्नित्यादौ पूर्वप्रतीतपक्ष्यादिरूपमुख्यार्थानुगुण्यायोत्तरस्य यथा वै श्येन इत्यादेरस्वारस्यं स्यादित्युक्तत्वात्।

द्वितीये कथमुपसंहारप्राबल्यम्। प्रत्युत यत्र भिन्नवाक्यगतता तत्रोत्तरस्य पूर्वव्याख्यानरूपत्वाभावात्प्राबल्यं न सिध्यति।

अन्यथा व्रीहियवशास्त्रयोरपि परम्प्रबलं स्यात्। अपच्छेदद्वये पूर्वापच्छेदनिमित्तप्रायश्चित्ताननुष्ठानं तु वटफले रक्तरूपसामग्र्या श्यामरूपापनयपूर्वकं रक्तताया इवोत्तरापच्छेदेन पूर्वापच्छेदनिमित्तकप्रायश्चित्तकर्तव्यतापनयपूर्वकं स्वनिमित्तप्रायश्चित्तकर्तव्यताया उत्पादनात्॥

विस्तृतं चैतन्न्यायामृते। अनुपसञ्जातविरोधित्वेन उपक्रमप्राबल्ये च सर्वत्रापातजप्रत्ययस्यैव प्राबल्यापत्त्या बहुविप्लवापत्तिः। तस्य विमर्शनजेन मिथ्यात्वे उपक्रममात्रजन्योप्युपसंहारपरामर्शजन्येन मिथ्यास्तु। उपक्रमोपसंहारयोरेकवाक्यतया सम्भूय प्रमापकत्वात्। उपसंहारस्य व्याख्यानरूपत्वाच्च।

### न्यायदीपः

॥ **अत्रेति** ॥ परर्बीलीयस्त्वविषये। अपच्छेदवैषम्यमुपसंहारस्योक्तं "वेदो वा" इति सूत्रव्याख्यावसर इत्यर्थः। तत्र प्रतीयतं नामेत्यर्थः। तत्रेत्यस्य यत्रेत्यनेनान्वयः। अन्योन्यनिरपेक्षाणां धियां यत्र पौर्वापर्येण जन्म भवेदित्यर्थः।

श्लोकार्थं व्यनक्ति ॥ **यत्रेत्यादिना** ॥ **यदिप्रतिहर्तेति** ॥ यद्युद्गातेत्यादिभिन्नवाक्यगता इत्यर्थः। उदाहरणनिष्ठतया दर्शयति ॥ **अपच्छेदेति** ॥ यदिप्रतिहर्तेति यद्युद्गातेति च शास्त्रद्वयमित्यर्थः ॥ **यत्र त्विति** ॥ त्रयो वेदा असृज्यन्तेत्याद्युपक्रमोपसंहारस्थल इत्यर्थः।

॥ **एतदिति** ॥ परबलीयस्त्वमित्यर्थः। कुतो नेत्यतः आह ॥ **तत्र हीति** ॥ **अस्मिन्वाक्य इति** ॥ विरुद्धतया प्रतीतोपक्रमोपसंहारोपेतवाक्य इत्यर्थः। उपक्रमबलीयस्त्वं उपक्रमाधिकरणविषयवाक्ये प्रतिग्रहेष्टिनयविषयवाक्ये च दर्शयति ॥ **एवं चेत्यादिना** ॥ **उक्तत्वादिति** ॥ रामरावणयोरित्यादि-नेत्यर्थः।

यत्तु प्रतिहर्तेतियद्युद्गातेत्यादिभिन्नवाक्यगतविरुद्धार्थस्थल एव परबलीयस्त्वं न पुनरेकवाक्य-भूतोपक्रमादिस्थल इति तद्विपरीतमित्याह ॥ **प्रत्युतेति** ॥ **न सिद्ध्यतीति** ॥ तथा चापच्छेदाधिकरण-मसङ्गतं स्यादिति भावः।

॥ **अन्यथेति** ॥ अव्याख्यानत्वेपि पश्चात्तनत्वमात्रेण प्राबल्य इत्यर्थः। तथाच ''तुल्यार्थास्तु विकल्पेरन्नि''तिद्वादशाध्यायतृतीयपादीयचतुर्थाधिकरणविरोध इति भावः। कथं तर्हि क्रमेणाप-च्छेदस्थळे पूर्वापच्छेदनिमित्तप्रायश्चित्ताननुष्ठानमित्यत आह ॥ **अपच्छेदेति** ॥

॥ **न्यायामृत इति** ॥ प्रत्यक्षप्राबल्योक्तिप्रस्ताव इति योज्यम्। सर्वस्यापिशब्दस्येत्यादिनोक्तं च वार्तिकमतं निराह ॥ **अनुपसञ्जातेति** ॥ **बहुविप्लवेति** ॥ आज्यैस्तुवते आकाश इति होवाचेत्यादौ घृतादिपरत्वस्यैवापत्त्या मन्त्रादिपरत्वासिद्ध्या पूर्वोत्तरमीमांसाभङ्ग इति भावः। मिथ्यास्त्वित्यत्र हेतुरुपक्रमोपसंहारयोरित्यादि।

## तर्कताण्डवम्

**सा वैश्वदेव्यामिक्षेत्यादावुत्पत्तिविशिष्टगुणाविरुद्धे वाजिभ्यो वाजिनमित्युत्पन्नविशिष्टगुणाप्रवेशे तूत्पत्ति-विशिष्टस्य न प्राथम्यं हेतुः। किन्तूत्पत्तिवाक्यावगतगुणं कर्मानूद्यान्येन गुणस्य विधेयत्वात्। सगुणस्य कर्मणो गुणान्तरनैराकाङ्क्ष्येण गुणान्तरस्य पूर्वकर्मसंयोगानर्हत्वं**

हेतुः ॥

अत एव गुणाधिकरणे सूत्रं ''गुणश्चापूर्वसंयोगे वाक्ययोः समत्वाद्'' इति। वार्तिकं च–

''उत्पत्तिवाक्यविज्ञातं कर्मसर्वमनूद्यते।
न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तरम्'' ॥

इति।

**नचात्रोपक्रमोपसंहारयोरिव व्याख्यानव्याख्येय-भावोस्ति। श्रुतिलिङ्गयोर्बलाबलेऽपि न प्रथमचरमोपस्थिती हेतू। किन्तूपस्थित्यनन्तरं सह प्रस्थितयोरपि तयोः शीघ्रमन्थरप्रवृत्तित्वेन प्रमेयपरिच्छेदे सन्निकर्षविप्रकर्षौ। एवं लिङ्गवाक्यादेरपि।**

## न्यायदीपः

नन्वेवमपि – गुणश्चापूर्वसंयोग इति द्वितीयाध्यायद्वितीयपादीयनवमाधिकरणे ''तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाचिभ्यो वाचिनमिति'' वाक्ये श्रुताऽमिक्षायागे प्रथमावगता-मिक्षारूपगुणयुक्ते वाजिनरूपगुणस्य पश्चादवगतस्य न निवेशः किं तु कर्मान्तरमेवेत्युक्तत्वात्तद्विरोधः। तत्रोपक्रमप्राबल्यस्य सिद्धत्वादित्यत आह ॥ **सा वैश्वदेवीति** ॥ **उत्पत्तिविशिष्टेति** ॥ कर्मस्वरूपा-वगतिवेलायामेवावगतगुणशब्दितामिक्षारूपद्रव्ययुक्त इत्यर्थः।

॥ **उत्पन्नेति** ॥ कर्मस्वरूपावगत्यन्तरमवगतेत्यर्थः ॥ **अत एवेति** ॥ अस्मदुक्तहेतो-रभिमतत्वादेवेत्यर्थः। गुणाधिकरणे – गुणात्कर्मभेद इति प्रतिपादकेऽधिकरणे ॥ **गुणश्चेति** ॥ वाजिनादिरूपो गुणश्च। कर्मभेदको भवेत्। कुतः अपूर्वसंयोगे सतीति शेषः। वाजिनादिगुणस्यामिक्षादि-द्रव्यान्तरयुक्तपूर्वसंयोगानर्हत्वे सति आमिक्षावाजिनवाक्ययोः समत्वादन्योन्यनिरपेक्षत्वादिति सूत्रार्थः। सत्यन्तेनास्मदुक्तहेतोः स्पष्टं प्रतीतेरिति भावः।

उपसंहारप्राबल्ये योस्मदुक्तो व्याख्यानत्वरूपहेतुः सोत्र नास्ति येन व्यभिचारः शङ्क्येतेति भावेनाह **।। न चात्रेति ।।** आमिक्षावाक्य इत्यर्थः।

ननु – श्रुत्यादौ पूर्वपूर्वप्राबल्ये प्राथम्यमेव बीजमिति कथं नोपक्रमप्राबल्यमित्यत आह **।। श्रुतीति ।। बलाबले ।।** प्राबल्यदौर्बल्ये इत्यर्थः **।। मन्थरेति ।।** विलम्बितेत्यर्थः। प्रथमपरिच्छेदे वस्तुनिर्णये कार्ये सतीत्यर्थः।

## तर्कताण्डवम्

**अत एव जैमिनिसूत्रम् ''अर्थविप्रकर्षादि''ति। वार्तिकं च – ''ऐन्द्र्या विनियोगं प्रति श्रुतिलिङ्गयोः सह प्रस्थितयोः'' इत्यादि। नैवमुपक्रमोपसंहारयोः सह प्रस्थितयोरर्थपरिच्छेदे सन्निकर्षविप्रकर्षौ स्तः। प्रस्थानानन्तरं द्वयोरपि शब्दरूपत्वेन तुल्यगामित्वात् प्रथमोपस्थितस्याप्युपक्रमस्योपसंहारसापेक्षस्यैवार्थपरिच्छेदकतया तन्निरपेक्षस्याप्रस्थानाच्च। लिङ्गादेः श्रुत्यादिकल्पनादिनैव प्रामाण्यवदुपसंहारस्योपक्रमकल्पनादिनैव प्रामाण्याभावाच्च।**

**कपिञ्जलानालभत इत्यत्रापि बहुत्वे प्रथमस्य त्रित्वस्य कारणाभावादनतिक्रमः। उपक्रमस्य तु प्रथमस्यापि व्याख्यानरूपोपसंहारात्मककारणादतिक्रमः।**

**अत एव कपिञ्जलाधिकरणे सूत्रम् –**

**''प्रथमं वा नियम्येत कारणादतिक्रमः स्यात्'' इति।**

**अनुव्याख्यानं च –**

**''विपरीतप्रमाभावे पूर्वारोहस्तु कारणम्।**

सा भवेद्यत्र स व्यर्थः पूर्वारोहो भ्रमो यथा''।

इति। तथाचोपसंहारस्य प्राबल्ये न कोऽपि दोषः। तस्मात्–

''पूर्वोपमर्देनोत्पत्तेः स्वविरोध्युत्तरोज्झितेः।
व्याख्यानरूपतश्चोपक्रमाच्छ्रेष्ठोपसंहृतिः''

अपच्छेदनयेन परैर्निर्गुणवाक्यानां चरमत्वात्प्राबल्ये शङ्किते वेदोवेति नयात्प्राथम्यात्सगुणवाक्यानां प्राबल्यमित्यस्मदीयानामुक्तिस्तु परीत्याश्रयणेन वा सगुणनिर्गुणशास्त्रयोरुपक्रमोपसंहारत्वाभावेनोपसंहारप्राबल्यन्यायाविषयत्वाभिप्रायेण वा नेया।

**मीमांसकोक्तस्योपसंहारादुपक्रमप्राबल्यस्य भङ्गः ॥७९॥**

## न्यायदीपः

॥ **सूत्रमिति** ॥ तृतीयाध्यायतृतीयपादे ''श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षाद्'' इति सूत्रमित्यर्थः ॥ **ऐन्द्रीति** ॥ इन्द्रप्रतिपादिकायाः ''निवेशनः सङ्गमनो वसूना''मित्यदिकाया यो विनियोगः इन्द्रे गार्हपत्ये च प्रकाशनरूपः तं प्रतीत्यर्थः।

अर्थपरिच्छेदे सन्निकर्षविप्रकर्षौ न स्त इत्यत्र हेतुमाह ॥ **प्रस्थानानन्तरमिति** ॥ अर्थनिर्णयार्थं प्रवृत्यनन्तरमित्यर्थः। द्वयोः उपक्रमोपसंहारयोः। लिङ्गस्य तु श्रुतिद्वारैवेति न तुल्यगामित्वमिति भावः।

ननूपक्रमः प्रथमोपस्थितत्वात्प्रबल इत्यतोऽर्थबोधने जघन्यत्वाद्दौर्बल्यमेवेत्याह ॥ **प्रथमेति** ॥ **अप्रस्थानाच्चेति** ॥ अर्थनिर्णयार्थमप्रवृत्तेरित्यर्थः। श्रुत्यादिवैलक्षण्यमुपक्रमादेः प्रकारान्तरेणाह ॥ **लिङ्गादेरिति** ॥ लिङ्गस्य श्रुतिकल्पनया, वाक्यस्य लिङ्गश्रुत्युभयकल्पनया, प्रकरणस्य तु वाक्यादित्रितयकल्पनयेत्यादिरूपेणेत्यर्थः। एतच्चोत्तरभङ्गे स्पष्टीभविष्यति।

नन्वेवमपि – वसन्ताय कपिञ्जलानालभत इत्यत्र बहुवचनस्य त्रित्वचतुष्ट्वाद्यनेकबहुत्व-

सङ्ख्याराचित्वेपि प्राथम्यात्रित्व एव पर्यवसानस्यैकादशाध्यायाद्यपादीयकपिञ्जलाधिकरणेऽभिधानं न स्यात्। किं तु चरमप्राबल्यात्रित्वातिक्रमेण तदुत्तरसङ्ख्यैव परिगृह्यते। अतः प्राथम्यस्य प्राबल्याहेतुत्वे तदधिकरणविरोध इत्यत आह ॥ **कपिञ्जलेति** ॥ **प्रथमं वेति** ॥ प्रथमं त्रित्वमेव नियम्येत कुतः कारणादतिक्रमः परित्यागः नह्यत्र प्रथमत्रित्वत्यागे कारणमस्तीति सूत्रार्थः।

॥ **अनुव्याख्यानं चेति** ॥ अत एवेत्यनुकर्षः ॥ **पूर्वारोहः** ॥ पूर्वप्रतीतिः कारणम्प्रमाणमित्यर्थः ॥ **सेति** ॥ विपरीतप्रमा। स पूर्वारोहो व्यर्थ इत्यर्थः। तत्र दृष्टान्तो यथा भ्रम इति।

॥ **स्वविरोधीति** ॥ स्वविरोध्युत्तरप्रमाणहीनत्वादित्यर्थः। रूपत इति भावप्रधानम् ॥ **अस्मदीयानामिति** ॥ वाग्वज्रकाराणाम् वादरत्नावल्यादिग्रन्थकर्तृविष्णुदेवाचार्यप्रभृतीनामित्यर्थः। अत्र ग्रन्थकारोक्तं मीमांसकाभिमतोपक्रमप्राबल्यदूषणं पाङ्क्तमनूद्य केनचित्तदुद्धारमिव कृत्वोपक्रम-प्राबल्यमुपक्रमपराक्रमाख्यग्रन्थे कृतं तदुक्तदूषणोद्धारस्यासामञ्जस्योपपादनपूर्वकमुपक्रमप्राबल्यदूषणं ग्रन्थोक्तमेव समर्थ्योपसंहारप्राबल्यग्रन्थोक्तरीत्यैव निपुणतरं गुरुपादैरेवोपसंहारविजयाख्यग्रन्थे समर्थितमिति विशेषबुभुत्सुभिस्तत एतदनुसन्धातुं शक्यमिति ग्रन्थगौरवभयान्नास्माभिरधिकं चर्चा कृता।

मीमांसकोक्तस्योपसंहारादुपक्रमप्राबल्यस्य भङ्गः ॥ ७९ ॥

***

## ८०. अथ परोक्तश्रुत्यादिलक्षणभङ्गः।

### तर्कताण्डवम्

**एवं शब्दादेव प्रमित इत्यधिकरणे–**

**"श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा.**
**पूर्वम्पूर्वं बलीयः स्यादेवमागमनिर्णयः"।**

**इतिभाष्यव्याख्यानावसरे टीकायां–**

"श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम्।
पदानि निरपेक्षाणि वाक्यं प्रकरणं तथा॥

एकस्य प्रतिपत्त्यङ्गवचनं स्थानमुच्यते।
अन्यत्र तत्समोक्तिस्तु समाख्यास्थानमेव च।
अध्यायादिप्रबन्धास्तु प्रभेदा आगमस्य तु"।

इति तत्त्वप्रदीपोदाहृतवचनानुसारेण श्रुत्यादिलक्षणमुक्तम्। तत्र टीकोक्तश्रुत्यादिलक्षणनिर्वाहः पूर्वबलीयस्त्वे बीजम्। तत्रोदाहरणादिकं चास्माभिश्चन्द्रिकायामुक्तं द्रष्टव्यम्।

## न्यायदीपः

उपक्रमादेरिव श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामप्याम्नायार्थावगत्यर्थत्वात् तत्स्वरूपादिकमन्यत्रोक्तं स्मारयति॥ **एवं शब्दादेवेति**॥ आद्यस्य तृतीयपादीयसप्तमेऽधिकरण इत्यर्थः।

## तर्कताण्डवम्

मीमांसकास्तु–

श्रुतिः शब्दोऽनपेक्षः सा विद्ध्युक्तिविनियोगकृत्।
विनियोक्त्री त्रिधा भिन्ना तुल्यशब्दादिरूपतः॥

सर्वभावगता शक्तिर्लिङ्गमित्यभिधीयते।
वाक्यं तु पदसङ्घातमात्रं विद्वद्भिरुच्यते॥

इतिकर्तव्यताकाङ्क्षा प्रक्रियाद्विविधा च सा।
स्थानं तु तुल्यदेशत्वं पाठानुष्ठानतो द्विधा।
समाख्या यौगिकी सञ्ज्ञा लौकिकी वैदिकी च सा।

**तत्र लिङादिश्रुतिर्विधात्री। इन्द्रादिश्रुतिरभिधात्री। विनियोक्त्यप्येकपदरूपा एकप्रत्ययरूपा विभक्तिरूपा चेति त्रिविधा। तत्राद्या यथा यजेतेति पदम्। तेन हि प्रत्ययोक्तां भावनां प्रति प्रकृत्युक्तयागस्य शेषता भाति। द्वितीया तु पशुना यजेतेत्यत्र नेति तृतीया।**

## न्यायदीपः

॥ **मीमांसकास्त्विति** ॥ इत्याहुरिति दूरेऽन्वयः। तत्र वार्तिककृदभिमतं न्यायरत्नमालाश्लोकं पठति ॥ **श्रुतिरिति** ॥ अर्थबोधनेऽन्यनिरपेक्षः शब्दः श्रुतिरित्यर्थः। लिङ्गादिकं तु श्रुत्यादिसापेक्षमेवेति न तत्रातिव्याप्तिरिति भावः। तद्विभागमाह ॥ **सेति** ॥ श्रुतिर्विधिकृत्। उक्तिरभिधानम् अभिधानकृत् विनियोगकृदित्यर्थः।

विनियोगकृच्छ्रुतेर्विभागमाह ॥ **विनियोक्त्रीति** ॥ शेषशेषिभावबोधिका श्रुतिस्त्रिधा भिन्नेत्यर्थः ॥ **तुल्येति** ॥ एकेत्यर्थः। आदिपदेन प्रत्ययविभक्त्योर्ग्रहः।

लिङ्गलक्षणमाह ॥ **सर्वभावेति** ॥ सर्ववस्त्वित्यर्थः। स्फोटादिपक्षान्तरनिरासाय पदसङ्घात-मात्रमिति मात्रपदप्रयोगः। इतिकर्तव्यता अङ्गकलापस्तदाकाङ्क्षेत्यर्थः।

॥ **प्रक्रियेति** ॥ प्रकरणम्। साच महाप्रकरणावान्तरप्रकरणभेदेन द्विविधेत्यर्थः। तुल्यदेश-त्वमिति बहुव्रीहिः।

साविध्युक्तीत्यादिपादार्थं व्यनक्ति ॥ **तत्रेति** ॥ श्लोकोक्तश्रुतिविभागेष्वित्यर्थः ॥ **लिङादीति** ॥ लिङ्लोट्तव्यप्रत्ययलेट्प्रत्ययरूपा। जुहुयादित्यादिश्रुतिर्विधात्री कर्तव्यताबोधकर्त्रीत्यर्थः। ''कदाचनस्तरीरसि नेन्द्रसश्चसिदाशुष'' इत्यादिश्रुतिः प्रवर्तकत्वादिमन्तरेणार्थप्रकाशनमात्रव्यापार-वत्त्वरूपाभिधात्रीत्यर्थः।

विनियोक्त्रीत्यर्धश्लोकं व्यनक्ति ॥ **विनियोक्त्र्यापीति** ॥ **एकपदेति** ॥ सुप्तिङन्तं पद-मित्युक्तपदरूपेत्यर्थः ॥ **नेति तृतीयेति** ॥ ''आङो नास्त्रियाम्'' इति नाभावविधानान्नेतीत्युक्तमिति।

## तर्कताण्डवम्

**तया हि स्वोक्तकरणत्वं प्रति स्वोक्तैकत्वस्य शेषतोक्ता। तृतीयापि शेषित्वबोधिका यथा व्रीहिन् प्रोक्षतीत्यादौ द्वितीयादिः। शेषत्वबोधिका यथा अरुणया क्रीणातीत्यादौ तृतीयादिः।**

**बहिर्देवसदनं दामीत्यादिमन्त्रस्य लवनप्रकाशन-सामर्थ्यरूपाल्लिङ्गाल्लवनशेषता। न ह्यस्य विनियोजिका श्रुतिरस्ति। यजेत स्वर्गकाम इति पदद्वयसमभिव्याहार-रूपाद्वाक्याद् यागस्य स्वर्गशेषता।**

## न्यायदीपः

चतुर्थाद्यपादे ''तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्'' इति षष्ठाधिकरणे एकत्वमयज्ञाङ्गमुत यज्ञाङ्गमिति संशये यज्ञाङ्गमिति प्राप्ते करणदोषत्वेन यज्ञाङ्गमित्युक्तत्वात्तद्रीत्या व्यनक्ति **।। तया हीति ।। स्वोक्तेति ।।** ''कर्तृकरणयोस्तृतीय'' इति करणार्थे तृतीयाविभक्ते''द्व्येकयोर्द्विवचनैकवचन'' इत्येकत्वे एकवचनस्य विधानान्नेत्यनेन तृतीयात्वेन करणत्वस्य, एकवचनत्वेनैकत्वस्य बोधनात् स्वोक्तेत्युक्तम्। उक्तं हि–

> ''समानप्रत्ययस्थेन कारकेणात्मसात्कृता।
> क्रियायै नीयते सङ्ख्या न पश्वङ्गं पदाद्भवेत्''।

इति। ''द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्ध'' इति षष्ठाद्यस्वर्गकामाधिकरणोक्तरीत्या व्यनक्ति **।। तेन हीति ।।** यागं कुर्यादित्येवार्थो यजेतेत्यस्येति प्राप्ते यागेन भावयेदित्यर्थस्य तत्र व्युत्पादितत्वादिति भावः।

**।। शेषतेति ।।** करणतेत्यर्थः। विभक्ति रूपापि शेषित्वबोधिका शेषत्वबोधिका चेति द्विरूपेति श्लोकानुक्तमपि तदभिमतं विभागं हृदि कृत्वा व्यनक्ति **।। तृतीयापीति ।। इत्यादौ द्वितीयादिरिति ।।**

''क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती''त्यत्र चतुर्थीत्यादिपदेन ग्राह्यम्। तानि ''द्वैधङ्गुणप्रधानानी''ति द्वितीयाद्यपादीयचतुर्थेऽधिकरणे शेषित्वबोधिका द्वितीयेति व्यक्तम्। चतुर्थीतु ''प्रासवन्मैत्रावरुणायदण्डप्रदानं कृतार्थत्वाद्'' इति चतुर्थद्वितीयपादे षष्ठाधिकरणे व्यक्तम्। अधिकरणशरीराणि तु ग्रन्थगौरवभीत्या न विव्रीयन्ते

॥ **इत्यादौ तृतीयादिरिति** ॥ आदिपदाभ्यां ''मूलतः शाखां परिवास्योपवेषं करोती''त्यादौ पञ्चमी, ''वेद्यां हवींष्यासादयती''त्यत्र सप्तमीति ग्राह्यम्। ''अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्याद्'' इतितृतीयाद्यपादीयपञ्चमाधिकरणे तृतीयाश्रुत्या प्रतीतारुण्यकरणत्वस्य गोरूपद्रव्य-परिच्छेदद्वारा क्रयशेषत्वस्य व्युत्पादनात् शाखायां तत्प्रधानत्वादिति चतुर्थद्वितीयपादीयतृतीयेऽधिकरणे शाखामूलस्य परिवासनशब्दितच्छेदनापादनतया छेदनसाध्यमग्रं प्रतिशेषता व्यक्ता। तथा तृतीयस्य सप्तमे पादे ''प्रकरणविशेषादसंयुक्तं प्रधानस्य'' इत्याद्याधिकरणेऽङ्गप्रधानसर्वहविरधिकरणतया वेद्यः शेषत्वस्य वेद्यां हवींष्यासादयतीति सप्तम्या व्युत्पादनं ध्येयम्।

एवं षष्ठ्यपि शेषत्वबोधिका चेति द्विरूपा। तत्राद्या – ''राजन्यवसिष्टादीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषाम्'' इत्यत्र वसिष्टादीन्स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादि विधीयत इति षष्ठे सन्निपात इति षष्ठपादीयाद्यनयेभिधानात् तत्र व्यक्ता। द्वितीया तु यजमानस्य याज्येत्यत्र याज्याविशेषे यजमानः कर्तृतया तदङ्गत्वेन विधीयते इति ''याज्यापनयेनापनीतो भक्षः प्रवरवाद्'' इति तृतीयाध्याय पञ्चमपादीयत्रयोदशेऽधिकरणे व्युत्पादनात्तत्र व्यक्ता। प्रथमा तु प्रातिपदिकमात्रे विधानान्न शेषत्वस्य वा बोधिकेति ध्येयम्।

श्रुत्यादिषट्कस्याङ्गाङ्गिभावे प्रमाणत्वं मीमांसकैरङ्गीकृतमिति श्रुतेरङ्गाङ्गिभावप्रमापकत्व-मुदाहरणपूर्वं व्यक्तीकृत्य सर्वभावेत्यर्ध्योक्तलिङ्गस्य स्वरूपं विवृण्वन्नेव शेषत्वबोधकतां दर्शयति ॥ **बर्हिरिति** ॥ दाप् लवन इतिधातोः देवानां सदनमाश्रयभूतं बर्हिर्दामि लुनामीत्यर्थः।

॥ **लवनशेषतेति** ॥ व्यक्तमेतत्। ''तदर्थशास्त्राद्'' इति आद्यद्वितीयपादीयमन्त्राधिकरणे विनियोजका लवनाङ्गत्वबोधिका बर्हिरितिमन्त्रेण कुशान्लुनीयादिति श्रुतिर्न ह्यस्ति। येन लिङ्गं विनियोजकं न स्यादित्यर्थः।

वाक्यं त्वित्युक्तस्य विनियोजकत्वं व्यनक्ति ॥ **यजेतेति** ॥ **स्वर्गशेषतेति** ॥ तथैव

स्वर्गकामाधिकरणे व्युत्पादितत्वादिति भावः।

## तर्कताण्डवम्

**न ह्यत्र यागेनेति तृतीया स्वर्गमिति द्वितीया वास्ति। किन्तु समभिव्याहारादेव साध्यसाधनताधीः। प्रकरणस्य द्वैविध्यं च महाप्रकरणावान्तरप्रकरणभेदात्। तत्राद्येन प्रयाजादेर्दर्शपूर्णमासादिशेषता। द्वितीयेनाभिक्रमस्य प्रयाजादिशेषता।**

**पाठसादेश्यमपि द्वेधा यथासङ्ख्यं सन्निधिश्चेति। तत्राद्या "द्बब्धिरस्य दब्धो भूयासम्" इति मन्त्र उपांशुयागशेषः। द्वितीया "च्छुन्धध्वं दैव्याय कर्मण" इति मन्त्रः सान्नाय्यपात्रप्रोक्षणं प्रति शेषः। अनुष्ठानसादेश्यात् पशुधर्मा अग्नीषोमीयं प्रति होतुः चमस इति वैदिकसमाख्यया होतुश्चमसभक्षणशेषता। आध्वर्यवमिति लौकिकसमाख्याध्वर्योरवघातादिशेषतेत्याहुः।**

## न्यायदीपः

इतिकर्तव्यतेत्यर्धोक्तप्रकरणस्य द्वैविध्यं दर्शयन्नेवोदाहरणनिष्ठतया दर्शयति ॥ **प्रकरणस्येति** ॥ **प्रयाजादेरिति** ॥ "समिधो यजति तनूनपातं यजति इडोयजति बर्हिर्यजति स्वाहाकारं यजत" इत्युक्तप्रयाजादेर्दर्शपूर्णमासाख्याग्नेयादिप्रधानषड्यागप्रकरणेन तच्छेषत्वं "असंयुक्तं प्रकरणादितिकर्तव्यतार्थत्वाद्" इति तृतीयाध्यायतृतीयपादीयप्रकरणाधिकरणे व्युत्पादितम्।

॥ **द्वितीयेनेति** ॥ अङ्गानां जायमानेतिकर्तव्यताकाङ्क्षारूपावान्तरप्रकरणेनाभिक्रामं जुहोतीत्युक्ताभिक्रमणस्य प्रयाजादिशेषता "कर्तृगुणे तु कर्मासमवाया"दिति तृतीयाद्यपादीयनवमाधिकरणे व्यक्ता। स्थानं त्वित्यादिना स्थानस्य यद्द्वैविध्यमुक्तं पाठानुष्ठानतोपीति तत्राद्यस्य विभागोदाहरणे

आह ॥ **पाठेति** ॥ **सादेरयम्** ॥ समानदेशत्वं समानदेशे पाठ्यमानत्वमित्यर्थः ॥ **यथासङ्ख्यं** ॥ यथाक्रमम्। सन्निधिः समीपे पाठः।

॥ **आद्यादिति** ॥ यथासङ्ख्याम्नानरूपात्स्थानादित्यर्थः। आग्नेयाग्नीषोमीयपुरोडाशानुमान्त्रणामन्त्रयोः ''अग्नेरहं देवयज्ययान्नादो भूयसं ''आग्नीषोमयोरहं देवयज्ययावृत्रहाभूयासम्'' इत्यनयोर्मन्त्रयोः मध्ये पठितस्य''दब्धिरस्य दब्धो भूयासम्'' इति मन्त्रस्याग्नेयाग्नीषोमीययागयोर्मध्येऽनुष्ठेयोपांशुयागशेषत्वं ''क्रमश्चदेशसामान्याद्'' इति तृतीयस्य तृतीयपादे क्रमाधिकरणे चिन्तनादिति भावः।

॥ **द्वितीयादिति** ॥ सन्निध्याम्नानरूपस्थानादित्यर्थः ॥ **शुन्धध्वमिति** ॥ तत्रैव तृतीयपादे बलाबलोक्तिप्रस्तावे स्थानसमाख्याधिकरणे तथोक्तेरिति भावः। श्लोकोपात्तानुष्ठानसादेश्यरूपस्थानस्य शेषताबोधकत्वस्थलं दर्शयति ॥ **अनुष्ठानेति** ॥ **पशुधर्माः** ॥ यूपच्छेदनतक्षणादयो धर्माः। सवनीयादिपश्वनुष्ठानापेक्षयाग्नीषोमीयपशोर्यूपच्छेदनाद्यनुष्ठानसन्निधावनुष्ठानादग्नीषोमीयपशुधर्मा एव यूपच्छेदनादयो न सवनीयादिपशुधर्मा इति तृतीयस्य षष्ठे पादे ''तुल्यश्चसर्वेषां पशुविधिः प्रकरणाविशेषाद्'' इति सप्तमेधिकरणेऽभिधानादिति भावः।

समाख्येत्यर्धोक्तसमाख्याद्वैविध्यस्य विनियोजकत्वस्थळमाह ॥ **होत्रिति** ॥ एतच्च तृतीयस्य पञ्चमे पादे ''चमसेषुसमाख्यानाद्'' इत्यधिकरणे व्यक्तम् ॥ **आध्वर्यवमिति** ॥ अवघातादेराध्वर्यवमिति लौकिकी सञ्ज्ञा। तयाध्वर्योरवघातादिशेषत्वम् ''आख्याचैवं तदर्थत्वाद्'' इति तृतीयाध्याय तृतीयपादीयषष्ठेधिकरणे दर्शितम्।

## तर्कताण्डवम्

**तत्र विधात्र्या विधावभिधात्र्याश्चेन्द्रादौ विनियोक्त्र्या अपि विभक्तिरूपायाः कर्मत्वकरणत्वादौ रूढत्वात् तत्राप्यस्मदुक्तं नामत्वरूपं श्रुतिलक्षणमस्त्येव।**

**पशुनेति तृतीयोक्तैकत्वस्य तु न स्वार्थकरणत्वेनान्वयः। किन्तु पशुरितिप्रथमोक्तैकत्ववत्स्वप्रकृत्यर्थपशुनैव। पशुरेकः**

**पशुः करणमित्येव प्रतीतेः। यजेतेत्यत्रापीष्टसाधनत्वरूप-विधौ लिङो रूढत्वात् ॥**

## न्यायदीपः

प्रागुक्तश्रुतिप्रभेदेषु क्वचिदनुमतिमाह ॥ **तत्रेत्यादिना** ॥ श्रुतिप्रभेदेष्वित्यर्थः। विधावित्यस्य इन्द्रादावित्यस्य च रूढत्वादित्यन्वयः ॥ **अस्मादिति** ॥ श्रुतिर्नामेति स्मृत्युक्तदिशा चन्द्रिकायाम-स्मदुक्तमित्यर्थः। विनियोजकश्रुतिरेकप्रत्ययरूपा एकपदरूपा विभक्तिरूपा चेति यत्रैविध्यन्तत्र विभक्तिरूपाया विनियोजकश्रुतित्वं सम्मतमित्युक्तम्। ततोऽवशिष्टं यत्कल्पद्वयं तत्रैकप्रत्ययरूपेत्येतत् तावन्निराकरोति ॥ **पशुनेतीति** ॥ अधिकरणं त्वेदनुरोधेनैव व्याख्येयमिति भावः।

एकपदरूपेत्येतन्निराह ॥ **यजेतेति** ॥ तृतीयेव तृतीयायथेत्यर्थः। यद्यपि लिङ् इष्टसाधनत्व एव मानम्। तथापि विशेषवाचिशब्दसमभिव्याहारे सति विशेषे पर्यवसानस्यान्विताभिधानवादेऽभिधानात् यागस्येष्टसाधनत्वे लिङ्श्रुतिरेव मानमित्युक्तम्।

## तर्कताण्डवम्

**पशुना यजेतेत्यत्र पशोः करणत्वे तृतीयेव यागस्येष्ट-साधनत्वे लिङ्श्रुतिरेव मानम्। स्वर्गशब्दस्त्विष्टविशेषोप-स्थापकः। साधितं चेष्टसाधनत्वं लिङर्थ इति। न तु प्रकृति-प्रत्ययसमभिव्याहाररूपपदश्रुतिर्यागस्य कृतिरूपभावना-शेषत्वे मानम्। कृतिसाध्यस्य यागस्य कृतिकारणत्वा-नुपपत्तेः। फलशिरस्कभावनाकरणत्वं तु फलकरणत्व-पर्यवसायि।**

**किञ्च परोद्देशप्रवृत्तकृतिव्याप्यत्वं करणत्वम्। न च यागकृतेः स्वर्गकृतिरुद्देश्या।**

## न्यायदीपः

नन्वेवमिष्टस्य लिङैव बोधितत्वात्स्वर्गादिशब्दो व्यर्थ इत्यत आह ।। **स्वर्गशब्दस्त्विति** ।। ननु कृतिपर्यायभावनैव लिङर्थो नेष्टसाधनत्वमित्यत आह ।। **साधितं चेति** ।।

प्रागुक्तं निराह ।। **नन्विति** ।। कुत इत्यतः किं यागभावनां प्रति यागस्य करणत्वमुच्यते, अथ स्वर्गभावनां प्रति आद्य आह ।। **कृतिसाध्यस्येति** ।।

अन्त्य आह ।। **फलेति** ।। फलकृतिं प्रति यागस्य करणत्वमभ्युपेत्य फलकरणत्वपर्यवसानमुक्तम्। वस्तुतस्तदेवयुक्तमित्याह ।। **किञ्चेति** ।। इदं मे भूयादिति यः परोद्देशस्तेन प्रवृत्ता या कृतिस्तद्विषयत्वमित्यर्थः। छिदिक्रियोद्देशेन प्रवृत्तकृतिव्याप्ते कुठारादौ तथा दर्शनादिति भावः ।। **न चेति** ।। किं तु स्वर्ग एवोद्देश्य इति वाक्यशेषः।

## तर्कताण्डवम्

**युक्तश्चाक्रियारूपस्यापि फलस्य साध्यस्याकाङ्क्षया साधनान्वयः। प्रत्युत त्वदुक्तलक्षणमेव प्रकृतिसापेक्षप्रत्ययरूपपदश्रुत्यव्यापि। न हि विधिश्रुतेर्विधानमात्रे विनियोक्त्र्या एकप्रत्ययश्रुतेर्विभक्तिश्रुतेश्च विनियोगमात्रे शब्दान्तरापेक्षास्ति। किं तु प्रतियोगिविशेषोपस्थापन एव।**

**न च यजेतेत्यत्र प्रकृत्या यागस्य गुणता वा प्रत्ययेन भावनायाः शेषिता वोच्यते। येन विनियोगमात्रे नैराकाङ्क्ष्यं स्यात्।**

## न्यायदीपः

ननु फलकारणयोः स्वर्गयागयोः क्रियाद्वारैव सम्बन्धो वाच्यः। फलस्य छिदाया इव क्रियारूपत्वाभावात्। अतो भावनाद्वारैवान्वयो वक्तव्य इत्यत आह ।। **युक्तश्चेति** ।। किमस्यसाधनमिति

वास्य किं साध्यमितिवाकाङ्क्षयेत्यर्थः। यद्वा लिङेष्टसाधनंयाग इति बोधिते किन्तदिष्ट-मित्याकाङ्क्षयेत्यर्थः। एवं यजेतेत्यत्र लिङेव यागसाधनत्वबोधे मानं न पदश्रुतिरित्युक्तम्। पदश्रुतेरेव मानत्वे परोक्तस्य "श्रुतिः शब्दोनपेक्षः श्च" इति श्रुतिलक्षणस्याव्याप्तिरेव बाधिकेत्याह ॥ **प्रत्युतेति** ॥ **प्रकृतिसापेक्षेति** ॥ केवळं प्रत्ययमात्रस्य पदत्वाभावात्प्रकृतिप्रत्ययसमभिव्याहारस्यैव पदत्वोक्तेरिति भावः। एकप्रत्ययादिरूपत्वदुक्तश्रुतिप्रभेदेस्ति निरपेक्षत्वं पदश्रुतावेव नास्तीत्यव्याप्तिमुपपादयति ॥ **न हीति** ॥

यद्वा – ननु सापेक्षत्वे सर्वत्र समानेपि कथमेकप्रत्ययादौ श्रुतित्वानुमतिः पदे त्वसम्मतिरित्यत आह ॥ **न हीति** ॥ विनियोगमात्रे शेषशेषिभवबोधमात्रे।

ननु – पशुनेत्येकप्रत्ययश्रुतौ पशुप्रातिपदिकापेक्षास्ति, व्रीहिनप्रोक्षतीत्यादौ विभक्तिश्रुतिष्वपि प्रकृत्याद्यपेक्षास्तीतिभावेन पृच्छायामुत्तरमाह ॥ **किन्त्वित्यादिना** ॥ **प्रतियोगिविशेषेति** ॥ करणकारकं किमिति, कुत्रेदङ्कारमित्यादिजिज्ञासायां पशुप्रभृतिविशेषोपस्थापन एव तदपेक्षेत्यर्थः। पदश्रुतौ तु स्वार्थोपस्थापन एव सापेक्षमित्यव्याप्तिभिया प्रागुक्तश्रुतिलक्षणं वा त्याज्यम्। अस्मदुक्तदिशा लिङ्श्रुतेरेव मानत्वमुपेत्य पदस्य श्रुतिप्रमाणत्वं वा त्याज्यमिति भावः।

ननु – प्रकृतिः प्रत्ययो वा शेषित्वादिरूपस्वार्थे नान्यदपेक्षतेतो न लक्षणमव्याप्तमित्यत आह ॥ **न चेति** ॥

## तर्कताण्डवम्

**यदि च समभिव्याहृतशब्दान्यानपेक्षत्वमात्रेण वा पदान्तरानपेक्षत्वमात्रेण वा श्रुतित्वं तर्हि स्वर्गकामो यजेतेति पदद्वयसमभिव्याहारस्याध्वर्यवमौद्गात्रं हौत्रमित्यादि-प्रकृतिप्रत्ययसमभिव्याहाररूपायाः समाख्यायाश्च श्रुतित्वं स्यात्। न च स्वेतरप्रमाणानपेक्षत्वमात्रेण श्रुतित्वम्। तत्प्रयोजकस्यान्यस्याभावे तस्यैवायोगात्। लिङादेरपि श्रुत्याद्यनपेक्षत्वस्य वक्ष्यमाणत्वाच्च।**

**यच्च श्रुतेस्त्रित्वमुक्तं तदपि न। सर्वापि श्रुतिरभिधात्र्येव। ज्ञापक एव हि शब्दो न तु कारकः। परन्त्विन्द्रादिश्रुतिरिन्द्रमभिधत्ते। लिङादिश्रुतिस्तु विधिमित्यर्थभेदमात्रम्। न तु श्रुतेः स्वतो भेदः।**

## न्यायदीपः

पदश्रुतावनपेक्षत्वरूपश्रुतिलक्षणस्याव्याप्तिनिरासाय प्रकारान्तरेणानपेक्षत्वविवक्षायां वाक्यसमाख्ययोरतिव्याप्तिः प्राप्नोतीत्याह ॥ **यदिचेति** ॥ पदश्रुतौ समभिव्याहृतप्रकृतिसापेक्षत्वमेव। न तु तदन्यसापेक्षत्वं वा पदान्तरसापेक्षत्वं वेति भावः।

अव्याप्त्यतिव्याप्त्योर्निरासाय प्रकारान्तरेणानपेक्षत्वमाशङ्क्या सम्भवित्वरूपलक्षणदूषणेन निराह ॥ **न चेति** ॥ लिङ्गप्रकरणादेः स्वेतरश्रुत्यादिरूपप्रमाणसापेक्षत्वं यथा तथा प्रमाणान्तरापेक्षाराहित्यं श्रुतित्वमिति नेत्यर्थः।

॥ **तत्प्रयोजकस्येति** ॥ शक्तिग्रहव्याप्तिग्रहानपेक्षत्वे प्रत्यक्षत्वं यथा प्रयोजकं तथा स्वेतरप्रमाणानपेक्षतायां प्रयोजकीभूतं श्रुतित्वं किञ्चिदन्यदेव निर्वाच्यम्। तादृशधर्मस्य च पूर्वोक्तदिशा कस्याप्यभावे स्वेतरप्रमाणानपेक्षत्वस्यैवायोगादसम्भवीदं लक्षणमिति भावः।

अस्तु वैतल्लक्षणं सम्भवि तथाप्यतिव्याप्तिरित्याह ॥ **लिङादेरिति** ॥ सर्वश्रुतेरभिधायकत्वे लिङादिश्रुत्यार्थभेदप्रतीत्याप्रवृत्त्यादिकार्यभेदो न स्यादित्यत आह ॥ **परन्त्विति** ॥ **विधिमिति** ॥ इष्टसाधनत्वमित्यर्थः।

## तर्कताण्डवम्

**सामर्थ्यरूपलिङ्गमपि न स्वरूपेण शेषत्वे मानम्। किं तु वक्ष्यमाणरीत्याऽनुपपद्यमानतयेति। तत्राप्यस्मदुक्तं व्याप्यत्वरूपं लिङ्गत्वमस्त्येव। प्रत्युत परोक्तलक्षणमेव**

**अशक्तिरूपेषु धूमादिषु लौकिकलिङ्गेषु तथा जैमिनिनापि ''लिङ्गदर्शनाच्चे'' इत्यादिबहुसूत्रैः शबरस्वामिना च ''लिङ्गं च दृश्यते चतुर्दशपौर्णमास्यामाहुतयो हूयन्त'' इत्यादि बहुभाष्यैर्लिङ्गतया व्यवहृतेषु तत्तदर्थज्ञापकेषु वैदिकलिङ्गेषु चाव्याप्तम् ॥**

## न्यायदीपः

एवं परोक्तश्रुतिप्रमाणं निरस्य लिङ्गरूपं प्रमाणमप्यनुमानप्रमाणत्वेन सङ्गृहीतमित्याह ॥ **सामर्थ्येति** ॥ **वक्ष्यमाणेति** ॥ **उत्तरभङ्गे** ॥ **अस्मदुक्तमिति** ॥ लिङ्गं तल्लक्षणमिति स्मृतावुक्तमित्यर्थः। असाधारणधर्मत्वरूपलिङ्गत्वभ्रान्तिनिरासायोक्तं ॥ **व्याप्यत्वरूपमिति** ॥

अस्तु भवदुक्तेन परोक्तस्य सङ्ग्रहस्तावता सामर्थ्यरूपत्वं लिङ्गत्वमिति परोक्तं किं युक्तमित्यत आह ॥ **प्रत्युतेति** ॥ यद्वा भवदुक्तं यदि तत्रास्ति तर्हि तदेव लिङ्गत्वमुच्यताम्। किं व्याप्यत्वरूपत्वोक्त्येत्यत आह ॥ **प्रत्युतेति** ॥ **अशक्तीति** ॥ सामर्थ्यरूपत्वरहितेष्वित्यर्थः।

ननु – वैदिकलिङ्गस्यैवेदं लक्षणम्। न लौकिकलिङ्गस्य। अतस्तत्राव्याप्तिर्न दोषायेत्यत आह ॥ **तथेत्यादि** ॥ **इत्यादिबहुसूत्रैरिति** ॥ ''पौर्णमास्यां रूपावचनाद्'' इति द्वितीयाध्यायद्वितीयपादीयतृतीयाधिकरणे ''लिङ्गर्शनाच्चेत्येकं'' गुणसूत्रम्। तथा तत्रैवाध्याये ''अयनेषु चोदनान्तरं सञ्ज्ञोपबन्धाद्'' इति तृतीयपादीयचतुर्थाधिकरणे च ''लिङ्गदर्शनाच्च'' इति पञ्चमं गुणसूत्रम्, तथा तत्रैव ''संस्काराद्वा प्रकरणेकर्मशब्दत्वाद्'' इति तदुत्तराधिकरणेपि ''लिङ्गदर्शनाच्च'' इति गुणसूत्रम्, ''तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया'' इति सूत्रम्, एवं तत्रतत्र लिङ्गपदोपेतसूत्रमस्तीत्यादिबहुसूत्रैरित्युक्तम्। पौर्णमास्यधिकरणस्थ ''लिङ्गदर्शनाच्च'' इति गुणसूत्रभाष्यवाक्यमनुवदति ॥ **लिङ्गं चेत्यादिना** ॥

अयमर्थः। ''य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजत'' इति वाक्यद्वयं प्रकृताग्नेयादिषड्यागानां त्रिशस्त्रिश एकीकृत्यानुवादकमुत कर्मान्तरविधायकमिति संशये कर्मान्तरविधायकमिति प्राप्ते द्रव्यदेवताख्ययागरूपाभावेनापूर्वकर्मविध्ययोगादाग्नेयादिषड्यागानु-

वादकमित्युक्तेर्थे हेत्वन्तरं लिङ्गदर्शनाच्चेति। यदीदं कर्मान्तरविधायकं तर्हि पञ्चदशत्वापत्त्या चतुर्दशपौर्णमास्यामाहुतयस्त्रयोदशामावास्यायामित्यस्यभङ्गः स्यात्। अतश्चतुर्दशत्वादिसङ्ख्यारूप-ज्ञापकदर्शनान्न कर्मान्तरविधिरिति। आदिपदेन लिङ्गमप्येतमर्थं दर्शयति। "त्रिंशद्वर्षाणि दर्शपौर्णमासाभ्यां यजेत" इत्यादिदाक्षायण्यधिकरणस्थगुणसूत्रभाष्यं गृह्यते।

## तर्कताण्डवम्

**किञ्च सामर्थ्यस्य लिङ्गत्वे ऐन्द्र्यादौ तस्य वाक्येन बाधो न स्यात्। स्पष्टयिष्यते चैतत्। परोक्तं वाक्यलक्षण-मप्यस्मदुक्तेनाकाङ्क्षादिमत्त्वेन विशेषणीयम्।**

**नहि परस्परमाकाङ्क्षादिरहितः कुण्डमजाजिनमित्यादि-पदसङ्घातोपि वाक्यम्। परोक्तं प्रकरणलक्षणमप्ययुक्तम्। साकाङ्क्षवाक्यसन्दर्भ इवाकाङ्क्षायां प्रकरणशब्दाप्रयोगात्। वैकृतभावनाया वा वैकृतापूर्वस्य वेतिकर्तव्यताकाङ्क्षा-वशाद्यः प्राकृताङ्गान्वयस्तस्यापि प्राकरणिकत्वापाताच्च।**

**ननूभयाकाङ्क्षाकृतान्वयवन्ति वैकृताङ्गानि। न तु प्राकृताङ्गानि। तेषां प्राकृतभावनया निराकाङ्क्षत्वादिति चेन्न।**

**वैकृतभावनायाः स्वप्रकरणस्थाङ्गान्वयस्याप्यप्रामा-णिकत्वापातात्। तस्याः क्लृप्तोपाकारैः प्रथमान्वितैः प्राकृतैरङ्गैर्निराकाङ्क्षत्वात्। उक्तं हि वार्तिके–**

**"क्लृप्तोपकारसापेक्षाः प्रथमं प्राकृतैः सह।**
**सम्बध्यन्ते समीपस्थं विकाराः प्रोज्झ्यचोदितम्"**

**इति।**

## न्यायदीपः

ननु—तत्र सर्वत्र लिङ्गशब्दस्य ज्ञापकार्थत्वेपीह शेषशेषिभावे प्रमाणभूतं लिङ्गं सामर्थ्यरूपमेवास्तु दोषाभावादितिवादिनं प्रत्याह ॥ **किञ्चेति** ॥ **ऐन्द्र्यादौ** ॥ इन्द्रादिप्रतिपादकमन्त्रे ॥ **स्पष्टयिष्यत इति** ॥ उत्तरभङ्ग इति भावः।

एवं श्रुतिलिङ्गरूपप्रमाणद्वयं निरस्य वाक्यप्रमाणमपि किञ्चिद्विशेषणवैशिष्ट्ये सति सम्मतमेवेत्याह ॥ **परोक्तमिति** ॥ **अस्मदुक्तेनेति** ॥ एतत्परिच्छेदादावुक्तेत्यर्थः। कुतो विशेषणीयमित्यत आह ॥ **न हीति** ॥ कुण्डमजाजिनं दशदाडिमानि षडपूपा इत्यादिपदसङ्घात इत्यर्थः।

''इति कर्तव्यताकाङ्क्षा प्रक्रिया द्विविधा च स'' इत्युक्तं निराह ॥ **परोक्तमिति** ॥ **साकाङ्क्षेति** ॥ परस्पराकाङ्क्षायुक्तवाक्यसन्दर्भ इत्यर्थः। तथास्मन्मत इव साकाङ्क्षवाक्यसन्दर्भ एव प्रकरणं वाच्यमिति भावः।

प्रयोगे विप्रतिपन्नं प्रत्यतिव्याप्तिरूपदोषान्तरमाह ॥ **वैकृतेति** ॥ सौर्यं चरुं निर्वपेदित्यादिविकृतियागसम्बन्धिन्या भावनाया इति भट्टमतेनोक्तम्। तन्मते प्रयत्न पर्यायभावनाया एव लिङाद्याख्यातार्थत्वात्। प्राभाकरमते चापूर्वस्यैव लिङाद्यर्थत्वादाह ॥ **वैकृतापूर्वस्य वेति** ॥ **आकाङ्क्षेति** ॥ कथं भावयेदिति वा कथमपूर्वं कार्यमिति वा जायमानाकाङ्क्षावशादित्यर्थः।

॥ **प्राकृतेति** ॥ ''यदाग्नेयोष्टाकपालोमावास्यायां पौर्णमास्यां वाच्युतो भवत'' इत्यादिवाक्योक्ताग्नेयादिप्रकृतियागसम्बन्ध्यवघाताद्यङ्गान्वयः प्रकृतिवद्विकृतिः कार्येति चोदकवाक्यलब्धोन्वयः। सोपि प्राकरणिकः स्यात्। न चेष्टापत्तिः। सप्तमाष्टमयोस्तस्यातिदेशिकत्वाङ्गीकारादिति भावः। नष्टाश्वदग्धरथवदेव परस्परनियमः सिद्ध इत्यादिप्रकरणाधिकरणवार्तिकाद्यनुरोधेन अतिव्याप्त्युद्धारमाशङ्क्याव्याप्तिदोषेण निराह ॥ **नन्वित्यादिना** ॥ **अप्रामाणिकत्वापातादिति** ॥ विकृतियागभावनाप्रकरणप्रमाणकत्वं न स्यादित्यर्थः।

कुत इत्यतो वैकृतभावनाया निराकाङ्क्षत्वात्तत्सन्निधावाम्नातकतिपयाङ्गस्य प्रकृतावभावेन क्लृप्तोपकारकतया भावनान्वयोपयुक्ताकाङ्क्षावत्त्वेनान्यतराकाङ्क्षयैव वैकृताङ्गानां वैकृतभावनयान्वयेन त्वदुक्तोभयाकाङ्क्षाकृतान्वयाभावादिति भावेनाह ॥ **तस्या इति** ॥ **क्लृप्तेति** ॥ क्लृप्तोपकाराणि

प्राकृताङ्गानि वैकृतानि तु न क्वाप्यन्यत्रान्वितानीत्यक्लृप्तोपकरणानि। तथा च विकाराः विकृतियाग-सम्बन्धिभावनाक्लृप्तोपकारैः प्राकृताङ्गैराकाङ्क्षासहिताः सत्यः समीपस्थं चोदितं विहितमप्यङ्गं प्रोज्झ्यत्यक्त्वा प्राकृतैरेवाङ्गैः सह प्रथमं सम्बध्यन्त इत्यर्थः।

## तर्कताण्डवम्

**यदि च वैकृतभावनायाः प्राकरणिकाङ्गरूपाकाङ्क्षणीयान्तरं दृष्ट्वेतिकर्तव्यताकाङ्क्षोत्थाप्यते तर्हि प्राकृताङ्गानामपि चोदनापादितवैकृतभावनाकाङ्क्षणीयान्तरं दृष्ट्वा प्रयोजनाकाङ्क्षोत्थाप्यताम्। अस्मत्पक्षे तु प्राकृताङ्गवाक्यानां वैकृतप्रधानवाक्यस्य चैकसन्दर्भत्वाभावान्न विकृतौ प्राकृताङ्गान्वयस्य प्राकरणिकत्वापातः॥**

## न्यायदीपः

ननु—विकाराणां वैकृताङ्गे स्वारसिकाकाङ्क्षाभावेप्युत्थापिताकाङ्क्षा रक्तपटादिस्थळ इव सेत्स्यति। तथाचैकस्य स्वरसाकाङ्क्षाऽपरस्य तूत्थापितेत्यन्योन्याकाङ्क्षाद्वयोरप्यस्तीति न वैकृताङ्गानामप्राकरणिकत्वापत्तिरिति शङ्कामनूद्य प्रतिबन्द्या प्रागुक्तातिव्याप्तिदोषेणैव निराह॥ **यदि चेत्यादिना**॥

प्राकृताङ्गानामपि प्रयोजनाकाङ्क्षोत्थाप्यतामित्यन्वयः। तत्र बीजं चोदनेति। प्रकृतिवद्विकृतिः कार्येत्यतिदेशरूपचोदकवाक्यापादितं विहितस्यैवाङ्गाकाङ्क्षोदयाद्वैकृतविध्यापादितमिति वा यद्वैकृतभावनाया आकाङ्क्षणीयान्तरमवघातादि तद्दृष्ट्वेत्यर्थः।

वैकृतभावना प्राकृताङ्गान्यपेक्षत इति प्राकृताङ्गानां प्राकृतभावनायां क्लृप्तोपकारतया वैकृतभावनया स्वरसाकाङ्क्षाभावेप्युत्थापिताकाङ्क्षा कल्प्यताम्। तथा च तत्राप्युभयाकाङ्क्षावशादेवान्वय इत्यतिदेशकाङ्गानामपि प्राकरणिकत्वापात इति प्रागुक्तदोष एव स्थिर इति भावः। साकाङ्क्षवाक्यसन्दर्भः प्रकरणमिति पक्षेप्येषदोषः सम इत्यत आह॥ **अस्मदिति**॥

## तर्कताण्डवम्

**यथा च – पदार्थयोरन्योन्यान्वये आकाङ्क्षादिमत्पद-सङ्घातरूपं वाक्यं प्रमाणम्, नाकाङ्क्षामात्रम्। तथा प्रकरणा-धिकरणव्युत्पादिते वाक्यार्थयोः प्रकरणतदुप-कारकयोरन्योन्यान्वयेप्याकाङ्क्षादिमद्वाक्यसङ्घातरूपमस्मदुक्तं प्रकरणमेव प्रमाणम्। नत्वाकाङ्क्षामात्रम्। तस्य योग्यतादि-वदन्वयबोधकशब्दविशेषणमात्रत्वेन स्वयमन्वयाबोधक-त्वात्।**

## न्यायदीपः

नन्वेवं कथं तर्हि ''असंयुक्तं प्रकरणादितिकर्तव्यतार्थत्वाद्'' इतितार्तीयप्रकरणाधिकरणे दर्शपूर्णमासयोः प्रयाजादेश्चाकाङ्क्षारूपप्रकरणे नाङ्गाङ्गिभावकथनमित्यतो नैवं तदधिकरणार्थः किन्त्वस्मदुक्तप्रकरणेनैवाङ्गाङ्गीभावनिर्णय इति सदृष्टान्तमुपपादयति ।। **यथा चेति** ।। गामानयेत्यादौ गोरूपानयनरूपपदार्थयोरित्यर्थः।

।। **वाक्यार्थयोरिति** ।। यदाग्नेयादिवाक्यार्थसमिधादिवाक्यार्थयोरित्यर्थः ।। **करणेति** ।। दर्शादिरूपकरणसमिद्यागादिरूपतदुपकारकयोरित्यर्थः। कुतो नेत्यत आह ।। **तस्येति** ।। आकाङ्क्षा-मात्रस्येत्यर्थः ।। **योग्यतावत्** ।। योग्यतासत्तिवत्।

## तर्कताण्डवम्

**एवं प्रकरणान्तराधिकरणव्युत्पादिते भिन्नवाक्य-सन्दर्भप्रतिपाद्ययोर्नित्याग्निहोत्रमासाग्निहोत्रयोर्भेदेप्यस्मदुक्त-प्रकरणस्य भेद एव प्रमाणम्। नतु परोक्तप्रकरणस्य। आकाङ्क्षितृप्रधानकर्मभेदात्पूर्वमितिकर्तव्यताकाङ्क्षाभेदस्य असिद्धेः।**

### न्यायदीपः

नन्वेवमपि द्वितीये प्रकरणान्तरे ''प्रयोजनान्यत्वम्'' इति तृतीयापादीयैकादशाधिकरणे ''कुण्डपायिनामयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति'' इति सत्रस्थमासाग्निहोत्रस्य ''यावज्जीवमग्निहोत्रं जुहोति'' इति वाक्योक्तनित्याग्निहोत्रादन्यत्वं मीमांसकाभिमतेतिकर्तव्यताकाङ्क्षाभेदरूपप्रकरणभेदादेवोपपाद्यते तत्कथमुपपाद्यतामित्यतोस्मत्पक्ष एवोपपद्यते न परमत इत्याह **॥ एवमिति ॥**

**॥ परोक्तप्रकरणस्येति ॥** भेद इत्यनुषङ्गः। तत्र हेतुराकाङ्क्षित्रिति। इतिकर्तव्यतामपेक्षमाणानि प्रधानकर्माणि। तथा च तादृशप्रधानकर्मणां भेदे सति कर्मभेदनिबन्धन इति कर्तव्यताकाङ्क्षाभेदः कर्मभेदात्प्रागसिद्धः स न कथं कर्मभेदहेतुः स्यात्। अन्यथा कर्मभेदे सिद्धे इतिकर्तव्यताकाङ्क्षाभेदसिद्धिः तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयापत्तेरिति भावः।

### तर्कताण्डवम्

**एवं प्रकरणार्थयोरन्योन्यान्वयेप्याकाङ्क्षादिमत्प्रकरणसन्दर्भरूपं स्थानं प्रमाणम्। अत एवावान्तरप्रकरणगतस्यापि प्रयाजादेर्महाप्रकरणिनादर्शादिना शेषतयान्वयः। अन्यथा स न सिध्येत्। स्थानस्य महाप्रकरणत्वे च प्रकरणमपि महावाक्यं स्यान्न तु वाक्यात्पृथक्। दर्शनस्थानस्थस्याप्यभिक्रमणादेर्दर्शानन्वयस्तु प्रयाजप्रकरणेन दर्शस्थानबाधात्।**

**उक्तं च मीमांसकैरपि – यथा वाक्यद्वयानुसन्धानसम्पन्नं पृथक् तथा प्रकरणद्वयानुसन्धानसम्पन्नं स्थानमिति॥**

### न्यायदीपः

''स्थानं तुल्यदेशत्वं पाठानुष्ठानतो द्विध'' इति परोक्तस्थानप्रमाणं च निराह **॥ एवमिति ॥**

आकाङ्क्षादिमद्दिति प्रकरणविशेषणम्। यागप्रकरणं यागस्याङ्गभूतमपेक्षते अङ्गप्रकरणमप्यङ्गस्य शेषिभूतमपेक्षते इत्याकाङ्क्षादिमत्प्रकरणेत्युक्तम्। तथा च यागप्रकरणाङ्गप्रकरणादिसन्दर्भरूपं स्थानं तादृशप्रकरणार्थयोरन्योन्यान्वये मानमित्यर्थः।

तदेवाह॥ **अत एवेति**॥ उक्तसन्दर्भरूपस्थानस्य प्रकरणद्वयार्थान्वये मानत्वादेव प्रयाजप्रकरणं दर्शपूर्णमासप्रकरणं चान्योन्याकाङ्क्षावदिति तदुभयसन्दर्भरूपस्थानप्रमाणेन तयोरङ्गाङ्गीभावेनान्वय इत्यर्थः।

॥ **अन्यथेति**॥ अस्मदुक्तस्थानस्य तत्रामानत्व इत्यर्थः। न च पूर्वोक्तदिशा दर्शादिप्रकरण-प्रमाणात् सा सेत्स्यतीति युक्तम्। प्रकरणद्वयसन्दर्भरूपस्थानस्यात्रार्थेऽमानत्वे द्वयोरपि प्रधानप्रक-रणित्वापातेन दर्शादेः प्रयाजादेश्चान्योन्यान्वय एव स्यात्। प्रकरणप्रमाणस्य तु अवघातादिशेषतोदाहरणं अवान्तरेत्युक्तिरपि वास्तवाभिप्रायेणेति तात्पर्यात्। स्थानस्य पृथक्त्वाभावशङ्कामनूद्य प्रतिबन्द्या निराह ॥ **स्थानस्येति**॥

नन्वेवं भवदुक्तस्थानस्यापि प्रमाणत्वे दर्शप्रतिपादकप्रकरणजातरूपस्थाने अभिक्रामं जुहोतीति श्रूयमाणमभिक्रमणमवान्तरप्रकरणेन प्रयाजाङ्गं न स्यात् स्थानप्रमाणेन दर्शाङ्गस्यैव सम्भवादित्यत आह ॥ **दर्शस्थानस्थस्यापीति**॥ **बाधादिति**॥ प्रकरणापेक्षया स्थानस्य दुर्बलत्वादिति भावः।

ननु प्रकरणद्वयार्थयोरन्योन्यान्वये तदनुसन्धानरूपं स्थानं मानमित्येतन्न परसम्मतमित्यत आह ॥ **उक्तं चेति**॥ स्थानं पृथक्प्रमाणमित्येतदुक्तं चेत्यर्थः॥ **स्थानमितीति**॥ पृथगित्यनुकर्षः।

## तर्कताण्डवम्

**समानदेशत्वादिकमपि शेषशेषित्वे स्थानतया न प्रमाणम्। स्थानत्वेन त्वदभिप्रेते यथासङ्ख्याम्नानं सन्निध्याम्नानं चेति द्विविधपाठसादेश्येऽनुष्ठानसादेश्ये चानुगतस्य एकस्य स्थानत्वस्याभावात्। ग्राहकसन्निध्याम्नानरूप-प्रकरणस्य समभिव्याहाररूपवाक्यादेश्च सन्निध्याम्नानरूप-त्वाच्च।**

**किं तु नामधेयत्वे वाक्यभेदतत्प्रख्यतद्व्यपदेशादिवद् द्वैतीये कर्मभेदे अभ्यासादिवत्पाञ्चमिके क्रमे पाठादिवच्च प्रमाणान्तरतया अस्थानरूपस्यापि तस्य प्रकरणाद्दुर्बलत्वनियमस्त्ववाक्य-रूपस्यापि पाञ्चमिकस्य पाठस्य लिङ्गरूपादर्थाद् दौर्बल्य-नियमवद्युक्तः।**

## न्यायदीपः

नन्वस्त्वेकत्र पठितप्रकरणद्वयानुसन्धानस्य भवदुक्तस्थानत्वेन मानत्वम्। यथासङ्ख्याम्नान-पाठसादेश्यानुष्ठानसोदश्यानां तु कथमित्यतो नैतेषां स्थानप्रमाणत्वम्, किं तु मानान्तरत्वमेवेत्याह **॥ समानदेशत्वादिकमिति ॥** द्विविधसमानदेशत्वेत्यर्थः। अनुष्ठानसादेश्यमादिपदार्थः। न प्रमाणमित्यस्य किन्त्वित्यादिनान्वयः।

**॥ एकस्येति ॥** स्थानं तु तुल्यदेशत्वमिति प्रागुक्तं तु नानुगतम्। शब्दसाम्यमात्रस्यातिप्रसङ्गित्वा-दिति भावः। कथं चिदनुगमेप्यतिव्याप्तिर्वाक्यप्रकरणयोः स्यादित्याह **॥ ग्राहकेति ॥** दर्शादिजन्यापूर्व ग्राहकमुच्यते तत्प्रतिपादकलिङाद्युपेतवाक्यसन्निध्याम्नानरूपेत्यर्थः।

**॥ समभिव्याहारेति ॥** यजेत स्वर्गकाम इत्यादौ पदद्वयादिसमभिव्याहारस्थले पदानामन्योन्य-सान्निध्याम्नानस्य सत्त्वादिति भावः। किन्त्वित्यस्य प्रमाणान्तरतयेत्यन्वयः। तत्र दृष्टान्तत्रयम् नामधेयत्व इत्यादि। आद्यस्य चतुर्थपादे "अपि वा नामधेयं स्या"दित्यधिकरणे उद्भिदा यजेतेत्यादौ उद्भिच्छब्दस्योर्ध्वं भिनत्तीति व्युत्पत्त्या खनित्रादिरूपगुणविधित्वे उद्भिता यागं कुर्यात् यागेन च स्वर्गं भावयेदिति वाक्यभेदप्रसङ्गात् उद्भिच्छब्दो यागनामधेयमित्युक्तम्। तथा तत्रैवाग्निहोत्रं जुहोतीत्यत्र किमग्नये होत्रं हविरस्मिन्निति व्युत्पत्त्योपसर्जनीभूताग्निरूपदेवताख्यगुणविधिः किं वा कर्मनामधेयम-ग्निहोत्रपदमिति सन्देहे गुणविधिरिति प्राप्ते कर्मण्यग्निदेवतासम्बन्धप्रख्यापकस्या "ग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती"तिशास्त्रस्य सत्त्वेन तत्प्रख्यापकशास्त्रप्राप्ताग्निसम्बन्धेन निमित्तेनाग्निहोत्र-मितिनामधेयमित्युक्तम् "तत्प्रख्यं चान्यशास्त्रम्" इत्यधिकरणे। तथा तत्रैव "श्येनेनाभिचरन्यजेत यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त" इति वाक्ये श्येनररूपगुणविधिरुत

कर्मनामेति विशये पक्षिविशेषे रूढत्वाच्छयेनशब्देन गुण एव विधीयत इति प्राप्ते यथा वा इति वाक्यशेषे प्रसिद्धश्येनेन व्यपदेशः कर्मणोस्तीति तद्बलेन श्येन इव श्येन इति श्येनशब्दो यागनामधेयमित्युक्तमिति वाक्यभेदतत्प्रख्यतद्व्यपदेशादिवदित्युक्तम्। आदिपदेन वा (जि) जपेयनयोक्तविरुद्धत्रिकद्वया-पत्तिर्ग्राह्या।

द्वैतीये द्वितीयाध्यायप्रतिपादिते कर्मभेदे शब्दान्तराभ्याससङ्ख्यागुणप्रकरणनामधेयानि षट्प्रमाणान्युक्तानि। तत्र यजतिददातिजुहोति चोदनासुयज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदः ''शब्दान्तरे कर्मभेदः कृतानुबन्धत्वाद्'' इति द्वितीयपादीयाद्यनयेऽभिहितः।

तत्रैव पादे समिधो यजति तनूनपातं यजतीत्यादिविधिषु यजतीति पञ्चकृत्वः श्रवणरूपाभ्यासेन समिधादिप्रयाजादीनां भेदः ''एकस्यैव पुनः श्रुतिविशेषादनर्थकं हि स्याद्'' इति नयेऽभिहितः।

''सप्तदशप्राजापत्यान् पशूनालभत'' इत्यत्र द्रव्यदेवतासबन्धभेदिन्या सप्तदशसङ्ख्यया द्रव्य-देवतासम्बन्धानुमेययागानां भेदः ''पृथक्त्वनिवेशात्सङ्ख्ययाकर्मभेदः स्याद्'' इतिनये कथितः।

अथैष ज्योतिरित्यादिवाक्येषु ज्योतिरित्यादिनामधेयेन तन्नामकयागस्य प्रकृतज्योति-ष्टोमयागाद्भेदः ''सञ्ज्ञाचोत्पत्तिसंयोगाद्'' इत्यत्रोक्तः।

''तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षावाजिभ्योवाजिनम्'' इत्यत्राक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिगुणेन वाजियागस्यामिक्षायागाद्भेदः ''गुणश्चापूर्णसंयोग'' इत्यत्रोक्तः।

तत्रैव तृतीयपादे नित्याग्निहोत्रान्मासाग्निहोत्रस्य प्रकरणान्तररूपप्रमाणेन ''प्रकरणान्तरे प्रयोजनान्यम्'' इत्यत्रोक्त इत्यभ्यासादिवदित्युक्तम्। शब्दान्तरापेक्षाया अभ्यासादिर्यथा पृथक्प्रमाणं तथेत्यर्थः।

पाञ्चमिके पञ्चमाध्यायप्रतिपादिते कर्मणां पौर्वापर्यरूपे क्रमे श्रुत्यर्थपाठप्रवृत्तिस्थानमुख्य-क्रमभेदात् षट्प्रमाणान्युक्तानि।

तत्र''ध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयत'' इत्यादौ श्रुत्यादावुक्त्वा श्रुत्या ग्रहपत्यादी-नामुन्नेत्रन्तानां दीक्षाक्रमः ''श्रुतिलक्षणमानुपूर्व्यन्तत्प्रमाणत्वात्'' इत्याद्याधिकरणे अभिहितः।

अग्निहोत्रं जुहोति यवागुं पचतीत्यादौ होमद्रव्यनिष्पत्त्यर्थं यवागुपाकप्रयोजनरूपेणार्थेन पाकहोमयोः पौर्वापर्यरूपः क्रमः "अर्थाच्च" इति नये कथितः। समिधोयजतीत्यादिविधिविहितानां प्रयाजादीनां पाठक्रमात्क्रमः "क्रमेण वा नियम्येतक्रत्वेकत्वे तद्गुणत्वाद्" इति नयेऽभिहितः।

वाजपेये प्राजापत्यानां पशूनां प्रतिपश्वावर्तनीयेषूपाकरणविनियोजनादिषूपाकरणे यत्किञ्चित् पशुमारभ्य यत्र क्वच समापिते सति तेनैव प्रवृत्तक्रमेण नियोजनादयः कार्या इति "प्रवृत्या तुल्यकालानां तदुपक्रमाद्" इत्यत्रोक्तसाद्यस्क्रनामके क्रतौ सह पशूनालभते इति श्रुत्या सवनीयस्थान एवाग्नीषोमीयसवनीयानुबन्ध्याख्यपशुत्रयस्यापि सह कर्तव्यतया प्राप्तौ सवनीयस्थानेन प्रथमं सवनीयपशोरुपाकरणमनन्तरमग्नीषोमीयानुबन्ध्ययोरिति स्थानेन क्रमः "स्थानाच्चोत्पत्तिसंयोगाद्" इत्यत्रोक्तः।

तथा दर्शे पुरोडाशसान्नाय्ययोर्मुख्यक्रमेण प्रयाजशेषाभिघारणक्रम इति "मुख्यक्रमे वाङ्गानां तदर्थत्वाद्" इत्यत्रोक्तः। तथा त्र यथा श्रुत्यर्थापेक्षया पाठादेः प्रमाणान्तरता तथेत्यर्थः। व्यक्तमेतत्सर्वं गुरुपादकृतन्यायाध्वदीपिकायाम्।

ननु – समानादेशत्वादेः स्थानरूपप्रमाणत्वाभावे "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षाद्" इति सूत्रोक्तं स्थानस्य प्रकरणाद्दुर्बलत्वं न स्यात्। तथाच अभिषेचनीयनामक सोमयागसन्निध्याम्नातविदेवनादीनां सन्निध्याम्नानरूपस्थानबाधेन प्रकरणबलेन राजसूयनामकसर्वकर्माङ्गताभङ्गप्रसङ्गादित्यत आह ॥ **अस्थानेति** ॥ **तस्येति** ॥ समानदेशत्वादेः।

॥ **लिङ्गरूपादर्थादिति** ॥ पञ्चमे "क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वच्च" इति चतुर्थपादीयाद्यनये तथोक्तेः। अन्यथा पाठक्रस्यैवानुरोधे होमानन्तरमेव यवागूपाकापत्तेरिति भावः।

## तर्कताण्डवम्

**उक्तं हि – "श्रुत्यर्थपाठस्थानमुख्याप्रवृत्तीनां समवाये परदौर्बल्य"मिति।**

**अस्मदुक्ता समाख्यापि परेषामपि तावत्प्रमाणमेव।**

अन्यथा–

"मैत्रायणीयशाखायां दात्रुपक्रमतोप्यृते।
कर्माङ्गत्ववशादेव दातुरिष्टिः प्रतीयते"।

इत्यादौ मैत्रायणीयशाखास्थनिर्णीतवाक्यान्तरेण सन्दिग्ध-तैत्तिरीयशाखास्थाश्वप्रतिग्रहेष्ट्यादिवाक्यार्थनिर्णयोक्त्य-योगात्।

नापीयं लिङ्गाद्यन्तर्गतेति पृथगेव। परोक्तयौगिकशब्दे तु समा चासावाख्येत्यवयवार्थोऽस्मदुक्तसमाख्यायामिव नानुगतः॥

किञ्चेयं श्रुतिरेव। अन्यथा "यदाग्नेयोऽष्टाकपालः वैश्वदेव्यामिक्ष" इत्यादौ यौगिकानामाग्नेयादिशब्दाना-मग्न्यादेर्देवतात्वे श्रुतित्वं न स्यात्। समाख्यात्वमेव च स्यात्। समाख्या च सर्वजघन्येति चतुर्थीश्रुतितो मन्त्रवर्णाच्च दुर्बला स्यात्। तच्च–

"तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवतासङ्गतिस्तत्र दुर्बलं तु परम्परम्"।

इति वार्तिकविरुद्धम्।

## न्यायदीपः

॥ **उक्तं हीति** ॥ अर्थादिना पाठादेर्बाध इत्येतन्न्यायरत्नमालायामुक्तमित्यर्थः। एवं परोक्तं स्थानप्रमाणं निरस्य "समाख्या यैगिकी सञ्ज्ञालौकिकी वैदिकी च स" इत्युक्तसमाख्यां च निरसितुं स्वोक्तसमाख्या परसम्मतेति तावदाह॥ **अस्मदिति** ॥ अन्यत्र तत्समोक्तिस्तु समाख्येत्यस्मदुक्तेत्यर्थः

॥ **मैत्रायणीयेति** ॥ व्याख्यातमेतत्पूर्वभङ्गे ॥ **नापीयमिति** ॥ इयमस्मदुक्ता समाख्या लिङ्गवाक्याद्यन्तर्गतापि न भवतीति पृथगेव प्रमाणमित्यर्थः।

समाख्याशब्दावयवार्थपर्यालोचनयाप्यस्मदुक्ता समाख्यैव समाख्याशब्दार्थत्वेनायाति न तु परोक्ता समाख्येत्याह ॥ **परोक्तयौगिकशब्दे त्विति** ॥ होतृचमसं आध्वर्यवमित्यादिशब्देष्वित्यर्थः।

सम्यगाख्येत्यस्तु व्युत्पत्तिरिति वदन्तं प्रत्याह ॥ **किञ्चेति** ॥ इयं परोक्तयौगिकसञ्ज्ञा-रूपसमाख्येत्यर्थः। अस्तु को दोष इत्यत आह ॥ **समाख्या चेति** ॥ **सर्वेति** ॥ श्रुत्यादिसर्वप्रमाणापेक्षया दुर्बलेत्यर्थः।

अस्तु दुर्बलेत्यत आह ॥ **तच्चेति** ॥ दौर्बल्यमित्यर्थः। तत्रेति श्रवणादत्रेति योज्यम्। आग्नेयोष्टाकपाल इत्यादौ तद्धितेनाग्नेर्ढगिति देवतायां ढक्स्मरणात्। ''विष्णवे शिपिविष्टाय श्रिते चरुं निर्वपेद्'' इत्यादौ चतुर्थ्या अग्निर्ज्योतिरग्निःस्वाहेत्यादिमन्त्रवर्णेनाग्निहोत्रादौ देवतासङ्गतिरित्यर्थः ॥ **परं परं** ॥ पश्चात्तनम्पश्चात्तनमित्यर्थः।

## तर्कताण्डवम्

**नन्वाध्वर्यवमित्यत्र प्रातिपदिकेनाध्वर्युस्वरूपमुक्तम्। प्रत्ययेन त्ववघातादिः। तयोः सम्बन्धस्तु न कस्यचिद्वाच्यः। स तु वाक्ये पदार्थानां सम्बन्ध इव समभिव्याहारगम्यः। यौगिकशब्दानां सम्बन्धानभिधायित्वात्। यथोक्तम्–**

**''पाकं तु पचिरेवाह कर्तारं प्रत्ययोप्यकः।**
**पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित्''**

**इति। आग्नेय इत्यादौ तु देवतार्थ एव तद्धितविधिरिति चेन्न। तद्धितेन देवतामात्रोक्तावप्यग्निदेवतेत्यस्य समभिव्याहार-गम्यत्वात्। आध्वर्यवमित्यत्राप्यध्वर्योरिदमिति सम्बन्धार्थ एव तद्धितविधेश्च।**

**किञ्च यजेतेत्यत्र यागभावनयोः सम्बन्ध इव आध्वर्यवमित्यत्रापि सम्बन्धे प्रकृतिप्रत्ययसमभिव्याहाररूपपदश्रुतेः प्रमाणत्वान्न स्थानाद्दुर्बलत्वम्॥**

## न्यायदीपः

आग्नेयमित्यादौ श्रुतित्वमेव वाच्यम् न समाख्यात्वं तस्याः सम्बन्धाबोधकत्वादिह च देवतासम्बन्धस्य शब्दतः प्रतीतेरिति शङ्कते ॥ **नन्विति** ॥ कुत एवमित्यत आह ॥ **यौगिकशब्दानामिति** ॥

पाचकशब्दाभिप्रायेणाह ॥ **पाकं त्वित्यादि** ॥ **अक इति** ॥ ण्वुल्तृचाविति सूत्रे कर्तरि विहितण्वुल्प्रत्ययस्य युवोरनाकावित्याकादेशे सति प्रत्ययस्थाने प्राप्तस्य प्रत्ययत्वात्प्रत्ययरूपोक इत्युक्तम्। यद्वा प्रत्ययः – प्रत्ययादेश इत्यर्थः ॥ **देवतार्थ इति** ॥ "सास्यदेवत" इत्यधिकृत्या "ग्नेर्ढगित्या" दितद्धितनामकप्रत्ययविधानादिति भावः।

आग्नेयमित्यादावपि समाख्यास्थळतौल्यमाह ॥ **तद्धितेनेति** ॥ समाख्यायामपि श्रुतितौल्यमाह ॥ **आध्वर्यवमित्यत्रापीति** ॥ **तद्धितेति** ॥ तस्येदमित्यण्प्रत्ययरूपतद्धितविधानादिति भावः।

समाख्यायाः समभिव्याहारत्वेन मानत्वे बाधकान्तरं चाह ॥ **किञ्च यजेतेत्यत्रेति** ॥ **दुर्बलत्वमिति** ॥ समाख्याया इति योज्यम्। तथाच पौरोडाशिकसमाख्यायुक्ते दर्शपूर्णमासकण्डे सान्नाय्यपात्रशुन्धनक्रमे समाम्नातस्य शुन्धध्वमिति मन्त्रस्य समाख्याप्राप्तं पुरोडाशपात्राङ्गत्वं बाधित्वा स्थानप्रमाणेन सान्नाय्यपात्राङ्गत्वं क्रमसमाख्याविरोधाधिकरणे यद्वर्णितं तद्विरुध्येतेति भावः।

## तर्कताण्डवम्

**यदिचाध्वर्यवादिशब्दैः सम्बन्धसामान्यस्यैवोक्तेर्न शेष शेषितायां श्रुतित्वम्, तर्हि सम्बन्ध वाचिन्याः षष्ठ्या दध्नेन्द्रियकामस्येत्यत्र शेषत्वे यजमानस्ययाज्येत्यत्र शेषित्वे च**

श्रुतित्वं न स्यात्। तथा–

"सम्बन्धमात्रमुक्तं तु श्रुत्या धात्वर्थभावयोः।
तदेकांशनिवेशे तु व्यापारोस्याविरोधतः"।

इति वार्तिकोक्तेर्यजेतेतिपदश्रुतेर्यागभावनयोः शेषशेषित्वे च श्रुतित्वं न स्यात्। तच्चेष्यते। अथयोग्यतावशेन षष्ठ्यादिरेव शेषशेषित्वे पर्यवस्यातीति श्रुतित्वं तर्हीहापि तथास्तु। शुन्धत्वं दैव्याय कर्मण इति शोधनमन्त्रे पौरोडाशिकमिति यौगिक-सञ्ज्ञा तु लौकिकत्वाद्वैदिकेन सान्नाय्यपात्रसन्निधानेन बाधिता। वैदिक्यास्तु न सन्निधानमात्रेण बाधः।

अत एवोक्तं नयविवेके –

"समाख्या पौरुषेयी सन्निध्यादिकं कल्पयन्ती विप्रकृष्ट"

इति। वैदिकाविरोधिलौकिक्यपि प्रमाणमेवेति न समाख्या धिकरणविरोधः।

तस्मान्न मीमांसकोक्तं श्रुत्यादिलक्षणं युक्तम्। किं तु टीकोक्तमेव।

परोक्तश्रुत्यादिलक्षणभङ्ग ॥८०॥

## न्यायदीपः

सम्बन्धमात्रे श्रुतित्वेपि न शेषत्वादिबोधरूपविनियोग इति शङ्कामनूद्य निराह ॥ **यदि चेति** ॥ **षष्ठ्या इत्यादि** ॥ एतच्च श्रुतिप्रभेदोक्तिप्रस्ताव एवास्माभिर्विवृतम्। तथाच तद्व्युत्पादकसन्निपात इत्याद्यधिकरणविरोध इति भावः। तथेत्यस्य यजेतेति पदश्रुतेः श्रुतित्वं न स्यादित्यन्वयः॥ **श्रुत्येति**॥ प्रकृतिप्रत्ययसमभिव्याहाररूपदश्रुत्येत्यर्थः।

॥ **भावयोः** ॥ भावनयोरित्यर्थः ॥ **तदेकांशेति** ॥ क्रियाकरणत्वरूपैकांशनिवेशे तु अस्याः श्रुतेरित्यर्थः। श्रुतित्वं न स्यादित्यत्र तर्हीत्यापादकानुकर्षः। परमुखेनैव समाधानं वाचयित्वा समं ममापीत्याह ॥ **अथेति** ॥ **इहापीति** ॥ आध्वर्यवमित्यादिसमाख्यास्थळेपीत्यर्थः।

नन्विहापि तथास्त्वित्ययुक्तम्। तथात्वे समाख्यायाः श्रुतिरूपतापत्त्या समाख्याबाधेन स्थान-प्रमाणबलात्सान्नाय्यपात्राङ्गत्वं शुन्धनमन्त्रस्य न स्यात् किन्तु पुरोडाशपात्राङ्गतैव स्यादित्यत आह ॥ **शुन्धध्वमिति** ॥ **लौकिकत्वादिति** ॥ अध्यापकसङ्केतरूपत्वादिति भावः। तर्हि समाख्यामात्रबाधः स्यादित्यत आह ॥ **वेदिक्यास्त्विति** ॥ वेदोक्तायास्त्वित्यर्थः।

नन्वेवं "आख्या चैवं तदर्थत्वाद्" इत्यधिकरणविरोधः। तत्राध्वर्यवादिलौकिकसञ्ज्ञाया मानत्वोक्तेरित्यत आह ॥ **वैदिकेति** ॥

परोक्तश्रुत्यादिलक्षणभङ्गः ॥ ८० ॥

***

## ८१. अथ भट्टोक्तश्रुत्यादिबलाबलबीजभङ्गः।

### तर्कताण्डवम्

**यच्चोक्तं वार्तिके–**

**श्रुत्यादिषूत्तरोत्तरस्य पूर्वपूर्वानुमापकत्वेनैव प्रामाण्यम्। न स्वतः। एतच्च दूषणावसर एव स्पष्टयिष्यते।**

**एवं च श्रुतेर्निरपेक्षत्वात्साक्षादेव प्रामाण्यम्।**

**लिङ्गस्य तु श्रुतिमात्रकल्पनापेक्षत्वादेकान्तरितम्।**

**वाक्यस्य तु लिङ्गश्रुतिकल्पनापेक्षत्वाद्द्व्यन्तरितम्।**

प्रकरणस्य तु वाक्यलिङ्गश्रुतिकल्पनापेक्षत्वात्त्र्यन्तरितम्

स्थानस्य तु प्रकरणवाक्यलिङ्गश्रुतिकल्पनापेक्षत्वात् चतुरन्तरितम् ।

समाख्यायास्तु स्थानप्रकरणवाक्यलिङ्गश्रुतिकल्पनापेक्षत्वात् पञ्चान्तरितमिति विप्रकर्षात्परदौर्बल्यम्।

तदुक्तम्–

> ''एकद्वित्रिचतुःपञ्चश्रुत्यन्तरितकारितम्।
> श्रुत्यर्थं प्रतिवैषम्यं लिङ्गादीनामपीष्यते''

इति।

## न्यायदीपः

एवं श्रुत्यादिलक्षणं पराभिमतं निरस्येदानीं ''श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यं, अर्थविप्रकर्षात्'' इति तृतीयाध्यायतृतीयपादीयसूत्रे श्रुत्यादिबलाबलबीजमपि परोक्तमनूद्य निरस्यति॥ **यच्चेति**॥ इति विप्रकर्षात्परदौर्बल्यमित्यनेनान्वयः।

कथमनुमापकत्वमित्यत आह॥ **एतच्चेति**॥ **साक्षादेव**॥ प्रमाणान्तरकल्पनां विनैव। प्रामाण्यं शेषशेषिभावप्रमितिजनकत्वमित्यर्थः।

॥ **लिङ्गस्येति** ॥ सामर्थ्यरूपलिङ्गस्य। एकान्तरितमित्यादौ प्रामाण्यमित्यनुषङ्गः ॥ **लिङ्गश्रुतीति**॥ पूर्वं लिङ्गकल्पना, पश्चाच्छ्रुतिकल्पनेत्येवं रूपेणेत्यर्थः। एवमग्रेपि।

॥ **प्रकरणस्य**॥ इतिकर्तव्यताकाङ्क्षारूपस्य। स्थानस्य तुल्यदेशत्वरूपस्य समाख्यायाः यौगिकसञ्ज्ञारूपायाः लिङ्गवाक्यादिविप्रकर्षोक्तिप्रस्तावे वार्तिकोक्तं संवादयति॥ **तदुक्तमिति**॥ **श्रुत्यन्तरयाकारितं**॥ श्रुतिव्यवधानकारितं वैषम्यमित्यर्थः।

## तर्कताण्डवम्

**एवं चैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र गार्हपत्य-मितिद्वितीयाश्रुत्या ''कदाचनस्तरीरसिनेन्द्रे''तिमन्त्रस्येन्द्र-प्रकाशनसामर्थ्यरूपलिङ्गबाधेनगार्हपत्ये विनियोगः।**

## न्यायदीपः

एतेषां परदौर्बल्योक्तेः फलं वदन्नुदाहरणं दर्शयति ।। **एवं चेत्यादिना** ।। **ऐन्द्र्या** ।। इन्द्रप्रति-पादकया गार्हपत्याख्यमग्निमुपतिष्ठते स्तौति प्रकाशयतीत्यर्थः ।। **कदाचनेति** ।। यद्यपि भाष्ये

''निवेशनः सङ्गमनो वसूनां विश्वारूपाभिचष्टे शचीभिः।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ''

इति मन्त्र एवोदाहृतः। तथापि तत्रेन्द्रशब्दस्य दूरे श्रवणात् अस्मिन्मन्त्रे प्रथमं श्रवणेनेन्द्रत्वस्याल्प-वाक्योक्त्या सुज्ञानत्वात्केषाञ्चित्कादाचनस्तरीरसीतीतिवार्तिकोक्तेरस्याप्यग्निहोत्रप्रकरणे महोपस्थाने पाठाच्चायमेव मन्त्र उदाहृतः ।। **विनियोग इति** ।। मन्त्रस्थेन्द्रपदस्य गौणताश्रयणेन गार्हपत्य-प्रकाशनशेषत्वमित्यर्थः।

## तर्कताण्डवम्

**तथा ''स्योनं ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेदसुमनस्य मान'' इति स्योनं ते मन्त्रे पूर्वोत्तरभागयोः प्रत्येकमनुष्ठेयसदनासादनप्रकाशनसामर्थ्यरूपलिङ्गेन समभिव्याहाररूपवाक्यबाधाद्विभज्य विनियोगः।।**

## न्यायदीपः

श्रुतिलिङ्गविरोधे उदाहरणमुक्त्वा लिङ्गवाक्ययोर्विरोधे उदाहरणमाह ।। **तथास्योनमिति** ।।

तथेति समुच्चये। विनियोग इत्यनेनान्वयः।

हेव्रीहिणाम्मेदेति पुरोडाशद्रव्यसम्बोधनम्। ते तव स्योनं सुखकरम् सदनमाश्रयम् कृणोमि करोम घृतस्य धारया सुषेवं सुखसेव्यम् कल्पयामि तस्मिन् प्रतिष्ठितो भवेति दर्शपूर्णमासप्रकरणस्थमन्त्रस्यार्थः

॥ **पूर्वोत्तरभागयोरिति** ॥ कल्पयाम्यन्तः पूर्वभागः तस्मिन्नित्यादिरुत्तरभाग इति ज्ञेयम्। तत्र हि पूर्वोत्तरभागसमभिव्याहारबलेनैकवाक्यतावगमात्कथञ्चिदर्थमुपेत्य कृत्स्नस्य वाक्यस्य सदनकरणे प्रतिष्ठापने च विनियोगे प्राप्ते लिङ्गवाक्यविरोधाधिकरणसिद्धान्तमनुवदति ॥ **प्रत्येकमिति** ॥ प्रत्येकं सदनादिप्रकाशनसामर्थ्यरूपलिङ्गेनेत्यन्वयः।

अनुष्ठेयेति सदनासादनयोर्विशेषणम्। प्रकाशन वैयर्थ्यशङ्कानिरासायानुष्ठानार्थसूचनायोक्तं विभज्येति। सदनप्रकाशनसमर्थस्य कल्पयाम्यन्तस्य सदनकरणे तस्मिन्नित्यादेरासादनप्रकाशन-समर्थस्यासादनकरणे विनियोग इत्यर्थः।

## तर्कताण्डवम्

**तथे''न्द्राग्नी इदं हविरजुषेता''मित्यत्रेदं हविरित्या-देरिन्द्राग्नीपदसमभिव्याहाररूपवाक्येन दर्शपूर्णमास-प्रकरणबाधा''दग्नीषोमाविदं हविः'' इतिश्रुतपूर्णमासीया-ग्नीषोमपदानन्वयः ॥**

## न्यायदीपः

वाक्यप्रकरणयोर्विरोधे उदाहरणमाह ॥ **इन्द्राग्नी इति** ॥ इन्द्राग्नी इदं हविरजुषेतामिति दर्शपौर्णमासिके सूक्तभेदे इन्द्राग्नी इति देवतापदं लिङ्गाद्दर्श एव प्रयोक्तव्यमिति स्थिते समभिव्याहारेण तदेकवाक्यभूतं इदं हविरजुषेतामित्यादिकं प्रकरणाविशेषादग्नीषोमाविति पौर्णमासीदेवतावाचि-पदेनाप्यन्वीय पर्वद्वये प्रयोक्तव्यमुतेन्द्राग्नीपदैकवाक्यत्वात्तद्वदेव दर्श एव प्रयोक्तव्यमिति सन्देहे प्रकरणाविशेषादेकवाक्यताभङ्गेन पर्वद्वयेपि प्रयोक्तव्यमिति प्राप्ते वाक्यप्रकरणविरोधाधि-करणसिद्धान्तमाह ॥ **इदं हविरित्यादेरिति** ॥

## तर्कताण्डवम्

**तथा राजसूयप्रकरणस्थस्याभिषेचनीयसन्निहितस्य देवनादेः प्रकरणेन सन्निधिरूपस्थान बाधाद्राजसूयान्वयः। तथा शोधन मन्त्रस्य सान्नाय्यपात्रसन्निधिरूपस्थानेन पौरोडाशिकमितिसमाख्याप्राप्तपुरोडाशपात्रान्वयबाधात्सान्नाय्यपात्रान्वय इति।**

## न्यायदीपः

स्थानप्रकरणयोर्विरोधे उदाहरणमाह ॥ **तथा राजेति** ॥ राजसूये बहवः पश्विष्टिसोमयागाः समप्रधानतया पठिताः। तत्राभिषेचनीयाख्यसोमयागस्य सन्निधौ विदेवनादयः केचनाम्नाताः ते किमभिषेचनीयमात्राङ्गमुत सर्वराजसूयाङ्गमिति सन्देहे सन्निधिविशेषादभिषेचनीयमात्राङ्गत्वे प्राप्ते सिद्धान्तः ॥ **राजसूयप्रकरणस्थस्येत्यादि** ॥ स्थानसमाख्याविरोधे उदाहरणम्।

॥ **तथाशोधनेति** ॥ पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्यपात्रशुन्धनक्रमे पठितः शुन्धध्वमिति मन्त्रः किं पुरोडाशपात्राङ्गमुत सान्नाय्यपात्राङ्गमिति संशये समाख्यावशात् पुरोडाशपात्राङ्गमिति प्राप्ते सिद्धान्तः ॥ **शोधनमन्त्रस्येति** ॥ इतिपदस्य इतिदौर्बल्यं यच्चोक्तमिति पूर्वेणान्वयः।

## तर्कताण्डवम्

**तत्र तावल्लिङ्गस्य श्रुतिकल्पकत्वमयुक्तम्। तथाहि–**

**न तावल्लिङ्गस्याशब्दत्वेनाज्ञापकत्वाज्ज्ञापकतया श्रुति कल्पनम्। लिङ्गस्य स्वरूपेणाज्ञापकत्वेप्यन्यथानुपपद्यमानतया प्रमाणभूतां श्रुतिं प्रतीव प्रमेयभूतं विनियोगं प्रत्यपि ज्ञापकत्वसम्भवात्। न हि लिङ्गं विनियोजकश्रुतिं विना नोपपद्यते, विनियोगं तु विनोपपद्यत इति सम्भवति। न हि–**

"सिद्धे सामान्यसम्बन्धे सिद्धे प्रकरणान्वये।
करणीयान्वये सिद्धे पश्चाल्लिङ्गं प्रमापकम्"।

इतिन्यायेन लिङ्गविनियोगात्पूर्वमेव प्रकरणान्वितस्य दृष्टार्थस्य मन्त्रस्य या शक्तिः सा शक्यस्य द्वारान्वयं विनोपपद्यते॥

## न्यायदीपः

लिङ्गस्य श्रुतिकल्पनन्तावद् बर्हिर्देवसदनं दामीतिमन्त्रस्थं लवन प्रकाशनसामर्थ्यरूपं लिङ्गं बर्हिरितिमन्त्रेण बर्हिर्लुनुयादितिश्रुतिमनुमाय लवनशेषत्वं मन्त्रस्य बोधयतीति वाच्यम्। तत्र तत्कल्पनं किं स्वस्याबोधकत्वाद् बोधकत्वे वा स्वस्य प्रामाण्यसिद्ध्यर्थं मूलभूतत्वेन वा धर्मस्यशब्दमूलकत्वेन धर्मबोधकशब्दरूपत्वेन वा आकाङ्क्षापूर्त्यर्थं वा आद्य आह॥ **न तावदित्यादिना**॥ **अन्यथानुपपद्य-मानतयेति**॥ धूमस्येवेति भावः।

ननु विनियोगरूपार्थेन लिङ्गस्य तेन विनानुपपद्यमानत्वरूपव्याप्तिर्नास्तीत्यत आह॥ **न हि लिङ्गमिति**॥ परोक्तन्यायेनैव लिङ्गस्य विनियोगरूपार्थेन व्याप्तिमुपपादयति॥ **न हीति**॥ उपपद्यत इत्यनेनान्वयः।

तत्र वार्तिकोक्तन्यायमाह॥ **सिद्ध इति**॥ **कारणीयेति**॥ ज्योतिष्टोमादिरूपस्वर्गसाधनीयान्वये च सिद्धे सतीत्यर्थः॥ **शक्येति**॥ लवनरूपशक्यद्वारेत्यर्थः।

## तर्कताण्डवम्

नापि स्मृतेरिव लिङ्गस्य प्रामाण्याय मूलत्वेन श्रुति-कल्पनम्। स्मरणपौरुषेयवाक्ययोर्ग्रहणमूलप्रमाणसापेक्ष-त्वेपि वैदिकस्य लिङ्गस्य विनियोजकश्रुताविव विनि-योगेऽनन्यापेक्षमेव प्रमापकत्वात्। न हि श्रुतो दृष्टो वा धूमो

**वह्निग्राहकं शब्दं प्रत्यक्षं वा कल्पयित्वा तत्र प्रमाणम्। वह्निप्रश्नोत्तरेधूमोस्तीति वाक्येपि धूमेनोक्तेन श्रोता स्वयमेव वह्निं ज्ञास्यतीति विवक्षितत्वद्दृष्टधूम इव श्रुतधूम एव वह्नौ मानं न त्वनुमितो वह्निरस्तीति शब्दः। अत एव तत्र धूमः श्रुतो वह्निस्तु तेनानुमित इत्येवानुभवः। अत एव यत्र धूमस्तत्राग्निरित्यगृहीतव्याप्तेः पुंसो धूमोस्तीति वाक्याद्वह्न्यप्रतीतिः ॥**

**किञ्चैवं सति मूलिना मूलस्यानुवादकत्वायोगान्मन्त्राधिकरणोक्तं लिङ्गेन तदर्थशास्त्रस्यानुवादकत्वमयुक्तं स्यात् ॥**

## न्यायदीपः

द्वितीयं निराह ॥ **नापि स्मृतेरिवेति** ॥ मन्वादिस्मृतेरिवेत्यर्थः ॥ **स्मरणपौरुषेयवाक्ययोरिति** ॥ स्मरणं मन्वादिस्मृतिः। पौरुषेयवाक्यपदेन लौकिकवाक्यग्रहः ॥ **ग्रहणेति** ॥ अर्थं गृहीत्त्वैव स्मरणादेः करणादर्थग्रहणे यन्मूलप्रमाणं तत्सापेक्षत्वेपीत्यर्थः। यद्वा स्मृतिस्मरणशब्दाभ्यां संस्कारजन्यज्ञानग्रहः। ग्रहणञ्च मूलप्रमाणं चेतिविग्रहः। यथाक्रममन्वयः। अनन्यापेक्षत्वं व्यनक्ति ॥ **न हीति** ॥

ननु – वह्निरस्तिकिमिति पृच्छन्तं प्रति प्रयुक्ते धूमोस्तीति वाक्ये वह्निरस्तीतिशब्दकल्पकत्वमस्तीत्यत आह ॥ **वह्निप्रश्नेति** ॥ **अत एवेति** ॥ धूमस्यैव लिङ्गतया लिङ्गिज्ञापकत्वादेवेत्यर्थः।

॥ **अत एवेति** ॥ व्याप्तिज्ञानबलेनैव वह्निज्ञानस्य ज्ञायमानत्वादेवेत्यर्थः। मूलत्वेन श्रुतिकल्पने बाधकं चाह ॥ **किञ्चैवं सतीति** ॥ स्वप्रामाण्यार्थं लिङ्गस्य मूलत्वेन श्रुतिकल्पने सतीत्यर्थः ॥ **अयोगादिति** ॥ हेतोरयुक्तंस्यादित्यनेनान्वयः।

॥ **मन्त्रेति** ॥ आद्यस्य द्वितीयपादे ''तदर्थशास्त्राद्'' इत्यन्तिमाधिकरणे ''इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमदत्त'' इति ब्राह्मणवाक्यरूपं शास्त्रमन्त्रस्यलिङ्गप्राप्ताश्वरशनादावशेषत्वं

यत्तद्रूपार्थप्रतिपादकमिति तच्छास्त्रस्यानुवादकत्वं तदर्थशास्त्रादिति पूर्वपक्षसूत्रेणोक्त्वा सिद्धान्ते परिसङ्ख्येतिसूत्रेण गर्दभरशनां नादद्यादित्यर्थपरत्वं ब्राह्मणरूपतदर्थशास्त्रस्योक्तम् तदयुक्तं स्यादित्यर्थः।

## तर्कताण्डवम्

नापि – धर्मस्य शब्दमूलत्वादेव बोधककल्पनेति वार्तिकोक्तं युक्तम्। शाब्दलिङ्गगम्यत्वेपि शब्दमूलत्वाहानेः। अन्यथा लिङ्गान्तरेणेव वैदिकलिङ्गेनापि गम्ये धर्मे शब्दः कल्प्येत॥

नापि – द्वारमित्यादिवत्किञ्चिद्वाक्यमिह साकाङ्क्षम्। येन तत्पूरणाय श्रुतिः कल्प्येत। बर्हिर्देवसदनं दामीत्यादेः लिङ्गविनियोज्यमन्त्रस्य बर्हिर्लुनातीत्यादेः र्लवनादिविधि-वाक्यस्य च परिपूर्णत्वात्।

अत्रोक्तं राणककर्त्रा–

"शेषो लिङ्गादिगम्योपि न विधिग्रहणादृते।
अनुष्ठेयो न चाशब्दो विधिनान्वयमर्हति॥

विध्यन्वयाय तेनास्य कल्प्या लिङ्गादिभिः श्रुतिः।
प्रयोगवचनस्यैकदेशः सा च भविष्यति॥

अतः प्रयोगवाक्यस्य पूरणायेह कल्प्यते।
लिङ्गादिभिः श्रुतिः साच विरोधे नावकल्प्यते"।

इति। तत्र ब्रूमः।

विध्यनन्वितस्याननुष्ठेयत्वादशाब्दस्य च विध्य-नन्वयानुष्ठेयस्य मन्त्रस्य विध्यन्वयः शाब्दत्वं चास्तु। शाब्देन

**सामान्यसम्बन्धेन कल्प्यमानस्य बर्हिर्मन्त्रलवनयोः शेष-शेषिभाव रूपान्वयस्य कथं शाब्दत्वम्। अन्वयस्य अननुष्ठेयत्वात्। स्वयमेवान्वयरूपत्वेन विध्यनन्वितरूपत्वाच्च ॥**

## न्यायदीपः

तृतीयं निराह ॥ **नापि धर्मस्येति** ॥ **शाब्देति** ॥ शब्दसम्बन्धिसामर्थ्यरूपलिङ्गगम्यत्वेपीत्यर्थः ॥ **अन्यथेति** ॥ वैदिकलिङ्गस्य लौकिकलिङ्गगम्यस्येव शाब्दत्वानङ्गीकारे इत्यर्थः। चतुर्थं निराह ॥ **नापि द्वारमिति** ॥ **श्रुतिरिति** ॥ बर्हिर्देवसदनन्दामीतिमन्त्रेणलुनुयादिति तृतीयान्तविनियोजकश्रुतिः कल्प्येत्यर्थः।

साकाङ्क्षं नेत्येतद्व्यनक्ति ॥ **बर्हिरिति** ॥ बर्हिर्मन्त्रस्य इदङ्कृत्वेदङ्कृत्वेदङ्कर्तव्यमित्येवंरूपसङ्ग्राहक-प्रयोगवचनस्य साकाङ्क्षत्वादाकाङ्क्षापूरणाय लिङ्गेन श्रुतिकल्पनमितिवार्तिकव्याख्यानकृदुक्तमनुवदति ॥ **अत्रोक्तं राणककृतेति** ॥ **नचाशाब्द इति** ॥ शब्दाप्रतिपाद्यो विधिनान्वयं नार्हतीत्यर्थः ॥ **तेनेति** ॥ लिङ्गगम्यस्याशाब्दत्वे या विध्यनन्वितस्याननुष्ठेयत्वहेतुनास्य शेषस्य मन्त्रादेर्विध्यन्वयायेत्यर्थः

॥ **श्रुतिरिति** ॥ बर्हिर्मन्त्रेणेत्यादितृतीयान्तशब्दः कल्प्य इत्यर्थः। प्रयोगवचनस्य लवनं कृत्वेत्यादिरूपस्य बर्हिरितिमन्त्रेण लवनङ्कृत्वेत्यादिरूपेणैकदेश इत्यर्थः ॥ **विरोध इति** ॥ लिङ्गादेः प्रबलश्रुत्यादिविरोधे सति लिङ्गादिना स्वानुगुणश्रुतिकल्पनं न सम्भवतीत्यर्थः।

लिङ्गादिगम्यशेषस्यानुष्ठानप्रयोजकविध्यन्वयकारणशाब्दत्वलाभाय लिङ्गादिना श्रुतिकल्पना-ङ्गीकारेपि न शेषशेषिभावस्य श्रुतिसिद्धत्वमागतमिति दूषयति ॥ **विध्यनन्वितस्येत्यादिना** ॥ **अनुष्ठेयस्येति** ॥ उच्चारणक्रियारूपानुष्ठानविषयस्येत्यर्थः।

॥ **विध्यन्वय इति** ॥ बर्हिर्लुनातीति विध्यन्वयः ॥ **शाब्दत्वमिति** ॥ मन्त्रकल्पितशब्दबोध्यत्वं चास्त्वित्यर्थः। किं तर्हीत्यत आह ॥ **शाब्देनेति** ॥ बर्हिर्मन्त्रलिङ्गकंल्पितशब्देन सामान्यसम्बन्धेवगतेपि तेन कथं विशेषस्य शाब्दत्वमित्यर्थः।

## तर्कताण्डवम्

यदि च श्रुतान्वयानुपपत्त्या शब्दं प्रकल्प्य तेनार्थः प्रमातव्य इति निर्बन्धः तर्हि दृष्टानुमितान्यथानुपपत्त्यापि दर्शनादिकं प्रकल्प्य ते नार्थः प्रमीयेत।

तथा च नित्यानुमेयश्रुतिवन्नित्यानुमेयं प्रत्यक्षादिकमपि कल्प्येत। चतुर्दशपौर्णमास्यामित्यादिलिङ्गदर्शनमपि विद्वद्वाक्यमनुवादकमिति श्रुतिकल्पकं स्यात्।

द्वैतीयं गुणप्रक्रियादिभेदप्रमाणमपि आमिक्षावाजिनार्थौ भिन्नावित्यादिश्रुतिकल्पकं स्यात्।

अग्निहोत्रं जुहोति यवागूं पचतीत्यत्रापि सामर्थ्यं यवागूं पक्त्वाग्निहोत्रं जुहुयादिति नित्यानुवादश्रुतिकल्पकं स्यात्।

तत्र तत्तन्न्यायानुगृहीततत्तद्वाक्यस्य प्रमाणत्वे चात्रापि लिङ्गानुगृहीतप्रयोगचोदनैव प्रमाणमस्तु।

एतेन—स्वर्गकामो यजेतेत्यादावपि अपूर्वं कृत्वेत्यादि-शब्दकल्पना परोक्ता परास्ता।

## न्यायदीपः

ननु कल्प्यमानोपि शब्दः शेषशेषिभावबोधकस्तृतीयान्तादिरेव कल्प्यत इति चेन्न। अन्वयस्य अननुष्ठेयत्वेन तस्य शाब्दत्वकल्पकाभावात्तृतीयादिश्रुत्या शेषत्वादिमात्रप्रतीतावपि लवनशेषत्वस्य वाक्यगम्यत्वेन श्रौतत्वाभावाच्चेति भावः।

विपक्षे बाधकेनापि श्रुतिकल्पनं निराह ।। **यदि चेति** ।। बर्हिर्देवसदनं दामीति मन्त्रे श्रुतान्वयानुपपत्तीत्यर्थः ।। **अर्थ इति** ।। अनेन मन्त्रेण लवनं कर्तव्यमित्यादिरूपोर्थ इत्यर्थः।

॥ **दृष्टेति** ॥ दिवाभुञ्जानस्य पीनत्वान्यथानुपपत्त्या धूमादिनानुमितवह्न्याद्यन्यथानुपपत्त्या च रात्रिभोजनवह्निसामग्र्यादिकं प्रत्यक्षमनुमानं वा मध्ये कल्पयित्वा तेन तत्प्रमेतव्यं स्यादित्यर्थः। अस्तु को दोष इत्यत आह ॥ **तथा चेति** ॥

श्रुतिकल्पनापक्षे बाधकान्तरं चाह ॥ **चतुर्दशेति** ॥ आग्नेयाग्नीषोमीयोपांशुयाजप्रयाजपञ्चकानुयाजत्रिकाज्यभागद्वयवैमृधपुरोडाशाहुतिभेदेन चतुर्दशपौर्णमास्यां वैमृधराहित्येन त्रयोदशामावास्यायामिति लिङ्गदर्शनात् ''य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत'' इति विद्वद्वाक्यद्वयं नापूर्वकर्मविधायकं, किं त्वाग्नेयादित्रिककर्तृकानुवादकमिति लिङ्गदर्शनाच्चेति द्वितीये पौर्णमास्यधिकरणगुणसूत्रेणोच्यत इति तत्रापि श्रुति कल्पकं स्यादित्यर्थः।

बाधकान्तरमाह ॥ **द्वैतीयमिति** ॥ द्वितीयाध्यायसम्बन्धि यत् आमिक्षावाजिनरूपगुणभेदरूपं कर्मभेदप्रमाणं प्रक्रियाशब्दितप्रकरणभेदरूपं नित्याग्निहोत्रमासाग्निहोत्रभेदप्रमाणं अथैषज्योतिरित्यादिनामधेयभेदादिरूपमपि प्रमाणं श्रुतिकल्पनाद्वारा कर्मभेदे प्रमाणं स्यादित्यर्थः।

पञ्चमाध्याये कर्मणां क्रमे श्रुत्यर्थपाठादीनि यानि प्रमाणान्युक्तानि तन्मध्यगतार्थशब्दितसामर्थ्यरूपमपि प्रमाणं श्रुतिकल्पकं स्यादित्याह ॥ **अग्निहोत्रमिति** ॥

परमुखेन समाधिं वाचयित्वा सममित्याह ॥ **तत्रेति** ॥ लिङ्गदर्शनगुणभेदादिप्रमाणस्थळे लिङ्गदर्शनादिरूपन्यायानुगृहीतविद्वद्वाक्यादेरित्यर्थः ॥ **लिङ्गेति** ॥ मन्त्रलिङ्गानुगृहीतेत्यर्थः ॥ **एतेनेति** ॥ न्यायानुगृहीतवाक्यस्यैव प्रमाणत्वकथनेन। स्वर्गकामाधिकरणसिद्धान्तन्यायानुगृहीतस्य यजेत स्वर्गकाम इति वाक्यस्य वा प्रयोगवाक्यस्य वा प्रमाणत्वोपपत्त्या शब्दकल्पनावैयर्थ्यादिति भावः।

## तर्कताण्डवम्

**एवं च यत्र वाक्यं साकाङ्क्षं तत्र शाब्द्या आकाङ्क्षायाः शब्देनैव पूरणीयत्वाच्छब्दाध्याहारः। यत्र तु निराकाङ्क्षेण वाक्येनार्थे उक्ते तदुपपादनायार्थः कल्प्यते न तत्र शब्दकल्पना। न तु प्रभाकरमत इव साकाङ्क्षस्थलेप्यर्थाध्याहारः।**

**न वा भाट्टमत इव निराकाङ्क्षस्थलेपि शब्दकल्पना। उपपादितं चैतत्पूर्वत्र।**

**अत एव टीकायां – लिङ्गस्यानुमापकतयार्थबोधकत्वादित्यर्थकल्पकत्वमेवोक्तम् ॥**

**अपि च लिङ्गकल्प्या श्रुतिः न तावत्प्रत्यक्षा। त्वयैव–**

**''यथैव पाठः प्रतिपत्त्युपाय–**
**स्तथैव सामर्थ्यमपि श्रुतीनाम्।**
**तेनैव चैता न समामनन्ति**
**सहस्रभागं तु समामनेयुः'' ॥**

**इति कदाप्यनाम्नानोक्तेः। नापि नित्यानुमेया। स्मृतिकल्प्यश्रुतेरपि तथात्वापत्तेः।**

## न्यायदीपः

ननु – यदि मन्त्रलिङ्गादिशेषशेषिभावरूपार्थस्यैव कल्पनं न तु शब्दस्य तर्हि द्वारमित्यादौ शब्दाध्याहारसमर्थनं प्राक्तनं विरुध्येयेत्यतो व्यवस्थामाह ॥ **एवं चेति** ॥ लिङ्गस्थले शब्दकल्पनस्य दुष्टत्वे सतीत्यर्थः ॥ **यत्रेति** ॥ द्वारमित्यादौ ॥ **यत्र त्विति** ॥ मन्त्रादौ ॥ **पूर्वत्रेति** ॥ शब्दाध्याहारसमर्थनवादे।

॥ **अत एवेति** ॥ लिङ्गस्थले शब्दकल्पनस्यासम्मतत्वादेवेत्यर्थः ॥ **टीकायामिति** ॥ ''शब्दादेव'' इत्यधिकरणटीकायामित्यर्थः। प्रत्यक्षत्वाप्रत्यक्षत्वाभ्यां च श्रुतिकल्पनमयुक्तमित्याह ॥ **अपि चेति** ॥ **तेनैवेति** ॥ मन्त्रादिरूपश्रुतिगतसामर्थ्यरूपलिङ्गस्यापि प्रतिपत्त्युपायत्वकारणेनैव। एताः श्रुतीः न समामनन्ति – न पठन्ति अध्येतार इत्यर्थः।

॥ **तथात्वापत्तेरिति** ॥ न चेष्टापत्तिः। ''धर्मस्य शब्दमूलत्वाद्'' इति स्मृतिनयादौ नित्यानुमेयश्रुतिमूलत्वस्य स्मृतीनामपाकरणादिति भावः।

## तर्कताण्डवम्

**किञ्च – वक्ष्यमाणरीत्या श्रुतिमात्रस्य शेषत्वादि मात्र-बोधकत्वाल्लिङ्गात्तद्विशेषं प्रति बोधकत्वानुपपत्तेर्लिङ्गाद् बर्हिरिति मन्त्रेण लुनुयादिति वाक्यमेव कल्प्यमिति वाक्यादपि लिङ्गं विप्रकृष्टं सत्ततोपि दुर्बलं स्यात्।**

## न्यायदीपः

शब्दकल्पनापक्षे वाक्याल्लिङ्गस्य प्राबल्यहानिरिति बाधकान्तरं चाह ॥ **किञ्चेति** ॥ **वक्ष्य-माणेति** ॥ उत्तरभङ्गे ॥ **श्रुतिमात्रस्येति** ॥ पदान्तरसमभिव्याहारविनाकृतस्यानेन मन्त्रेणेत्यादितृतीया-न्तशब्दस्येत्यर्थः। तद्विशेषं – लवनादिशेषत्वरूपम्।

॥ **विप्रकृष्टमिति** ॥ यथा प्रकरणं वाक्यकल्पनाद्वारार्थबोधकमिति श्रुतिलिङ्गरूपद्व्यन्तरित-प्रामाण्यकवाक्यापेक्षया विप्रकृष्टमित्युच्यते तथा लिङ्गमपि वाक्यकल्पनाद्वारकप्रामाण्यकत्वात्ततोपि विप्रकृष्टं स्यात्। तथा च लिङ्गेन वाक्यबाधोक्तिरयुक्ता स्यादिति भावः।

## तर्कताण्डवम्

**यच्चोक्तं – बर्हिर्देवसदनं दामीत्यादौ कर्मसमवेतार्थ-प्रकाशकदामिपदादितरेषां तत्समभिव्याहृतानां देवसदन-मित्यादिपदानां कर्मसमवेतलवनप्रकाशने स्वतोसामर्थ्यात् तत्समभिव्याहाररूपाद्वाक्यात्स्वार्थमुपसर्जनीकृत्य स्वार्थ-विशिष्टलवनप्रकाशनसामर्थ्यं कल्पयित्वा श्रुतिः कल्प-नीयेति।**

**तन्न। यथा हि लवनमप्रकाशकपदसमभिव्याहारात् सामर्थ्यं कल्प्यते। तथा लाघवाय लवने विनियुक्तपद-**

**समभिव्याहाराल्लवने विनियोग एव वा विनियोजकश्रुतिरेव वा किं न कल्प्यते।**

## न्यायदीपः

एवं लिङ्गस्य श्रुतिकल्पकत्वं निरस्य वाक्यस्य लिङ्गकल्पनाद्वारा श्रुतिकल्पकत्वेन शेषशेषिभावे प्रमाणत्वं लिङ्गकल्पकत्वप्रकारं–

"वाचकैरेकवाक्यत्वादिह तद्वाचिनां सताम्।
कल्पयित्वाभिधाशक्तिं श्रुतिःपश्चात्प्रकल्प्यते"।

इति वार्तिकरीत्या विवृण्वन्निराह ॥ **यच्चोक्तमिति** ॥

॥ **दामिपदादिति** ॥ तस्य दाप् लवन इति धातुरूपतया लुनामीत्यर्थकत्त्वेन कर्मसमवेत-लवनरूपार्थकत्वादन्येषां पदानां तदभावादित्यर्थः। उपसर्जनीकृत्य विशेषणीकृत्य। देवसदनभूतबर्हि-र्लवनमित्येवं स्वार्थविशिष्टलवनप्रकाशनसामर्थ्यरूपं लिङ्गं कल्पयित्वा अनेन मन्त्रेण लुनीयादिति श्रुतिः कल्प्येत्यर्थः ॥ **पदेति** ॥ दामीतिपदेत्यर्थः। सामर्थ्यमितरपदानामित्यर्थः ॥ **लवनेविनियोग एव वेति** ॥ मन्त्रस्थपदानामिति योज्यम्। श्रुतिरेवेत्येवकारेण लिङ्गं व्यावर्त्यते।

## तर्कताण्डवम्

**यदि त्वसमर्थस्य विनियोगासम्भवाद्विनियोगः सामर्थ्यपूर्वकस्तर्ह्यैन्द्र्या अपि विनियोगः सामर्थ्यपूर्वकः स्यात्। तत्र श्रौतविनियोगात्पश्चात्सामर्थ्यकल्पनेऽत्रापि तथैवास्तु।**

**इयांस्तु भेदः। श्रुतिः शब्दरूपतया स्वरूपेणैव अन्वय-बोधिका। समभिव्याहाररूपं वाक्यं त्वनुपपद्यमानतयेति। अन्यथा स्वतोऽसमर्थस्य सामर्थ्यकल्पनं विनियोगाधीन**

**मैन्द्र्यां दृष्टमितीहापि विनियोगात्पूर्वं सामर्थ्यकल्पनापि न स्यात्।**

## न्यायदीपः

"श्रुत्यादिना समर्थस्य विनियोगोऽवकल्प्यत" इति वार्तिकोक्तमनूद्य निराह ॥ **यदि त्विति** ॥ **विनियोगेति** ॥ शेषत्वावगत्यसम्भवादित्यर्थः।

॥ **ऐन्द्र्या अपीति** ॥ "ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इति श्रौतविनियोगोपि इन्द्रप्रतिपादकऋचो गार्हपत्यप्रकाशनसामर्थ्यपूर्वकः स्यात्। तथाच–

"न श्रुतेर्विनियोक्तृत्वं लिङ्गाधीनं प्रतीयते।
विज्ञाते विनियोगे तु तद्वशाच्छक्तिनिर्णयः"।

इति वार्तिकोक्त्या श्रुतिः साक्षाद्विनियोजिकेति मतभङ्ग इति भावः ॥ **अत्रापीति** ॥ समभिव्याहाररूपवाक्यस्थलेपि दामीत्यादिपदसमभिव्याहारेण विनियोगस्य वा विनियोजकश्रुतेर्वा कल्पनानन्तरमेव समभिव्याहृतपदानां सामर्थ्यकल्पनमित्यस्तु। तथा च वाक्यस्य द्व्यन्तरितं प्रामाण्यमितिमतभङ्ग इति भावः।

नन्वेकशब्दसमुदायरूपवाक्यस्य कथं श्रुतितुल्यतोच्यत इत्यत आह ॥ **इयांस्त्विति** ॥ **अनुपपद्यमानतयेति** ॥ विनियोगेन वा विनियोजकश्रुत्या वा विनेति भावः ॥ **अन्यथेति** ॥ एतावद्भेदमात्रेण वाक्यस्य श्रुतिवैषम्य इत्यर्थः ॥ **इहापि** ॥ समभिव्याहाररूपवाक्यस्थलेपीत्यर्थः।

## तर्कताण्डवम्

**किञ्चायं दण्डोस्ति गामानयेत्यादिवाक्ये दण्डस्य वाक्येनानयनान्वय इति ते मतम्। न चेयं प्रक्रिया तत्र सम्भवति। दण्डस्यानयने सामर्थ्यस्य क्लृप्तत्वात्॥**

## न्यायदीपः

वाक्यस्य सामर्थ्यकल्पनपूर्वमन्वयप्रमापकत्वं अव्याप्तं चेत्याह ॥ **किञ्चायमिति** ॥ **वाक्येनेति** ॥ पदान्तरसमभिव्याहाररूपेणेत्यर्थः ॥ **इयं प्रक्रियेति** ॥ सामर्थ्यकल्पनापूर्वकमन्वयप्रमापकत्वमिति प्रक्रियेत्यर्थः ।

## तर्कताण्डवम्

यच्चोक्तं स्वार्थे परिपूर्णानामङ्गाङ्गिवाक्यानामुपकार्योपकाराकाकाङ्क्षयैकवाक्यत्वं कल्प्यमिति प्रकरणं वाक्यं कल्पयित्वा लिङ्गकल्पकमिति।

तन्न। अर्थभावनाया एकप्रत्ययोपात्तविध्यन्विताया अपि प्रकृत्यर्थेन करणेनान्वयवत्करणेनान्विताया अपि पदान्तरार्थेन भाव्येनान्वयवच्छब्दभावनायाः समानप्रत्ययोपात्तार्थभावनारूपभाव्यान्विताया अपि परस्परान्वितानेकपदात्मकार्थवादोपस्थापितप्राशस्त्यान्वयवच्च भाव्याद्यन्विताया अप्यर्थभावनाया वाक्यान्तरार्थेनेत्थं भावेनापि विनैव वाक्यकल्पनमाकाङ्क्षादिवशादन्वयोपपत्तेः। प्रयाजादिकं हि दर्शपूर्णमासभावनाकाङ्क्षितं सन्निहितं योग्यं च आकाङ्क्षादिरेवान्वयसामग्री ॥

अन्यथा समानपदश्रुत्यापि समानप्रत्ययश्रुतिर्विभक्तिश्रुतिर्वा कल्प्या स्यात्। ऐन्द्र्या गार्हपत्यमितिपदद्वयेन चैकपदश्रुतिः कल्प्या स्यात्। व्युत्पन्नश्च लोके पदार्थयोरिव वाक्यार्थयोरप्यन्वयः।

## न्यायदीपः

एवं लिङ्गवाक्ययोः श्रुतिलिङ्गादिकल्पनाद्वारा प्रामाण्यमित्येतन्निरस्य प्रकरणस्य वाक्यलिङ्गश्रुतिकल्पनाद्वारा प्रमापकत्वम्–

"प्रत्यक्षासङ्गतिर्वाक्ये न तु प्रकरणेऽस्ति सा।
आकाङ्क्षातोऽनमातव्या तावता विप्रकृष्टता।"

इति श्लोकतद्विवरणरूपवार्तिकोक्तमनूद्य निराह ॥ **यच्चोक्तमित्यादिना** ॥ **उपकार्योपकारिकेति** ॥ समिधो यजतीत्यादिप्रयाजाद्यङ्गवाक्यानां उपकार्याकाङ्क्षया यदाग्नेयादिदर्शपूर्णमासाद्यङ्गिवाक्यानां उपकारकाकाङ्क्षयेत्येवं परस्पराकाङ्क्षयेत्यर्थः।

॥ **लिङ्गेति** ॥ उपकारकत्वसामर्थ्यरूपलिङ्गकल्पकमित्यर्थः। एतैरुपकुर्यादिति श्रुतिकल्पनं पश्चादित्यपि योज्यम्। तन्नेत्यस्यार्थभावनाया इत्यादिनान्वयोपपत्तेरित्यन्तेन वाक्येनान्वयः।

ननु कथमन्यान्वितस्य वाक्यकल्पनां विनान्वय इत्यतो दृष्टान्तानामुक्तिः ॥ **अर्थभावनाया इत्यादि** ॥

एवं हि परप्रक्रिया। यजेतेत्यत्र ईतेति तिङ्प्रत्ययस्याख्याततत्वं लिङ्त्वं चेतिद्विरूपत्वमास्ति। तिङ्प्रत्ययवाच्या भावना चार्थभावनाशब्दभावनाचेति द्विरूपा। तत्राख्याततत्वेन प्रयत्नापरपर्यायार्थभावनाभिधीयते। लिङ्त्वेन तु प्रवर्तनापरपर्याया विधिशब्दिता शब्दभावनोच्यते। भावनाद्वयमपि फलकरणेतिकर्तव्यतारूपांशत्रयोपेतम्। तत्राद्या स्वर्गादिभाव्यका यागकरणिका प्रयाजादीतिकर्तव्यताका चेतननिष्ठा। द्वितीया तु अर्थभावनाभाव्यका लिङादिवाच्यत्वज्ञानकरणिका प्राशस्त्यरूपेतिकर्तव्यताका लिङादिविधिप्रत्ययनिष्ठेति। एवं च वाक्यमेतद्व्याख्यातप्रायम्।

आकाङ्क्षादिवशादित्युक्तं व्यनक्ति ॥ **प्रयाजेति** ॥ दर्शपूर्णमासकरणकभावनेत्यर्थः ॥ **अन्यथेति** ॥ शब्दकल्पनस्यावश्यकत्वे यजेतेत्यत्रैकपदश्रुत्या यागभावनयोरन्वयबोधस्थळेपि यागभावनोभयान्वयबोधकैकप्रत्ययश्रुतिर्वा एकविभक्तिर्वा कल्प्या स्यात्। ऐन्द्रादिस्थळेप्यैन्द्रीगार्हपत्योभयान्वयबोधकपदश्रुतिः कल्प्या स्यादित्यर्थः।

नन्वैन्द्रीस्थले पदश्रुतिकल्पनां विना लोकसिद्धव्युत्पत्तिबलादेवान्वयबोधोपपत्तेर्न तत्र श्रुतिकल्पनेत्यत आह ॥ **व्युत्पन्नश्चेति** ॥ **वाक्यार्थयोरिति** ॥ तथाचाङ्गप्रधानवाक्ययोरन्योन्याकाङ्क्षावशादेवान्वयोपपत्तेर्न वाक्यकल्पना युक्तेति भावः।

## तर्कताण्डवम्

**किञ्चैन्द्र्या गार्हपत्यमितिवत् प्रयाजादिभिर्दर्शपूर्णमासमुपकुर्यादिति श्रुतिरेव कल्प्यताम्। किं विनियोजकविभक्तिरहितपदसमभिव्याहारमात्ररूपवाक्यकल्पनापूर्वकलिङ्गकल्पनाक्लेशेन।**

**यदिच प्रयाजादिभिर्दर्शपूर्णमासमुपकुर्यादित्येतदेव वाक्यम्। तर्हीतोन्या श्रुतिर्न कल्प्या। सामर्थ्यं त्वैन्द्र्यामिव श्रौताविनियोगानन्तरं कल्प्यताम्। सन्निधानलक्षणस्थानस्य आकाङ्क्षारूपप्रकरणादिकल्पकत्वमप्ययुक्तम्। क्रमप्रमाणे स्थानेऽव्याप्तेः। समाख्यायास्तु श्रुतिरूपत्वात् स्थानकल्पकत्वमत्यन्तमयुक्तमित्युक्तम्।**

**तस्मान्न परोक्तं परदौर्बल्यबीजं युक्तम्।**

## न्यायदीपः

अभ्युपेत्याप्यङ्गाङ्गीभावबोधकशब्दकल्पनं परोक्तं निराह ॥ **किञ्चैन्द्र्येति** ॥ दर्शपूर्णमासमिति समाहारो वा दर्शेन सहितं पूर्णमासमिति वा विग्रहः ॥ **श्रुतिरेवेति** ॥ तृतीयान्तादिशब्द एवेत्यर्थः। ननु – प्रकरणात्कल्प्यमानं वाक्यमेतदेवेत्यत आह ॥ **यदिचेति** ॥ **श्रुतिर्नकल्प्येति** ॥ तथाच प्रकरणस्य त्र्यन्तरितं प्रामाण्यमित्यस्य भङ्ग इति भावः।

ननु विनियोजकश्रुतिकल्पनस्य सामर्थ्यकल्पनपूर्वकत्वात्कथं प्रागेव श्रुतिकल्पनमित्यत आह

॥ **सामर्थ्यं त्विति** ॥ स्थानस्यापि परोक्तचतुरन्तरितप्रामाण्यं निराह ॥ **सन्निधानेति** ॥ **क्रमेति** ॥ यथासङ्ख्याम्नानरूपस्थानप्रमाणेव्याप्तेः तत्र तथैव प्रमापकत्वोपगमादिति भावः। समाख्यायाः पञ्चान्तरितं परोक्तप्रामाण्यं निराह ॥ **समाख्याया इति** ॥ **इत्युक्तमिति** ॥ परोक्तश्रुत्यादिलक्षणभङ्गे।

## तर्कताण्डवम्

**तदेवं यथा मन्त्रप्रकरणेषु देवताप्रमाणेषु तद्धितादिष्वतिदेशप्रमाणेषु वचननामधेयचोदनालिङ्गेषु चोत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वनियमाभावेपि परदौर्बल्यम्। सावकाशनिरवकाशादौ च पूर्वस्योत्तरकल्पकत्वाभावेपि परदौर्बल्यमिति।**

**भट्टोक्तश्रुत्यादिबलाबलबीजभङ्गः ॥ ८१ ॥**

## न्यायदीपः

किं तर्हि दौर्बल्यबीजमित्यत उपसंहारमुखेन दृष्टान्तपूर्वमाह ॥ **तदेवमिति** ॥ उक्तदिशा परोक्तस्यायुक्तत्वात् टीकोक्तरीत्या परदौर्बल्यमित्यन्वयः। यथेत्यस्य तथेत्यनेनान्वयः ॥ **क्रमेति** ॥ श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपपञ्चमाध्यायोक्तक्रमबोधकप्रमाणेषु।

॥ **देवेति** ॥ तद्धितचतुर्थीमन्त्रवर्णरूपेषु त्रिषु प्रमाणेषु। आग्नेयोष्टाकपाल इत्यादौ तद्धितस्य पृथिव्यै स्वाहेत्यादौ चतुर्थ्याः यदग्नये च प्रजापतये च सायं जुहोतीत्यादौ मन्त्रवर्णस्य देवतायां मानत्वात्। तद्वदिदं कर्तव्यमित्यतिदेशप्रमाणेषु वचनादिष्वित्यर्थः। वचनं च नामधेयं च चोदनालिङ्गं च तेष्वितिविग्रहः।

सप्तमेध्याये "समाने पूर्वत्वादुत्पन्नाधिकारः स्या"दित्याद्यपादीयद्वितीयनये इषुनामकैकाहे ज्योतिष्टोमविकारे क्रतौ कांश्चिद्वैशेषिकान् धर्मान्विधायाम्नातेन समानमितरच्छयेनेनेति प्रत्यक्षवचनेन श्येनवैशेषिकाङ्गानामिषावतिदेश उक्तः। "उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेश स्याद्" इति तृतीयपादीयाद्यनये मासमग्निहोत्रं जुहोतीत्यत्र नित्याग्निहोत्रेऽग्निदेवतासद्भावात्क्लृप्तशक्तिकेन

तत्सादृश्यविधित्सया कुण्डपायिनामयनगेकर्मणि प्रयुक्तेनाग्निहोत्रनामधेयेन तस्मिन्कर्मणि नित्याग्निहोत्रधर्माणामतिदेश उक्तः।

इतिकर्तव्यताविधेर्यजतेः पूर्वत्वादिति चतुर्थपादीयाद्यादिनयेषु सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यादिष्वनुपदिष्टधर्मेषु प्रत्यक्षवचनस्य नाम्नश्च अतिदेशकस्याभावेपि कुतश्चिद्वैदिकात् कर्मणोधर्मप्रमापकं वचनमस्तीत्यानुमानिकवचनरूपेण चोदकेनातिदेश उक्त इति वचनेत्याद्युक्तम्।

चोदनाविधिवाक्यं तस्थमौषधद्रव्यकत्वैकदेवताकत्वनिर्वापकत्वादिकं लिङ्गं चोदनालिङ्गम्। तेनैवाग्नेयसौरादेः प्रकृतिविकाराभावावगमात्॥ **टीकोक्तेति**॥ शब्दादेवेत्यत्र टीकोक्तरीत्या दौर्बल्य-मित्यर्थः।

भट्टोक्तश्रुत्यादिबलाबलबीजभङ्गः॥८१॥

***

## ८२. अथ श्रुत्यादिलिङ्गादिबाधे भाट्टोक्तोदाहरणदूषणम्।

### तर्कताण्डवम्

**यच्च श्रुत्यादेर्लिङ्गादिबाधे उदाहरणमुक्तम्। तन्न। लिङ्गं हि ऐन्द्र्या इन्द्रशेषत्वं बोधयते। तच्च तस्य गार्हपत्यं प्रति शेषत्वं बोधयता बाधनीयम्।**

**न चैन्द्र्येति तृतीयाश्रुतिमात्रेणैन्द्रीगार्हपत्ययोरन्योन्य-शेषशेषित्वधीः। ऐन्द्र्येत्यस्येन्द्रं प्रत्यैन्द्र्याः शेषत्वेपि गार्हपत्यमित्यस्य यां काञ्चनाग्नेयीं प्रति गार्हपत्यस्य शेषित्वेप्युपपत्तेः। किन्त्वैन्द्रीगार्हपत्यपदसमभिव्याहार-रूपवाक्येनैव।**

अत्रोक्तं वार्तिके–

यदि जघन्यवृत्त्या गार्हपत्यप्रातिपदिकश्रुतिरिन्द्रपरा, यदि वा द्वितीयाश्रुतिरग्निसामीप्यपरा तदा समभिव्याहाररूपं वाक्यं लिङ्गाविरोध्येव। श्रुतिस्तु मुख्यार्थपरा सती लिङ्गेन विरुध्यत इति।

तन्न। मदुक्तरीत्या श्रुतिमात्रस्य त्वदुक्तरीत्या वाक्य-मात्रस्य च लिङ्गाबाधकत्वेन सहितयोस्तद्बाधकत्वेपि वाक्यनिरपेक्षायाः श्रुतेः क्वापि लिङ्गाबाधकत्वेन तस्य लिङ्गात्प्राबल्यासिद्धेः।

## न्यायदीपः

परोक्तोदाहरणान्यपि निराह ॥ **यच्चेति** ॥ ऐन्द्र्यागार्हपत्यमुपतिष्ठत इति यदुदाहरणमुक्तं तन्नेत्यर्थः। लिङ्गवाक्यविरोधोदाहणमेवेदमिति भावेनाह ॥ **लिङ्गमिति** ॥ ''निवेशनः सङ्गमनो वसूनामित्या''दिमन्त्रगतमिन्द्रादिप्रतिपादनसामर्थ्यं हीत्यर्थः।

॥ **तस्या इति** ॥ ऐन्द्र्या ऋच इत्यर्थः ॥ **वाक्येनैवेति** ॥ ऐन्द्रीगार्हपत्ययोरन्योन्यशेष-शेषित्वधीरित्यनुषङ्गः। तथाच वाक्येनैव लिङ्गस्य बाधो न श्रुत्येति भावः। सत्यं लिङ्गं वाक्येन विरुध्यत इति तथापि वाक्यस्य लिङ्गविरोधकत्वं द्वितीयाविभक्त्यादिश्रुतिं विना नोपपद्यत इति श्रुतिसहाय-कृतमेवेति श्रुतेर्बाधकत्वमुक्तमिति भावेन श्रुतिमेव वाक्यलिङ्गविरोधकत्वमित्येतदुपपादयति ॥ **यदीति** ॥ लिङ्गाविरोध्येवेति। आद्ये ऐन्द्र्या इन्द्रमुपतिष्ठत इत्यर्थस्य द्वितीये गार्हपत्यसमीपे स्थित्वा उपतिष्ठत इत्यर्थस्य निष्पत्तेरिति भावः।

॥ **श्रुतिस्त्विति** ॥ प्रातिपदिकश्रुतिर्द्वितीयाश्रुतिश्चेत्यर्थः। मुख्यार्थत्वे अग्नेरेव शेषित्व-प्रतीतेर्विरोधः श्रुतिकृत इति भावः।

## तर्कताण्डवम्

यद्यपि श्रुतिः शेषत्वं शेषित्वं वा वदति। वाक्यं तु तस्य प्रतियोगिविशेषमपि। तथापि शेषत्वमात्रबोधकश्रुतिमात्रेण प्रतियोगिविशेषघटितशेषशेषित्वविशेषबोधकं लिङ्गं न विरुध्यत इति न बाध्यते। नहि चैत्रस्यायं शेष इत्येतच्छेष इत्येतावन्मात्रेण विरुध्यते।

किं चात्यक्तस्वार्थपदसमभिव्याहार एव वाक्यम्। अन्यथा स्वर्गकामो यजेतेत्यत्र स्वर्गशब्दस्य स्वार्थत्यागे समभिव्याहारमात्रेण यागस्वर्गयोः साध्यसाधनभावासिद्धेस्तत्र वाक्यं प्रमाणमिति मतहानिः। एवं च गार्हपत्यशब्दस्य स्वार्थात्यागे वाक्यस्यैव बाधो न तु श्रुतेः।

## न्यायदीपः

ननु तृतीयाद्वितीयाश्रुत्योः शेषत्वशेषित्वबोधकत्वाद्विरोधः श्रुतिलिङ्गयोरित्यत आह ॥ **यद्यपीति** ॥ तदेव व्यनक्ति ॥ **न हीति** ॥ यच्चवाक्यस्य लिङ्गविरोधित्वं गार्हपत्यमित्यत्र प्रातिपदिकविभक्त्योः स्वार्थात्याग एव तत्त्यागे तु नेति अत्यक्तस्वार्थकश्रुतिकृतमिति श्रुतेर्विरोधित्वमित्युक्तम्। तदयुक्तम्। श्रुतेः स्वार्थत्यागे वाक्यमेव नास्ति कस्याविरोधित्वमुच्येतेतिभावेन वाक्यस्वरूपं तावद्दर्शयन्नेवाह ॥ **किं चेत्यादिना** ॥

कुत उक्तरूपसमभिव्याहार एव वाक्यमुपेयमित्यत आह ॥ **अन्यथेति** ॥ समभिव्याहृतपदानां स्वार्थत्यागे अवाक्यत्वं स्वार्थात्याग एव वाक्यत्वमित्यनङ्गीकार इत्यर्थः। ततः किमित्यत आह ॥ **एवं चेति** ॥

## तर्कताण्डवम्

यदि च बाधकवाक्यान्तर्गत्या गार्हपत्यश्रुतेर्लिङ्ग-

**बाधकता। तर्हि श्रुत्या मुख्येन्द्रप्रकाशनसामर्थ्यरूपलिङ्ग-बाधे मुख्यवृत्तिरूपश्रुतेः बाध्यलिङ्गकोटिप्रवेशाद्बाध्यता च स्यात्।**

**एवमग्निहोत्रं जुहोति यवागूं पचतीत्यादौ पाठस्य लिङ्ग-रूपेणार्थेन बाधे श्रुतेरपि बाधितता स्यात्। न हि यवागू-शब्दादेर्मुख्यार्थत्यागे पाठक्रमोऽर्थक्रमेण विरुध्यते।**

## न्यायदीपः

नन्वस्तु – भवदुक्तरीत्या श्रुतेः स्वार्थात्यागे वाक्यमेव बाधकं तत्त्यागे वाक्यमेव नेति च। तथापि वाक्यान्तर्गतत्वाच्छ्रुतिरपि बाधिकेत्युच्यत इत्यत आह ॥ **यदि चेति** ॥ **मुख्यवृत्तिरूपश्रुतेरिति** ॥ इन्द्रश्रुतेरित्यर्थः। यथा वाक्यस्य लिङ्गेन विरोधे वाक्यान्तर्गतगार्हपत्य श्रुतेर्मुख्यार्थत्वं हेतुरिति श्रुतेर्लिङ्गबाधकतोच्यते, तथा मन्त्रस्थेन्द्रश्रुतेर्मुख्यार्थत्व एव लिङ्गस्य श्रुत्या विरोधो नान्यथेति लिङ्गबाधे तदनुप्रविष्टेन्द्रश्रुतिर्बाधिता स्यादित्यर्थः। तथा च श्रुत्या श्रुतिबाधः प्राप्त इति भावः।

॥ **लिङ्गरूपेणेति** ॥ होमनिवर्तनसामर्थ्यरूपेणेत्यर्थः। कथं श्रुतेर्बाधितत्वमित्यतः श्रुतिलिङ्ग-विरोधस्थले परोक्तरीत्यैव तदुपपादयति ॥ **न हि यवागूशब्दादेरिति** ॥ यवागूं पचतीत्यनयोः पदयोर्लक्षणया तत्साध्याग्निहोत्रहोमार्थत्वं, अग्निहोत्रं जुहोतीत्यनयोर्जघन्यवृत्या तत्साधनयवागूपा-कार्थत्वमित्येवमाश्रित्य स्वार्थत्यागे विरोधो नास्तीति अर्थक्रमपाठक्रमयोर्विरोधस्य श्रुतेः स्वार्थकत्वनिमित्तत्वाद् बाध्यभूतपाठक्रमान्तर्गतत्वाच्छ्रुतिरेव बाधितेति स्यादिति भावः।

## तर्कताण्डवम्

**एतेन – यत्र शेषित्वं शेषत्वं वा तृतीयादिनाभिधीयते तत्र श्रौतत्वम्। तथा चैन्द्र्या गार्हपत्यशेषत्वम् श्रौतमेव। यत्र तु समभिव्याहारमात्रेण गम्यते तत्र वाक्यीयत्वम्। यथा स्वर्गकामो यजेतेत्यत्र इति न्यायरत्नमालोक्तं निरस्तम्।**

प्रकृतिप्रत्ययसमभिव्याहारगम्यस्य यागभावनयोः शेष-शेषित्वस्याश्रौतत्वापत्तेरित्युक्तत्वात्।

यच्चोक्तं वार्तिके – यदैवैन्द्र्येत्युक्तं तदैव तदर्थशास्त्रादिति न्यायेनैन्द्र्येत्यस्यावैयर्थ्यायेन्द्रव्यतिरिक्तः कोप्युपस्थाप्यः। स च लिङ्गगम्येन्द्रविरोधित्वेन प्रतीयत एवेति।

तन्न। ऐन्द्र्येति विनियोगस्यावैर्थ्यार्थमन्यथानुपपत्त्या गम्यमानस्येन्द्रादन्यस्य शेषितायाः श्रौतत्वायोगात्।

उक्तं हि वार्तिके–

"यःशब्दश्रवणादेव विनियोगः प्रतीयते। स श्रौत" इति।

## न्यायदीपः

प्रकारान्तरेण साङ्कर्याभावमनूद्य निराह ।। **एतेनेति** ।। **वाक्यीयत्वम्** ।। वाक्यसम्बन्धित्वम्। शेषत्वस्य वा शेषित्वस्य वेत्यनुकर्षः ।। **उक्तत्वादिति** ।। श्रुत्यादिलक्षणभङ्गान्ते सम्बन्धमात्रमुक्तन्त्वित्यादिग्रन्थेनोक्तत्वादित्यर्थः। ।। **इति न्यायेनेति** ।। मन्त्रो यमर्थमाह तदर्थप्रतिपादकं शास्त्रम् उरुप्रथस्वेति पुरोडाशं प्रथयतीत्यस्ति तत्र मन्त्रस्य पुरोडाशप्रथनार्थकत्वऽभिप्रेते सति इति प्रथयतीति शास्त्रं व्यर्थम् तेन ज्ञायते उरुप्रथस्वेत्यादिमन्त्रोऽनर्थक इति मन्त्राधिकरणपूर्वपक्षसूत्रोक्तन्यायेनात्राप्यैन्द्र्या अपीन्द्रप्रतिमन्त्रोऽनर्थक इति मन्त्राधिकरणपूर्वपक्षसूत्रोक्तन्यायेनात्राप्यैन्द्र्या अपीन्द्रप्रतिपादकत्वे सति ऐन्द्र्या इति तत्र विनियोजकतृतीयाश्रुतिर्व्यर्था अतो ज्ञायते नेन्द्रशेषत्वं श्रुतेरभिमतम् किन्तु तदन्यशेषत्वम् तथात्वे श्रुतेरवैयर्थ्यात् तेन तृतीयाश्रुत्या इन्द्रादन्यः शेषी उपस्थाप्य इत्यर्थः। तथा च श्रुत्यैव लिङ्गस्य विरोधो न वाक्येनेति भावः।

## तर्कताण्डवम्

किञ्च "तदर्थशास्त्रादि"ति मन्त्राधिकरणपूर्वपक्ष-

**न्यायस्यार्थवादो वेति तत्रत्यसिद्धान्तसूत्रोक्तन्यायेन बाधात्। उरुप्रथस्वेति पुरोडाशं प्रथयतीत्यनुगुणतदर्थशास्त्र-वदैन्द्र्येत्यस्यापि गार्हपत्यपदाभावेऽनुगुणतदर्थशास्त्रत्वेन अर्थवादोपपत्तेर्न वैयर्थ्यम्।**

**यच्चोक्तं शास्त्रदीपिकायाम् – "लिङ्गेन बलीयसा यस्य बाधस्तल्लिङ्गेन विरुध्यते। न चात्र लिङ्गेन बलीयसा वाक्यं बाधितुं शक्यम्। तद्बाधे हि पृथक्कृते गार्हपत्यैन्द्रीपदे न किञ्चिदर्थं प्रतिपादयतः। पदमात्रस्याप्रमाणत्वादि"ति।**

**तन्न। इषेत्वेत्यादौ छिनद्मीत्यादिपदानामिवात्रापि इन्द्रमाग्नेय्येति पदयोरध्याहारेणैन्द्र्येन्द्रं आग्नेय्या गार्हपत्य-मित्यन्वयोपपत्तेः। अयमेव हि वाक्यस्य बाधो नाम यच्छ्रुतसमभिव्याहारादन्यसमभिव्याहारकल्पनम्।**

## न्यायदीपः

यदपि श्रुत्यवैयर्थ्यायान्य उपस्थाप्य इति तच्चायुक्तमित्याह ।। **किञ्चेति** ।। **बाधादिति** ।। इत्थं प्रथनं प्रशस्तं यत्क्रियमाणमेवंरूपेण मन्त्रेण क्रियत इति शाबरभाष्याद्युक्तदिशा प्रथनप्रशंसापरत्वेन स्वार्थपरत्वाभावेन तदर्थशास्त्रादित्यस्यासिद्धत्वादिति भावः।

।। **अनुगुणतदर्थशास्त्रवदिति** ।। प्रशंसापरत्वादनुगुणेत्युक्तम् ।। **अनुगुणेति** ।। इन्द्र-रूपार्थोपस्थापनेनेति भावः ।। **यच्चोक्तमिति** ।। श्रुतिलिङ्गविरोधाधिकरणे उक्तमित्यर्थः ।। **तद्बाधे हीति** ।। प्रतीतसमभिव्याहारत्यागरूपबाधे हि सतीत्यर्थः।

।। **इत्यादिपदानामिवेति** ।। द्वितीयाद्यपादे "समेषु वाक्यभेदः स्याद्" इति षोडशेधिकरणे इषेत्वेत्यादिरेको मन्त्र अनेकोवेति सन्देहे एक इति प्राप्ते इषेत्वेति छिनद्मि, ऊर्जेत्वेत्यनुमार्ज्मीत्या-द्यध्याहारेण भिन्नार्थकत्वादनेक इति सिद्धान्तितत्वादिति भावः।

## तर्कताण्डवम्

किञ्च – ''स्योनन्त'' इत्यादौ वाक्यस्य सावकाशत्वेन लिङ्गबाध्यत्वेपि ऐन्द्र्येत्यत्रोक्तरीत्या निरवकाशत्वाल्लिङ्ग-बाधकतास्तु। अस्मन्मते त्वन्वयबोधकस्य वाक्यस्य लिङ्गानुसार्यर्थत्यागेन श्रुत्यनुसार्यर्थग्रहणमेव श्रुत्या लिङ्गस्य बाधः। न तु वाक्यैकदेशभूतप्रातिपदिकादिरूपायाः श्रुतेः वाक्यार्थभूतान्वयबोधकत्वमिति स्वीकारात्। ऐन्द्र्येन्द्रशेषत्वव्याप्यवाचकवैदिकशब्दरूपलिङ्गाभावाच्च न दोषः।

लिङ्गेन वाक्यबाधोदाहरणमप्यसत्। सामर्थ्येन वाक्य-बाधे इन्द्रपकाशनसामर्थ्येनैन्द्र्या गार्हपत्यमिति वाक्यस्य क्षणिकस्य यागस्य सन्निकृष्टफलजननसामर्थ्येन स्वर्गकामो यजेतेति वाक्यस्य च बाधापातात्। यथाचापूर्वद्वारा यागः स्वर्गे समर्थस्तथा स्योनन्ते मन्त्रे उत्तरभागोपि स्वार्थद्वारा तद्विशिष्टपूर्वभागार्थप्रकाशनसमर्थ एव।

## न्यायदीपः

अभ्युपेत्योक्तं वाक्यस्य लिङ्गेन बाध्यत्वम्। वस्तुतो विपरीतम बाध्यत्वमेव त्यज्यतामित्याह ॥ **किञ्चेति** ॥ **सावकाशत्वेनेति** ॥ विभागेन सदनासादनयोर्विनियोगसम्भवादिति भावः

॥ **उक्तरीत्येति** ॥ तद्बाधे हीत्यादिनोक्तरीत्येत्यर्थः। भवत्पक्षेपि ऐन्द्र्येत्यत्र श्रुतिलिङ्गयो-र्बाध्यबाधकभावः कथमित्यत आह ॥ **अस्मन्मते त्विति** ॥ **प्रातिपदिकरूपाया इति** ॥ गार्हपत्यप्रातिपदिकरूपाया ऐन्द्रीतिप्रातिपदिकरूपायावेत्यर्थः। इति स्वीकाराद्बाधो न त्वित्यर्थः। येन वाक्यलिङ्गयोरेव वेत्यर्थः। इति स्वीकाराद् बाधो न त्वित्यर्थः। येन वाक्यलिङ्गयोरेव बाध्यबाधकभावो न तु श्रुतिलिङ्गयोरिति स्यादिति भावः।

एवमैन्द्र्या इन्द्रशेषत्वबोधकं लिङ्गं पररीत्यास्तीत्यभ्युपेत्य श्रुत्या बाधप्रकार उक्तः। वस्तुतो लिङ्गमेव नास्ति। किन्तु वाक्याद्गार्हपत्यशेषतैव। न तु तत्र बाधादिभाव इत्याह॥ **ऐन्द्र्येति**॥ सिद्धान्ते हि व्याप्यवाचकं लिङ्गं न तु सामर्थ्यम्। एवं च निवेशनः सङ्गमन इत्यादेरिन्द्रशेषत्वस्य व्याप्यभूतो यो धर्मः वृद्धाचारादिः तस्य वाचको यो वैदिकशब्दरूपः ऐन्द्र्या इन्द्रमुपतिष्ठन्ते वृद्धा इत्यादिः तद्रूप-लिङ्गाभावाच्चेति भावः॥ **उदाहरणमिति**॥ स्योनन्ते सदनं करोमीत्यादिरूपं ऐन्द्र्येत्यादेर्वाक्यरूपत्वं प्राक्साधितमप्यनाधिकुर्वाणं प्रत्याह॥ **क्षणिकस्येति**॥

नन्वन्यथानुपपन्नं सदेव सामर्थ्यं वाक्यं बाधते। यागसामर्थ्यं त्वन्यथोपपन्नं न तु स्योनन्त इत्यादावित्यत आह॥ **यथा चेति**॥ **तद्विशिष्टेति**॥ हविरासादनाधारभूत इत्येवंरूपेण तद्विशिष्टेत्यर्थः।

## तर्कताण्डवम्

**न चास्मद्रीत्या परदौर्बल्यमिति जैमिनिसूत्रानुसारेण वाक्यमात्रस्य लिङ्गाद्दौर्बल्यसम्भवे पदद्वयश्रुतिरूपवाक्यं लिङ्गात्प्रबलं लिङ्गविनियोज्यमन्त्रसमभिव्याहाररूपं तु वाक्यं दुर्बलमिति कल्पना युक्ता। प्रकरणगृहीतस्य बर्हिर्मन्त्रस्य लवनशेषत्वं तु दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वमन्याय्यमिति न्यायात्।**

**न च न्यायमात्रं लिङ्गम्। तस्य वाक्याद्दुर्बलत्वात्। लिङ्गस्य च वाक्यात्प्रबलत्वात्। किन्तु वैदिकशब्दार्पितं व्याप्यं वा व्याप्यार्पको वैदिकः शब्दो वेह लिङ्गमित्युक्तम्। स्योनं ते मन्त्रे वाक्यभेदस्त्वर्थैकत्वनयोक्तरीत्या वाक्यान्तर इवार्थभेदादेवान्ततः सिद्धो न तु वाक्येनैकवाक्यत्वे प्राप्ते लिङ्गेन वाक्यभेदः साध्यः। न हि लोके लिङ्गवाक्ये भेदा-भेदप्रमाणे।**

## न्यायदीपः

नन्वैन्द्रयेत्यादौ यजेतेत्यादौ च वाक्यस्य श्रुतिद्वयसमभिव्याहाररूपत्वान्न लिङ्गेन तत्र बाधः। स्योनं त इत्यादौ तु लिङ्गविनियोज्यसमभिव्याहारत्वाद्बाध इत्यतो गत्यन्तरसम्भवे द्विरूपकल्पना न युक्तेत्याह **।। न चेति ।।** न च कल्पना युक्तेत्यन्वयः। शब्दादेवेत्यत्र टीकादौ व्युत्पदितरीत्या "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानं समवाये परदौर्बल्य मर्थविप्रकर्षाद्" इति सूत्रस्य अर्थविप्रकर्षेण परदौर्बल्यानुसरणेन वाक्यसामान्यस्य लिङ्गाद्दौर्बल्यसम्भव इत्यर्थः।

यद्वास्मद्रीत्यावाक्यमात्रस्य लिङ्गाद्दौर्बल्यसम्भव इत्यन्वयः। भवदुक्तं न सूत्रानुसारि भट्टोक्तं तु सूत्रानुसारि अतो द्विरूपकल्पनायुक्तेत्यत उक्तम् **।। इति जैमिनिसूत्रानुसारेणेति ।।** अस्मदुक्तं तच्चैकमेवेति भावः।

यदपि दर्शपूर्णमासप्रकरणस्थस्य बर्हिर्मन्त्रस्य प्रकरणेन सर्वशेषत्वे प्राप्ते तद्बाधेन लिङ्गाल्लवशेषत्वमिति लिङ्गप्रकरणविरोधोदाहरणं तदपि लिङ्गवाक्यविरोधोदाहरणनिरासप्रसङ्गान्निराह **।। प्रकरणेति ।।**

यद्वा – सामर्थ्येन वाक्यबाधे प्रागुक्तातिप्रसङ्गभिया सामर्थ्यं न लिङ्गं कथं तर्हि बर्हिर्मन्त्रस्य लवने विनियोगः अनेन लुनीयादिति वैदिकवचनाभावेन प्रकरणेन सर्वशेषत्वप्राप्तः कथं वा स्योनतं इति मन्त्रे विभज्य विनियोगः इत्यत आह **।। प्रकरणेति ।।** क्वचित्प्रकरणिगृहीतेतिपाठः।

**।। इत्युक्तमिति ।।** परोक्तश्रुत्यादिलक्षणभङ्गे। चन्द्रिकायां वा इह वैदिकार्थनिर्णये लिङ्गमित्युक्तमित्यर्थः। द्वितीय आह **।। स्योनं त इति ।।**

यद्वा लिङ्गेन वाक्यस्याबाधे कथं स्योनन्त इत्यादौ वाक्यभेद इत्यत आह **।। स्योनन्त इति ।। अर्थैकत्वेन चेति ।।** "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्याद्" इति द्वितीयाद्यपादीयपञ्चदशेधिकरणे "अर्थैकत्वाद्विभागे साकाङ्क्षं चेदेकं वाक्यं तदभावे भिन्नं वाक्यम्" इत्युक्तरीत्यार्थभेदादेव गामानय घटमानयेत्यादिवाक्यान्तर इव सिद्ध इत्यर्थः।

**।। वाक्येनेति ।।** समभिव्याहाररूपेणेत्यर्थः। कुतो न साध्य इत्यतोऽव्युत्पन्नत्वादिति भावेनाह **।। न हि लोक इति ।।** लिङ्गसामर्थ्यं वाक्यं समभिव्याहारः ते न प्रमाणे। किं त्वर्थभेदाभेदाविति शेषः।

## तर्कताण्डवम्

सूक्तवाकमन्त्रे इन्द्राग्नी इदं हविरित्यादिवाक्यस्थस्य इदंहविरित्यादिपदस्याग्नीषोमादिपदस्य चान्योन्यमनन्वय आकाङ्क्षाभावादेवान्ततः सिद्धः। न तु प्रकरणेनान्वये प्राप्ते वाक्येनानन्वयः साध्यः। न हि प्रकरणाननुगुणार्थत्वमपि वाऽनाकाङ्क्षितान्वयो वा व्युत्पन्नः। एवमुदाहरणान्तरदूषणमूह्यम्। अस्मद्रीत्या कर्मकाण्डे श्रुत्या लिङ्गबाधो यथा विकृतौ नीवारश्रुत्याऽग्नेयादौ प्रकृतौ व्रीहिव्याप्यत्वेन दृष्टनिर्वापवाचिवैकृतनिर्वपतिशब्दस्य। एवं लिङ्गादिना वाक्यादेर्बाध उदाहर्तव्यः।

### श्रुत्यादिलिङ्गादिबाधे भाट्टोक्तोदाहरणदूषणम् ॥ ८१ ॥

## न्यायदीपः

वाक्यप्रकरणविरोधोदाहरणं चायुक्तमित्याह ॥ **सूक्तवाकेति** ॥ **ऊह्यमिति** ॥ प्रकरणस्थानविरोधोदाहरणे सन्निधिरूपस्थानप्रकरणात्प्रकरणस्य प्राबल्येपि यथासङ्ख्याम्नानादिरूपस्थानमन्त्रात्प्राबल्याप्राप्तेः स्थानसमाख्याविरोधोदाहरणं चायुक्तं समाख्यायाः श्रुतिरूपतायाः प्रागुपपादितत्वेन स्थानेन बाधायोगात्। एवं श्रुतिवाक्यविरोधे श्रुतिप्रकरणादिविरोधे लिङ्गस्थानादिविरोधे च यद्यदुदाहरणं परैरुक्तं तत्र सर्वत्रापि दूषणमूह्यमित्यर्थः। ग्रन्थगौरवभयान्नास्माभिरतिप्रपञ्च्यते।

॥ **विकृताविति** ॥ नैवारश्चरुर्भवतीतिविकृतियागे श्रुतम्। तत्र चोदकेनाग्नेयाङ्गानां प्राप्तौ व्रीहिव्याप्यत्वेन दृष्टनिर्वापवाचिशब्दः व्रीहीन्निर्वपतीत्येवंरूपो विकृतौ प्राप्तः। स च व्याप्यधर्मवाचित्वाल्लिङ्गरूपस्तस्य बाध इत्यर्थः।

॥ **एवं लिङ्गादिनेति** ॥ यस्य पर्णमयी जुहूर्भवतीत्यादौ क्रतुव्याव्य जुहुवाचिशब्देन लिङ्गेन न सपापं श्लोकं श्रुणोतीति समभिव्याहृतवाक्यस्य फलार्पकत्वबाधेनार्थवादत्वस्वीकारं लिङ्गेन वाक्यबाधे

उदाहरणं; वाक्येन प्रकरणबाधे तु अरुणया क्रीणातीत्यादौ प्रकरणादारुण्यादेः प्रकरणिशेषत्वे प्राप्ते तद्बाधेन क्रीणातिसमभिव्याहाररूपवाक्येन क्रयशेषत्वमित्यारुण्यावाक्यमुदाहरणं; प्रकरणेन स्थानबाधे तु अभिक्रामं जुहोतीति प्रयाजप्रकरणस्थस्याभिक्रमणस्य स्थान प्रमाणेन दर्शपूर्णमासाङ्गत्वे प्राप्ते तद्बाधेन प्रयाजप्रकरणेन तदङ्गत्वमित्युदाहरणमित्यादि द्रष्टव्यमित्यर्थः।

श्रुत्यादिना लिङ्गादिबाधे भट्टोक्तोदाहरणभङ्गः ॥ ८२ ॥

***

## ८३. अथ प्राभाकरोक्तश्रुत्यादिबलाबलबीजभङ्गः।

**प्राभाकरास्तु–**

**श्रुत्यादीनां भाट्टोक्तान्येव लक्षणान्युदाहरणानि च वदन्तो बलाबलबीजमेवमाहुः – व्रीहीनित्यादौ द्वितीया श्रुतिः शब्दरूपतयाऽन्यानपेक्षैव व्रीहीणां शेषित्वं बोधयितुं प्रवृत्ता शेषिणः कार्यतालक्षणां विना बोधयितुमशक्ता सती लक्षणार्थं ग्राहकान्वयमात्रमपेक्षत इति ग्राहकान्वय-मात्रपूर्विका द्वारैदमर्थ्ये प्रमाणम्। लिङ्गं त्वशब्दात्मकत्वान्न स्वयमेव शेषत्वमाह। किं तु ग्राहकगृहीत्यस्य मन्त्रस्य ग्राहकैदमर्थ्यनिर्वाहाय करणैदमर्थ्ये कल्पिते तत्रापि देवतोद्देशेन वस्तुत्यागात्मकयागरूपं करणं प्रतिमन्त्रस्य साक्षादनिर्वर्तकतया करणीयं द्रव्यं किञ्चिदनेनोप-कर्तव्यमिति निश्चिते किं तदिति विशेषाकाङ्क्षायां यच्छक्यं तदित्येवं द्वारशेषता मन्त्रस्य ॥**

तस्माद्द्वारैदमर्थ्ये श्रुतितो विलम्बितत्वाल्लिङ्गं दुर्बलम् ॥

## न्यायदीपः

**॥ एवमिति ॥** वक्ष्यमाणप्रकारेणेत्यर्थः। श्रुतिलिङ्गाद्यधिकरण नयविवेकवरदराजीयोक्तं निष्कृष्यानुवदिति ॥ **व्रीहीनित्यादावित्यदिना ॥** व्रीहीनवहन्तीत्यादावित्यर्थः।

**॥ शेषित्वं ॥** अवघातं प्रति प्राधान्यमित्यर्थः। कार्यतालक्षणां कृतिसाध्यत्वबोधकलक्षणावृत्तिं बोधयितुमिति शेषित्वमित्यनुकर्षः। लक्षणार्थं ग्राहकान्वयमात्रमिति। ग्राहकं फलापूर्वमुच्यते तस्यैव मुख्यं कार्यत्वं अन्यस्य तु मत्प्रकरणे पठितं सर्वं मदर्थमिति ग्राहकान्वये सत्येव कार्यमिदमिति कार्यताधीर्भवतीति कार्यतालक्षणार्थं ग्राहकान्वयं व्रीहीणामपेक्षत इत्यर्थः।

मात्रपदेन करणान्वयो व्यावर्त्यते। द्वारैदमर्थ्ये, द्वारशेषत्वे। आघातादेरिति योज्यम्। अवघातो हि द्वितीयावगतशेषिभूतव्रीहिद्वारा ग्राहकैदमर्थ्यं भजत इति द्वितीयाश्रुतिः ग्राहकान्वयमात्रमपेक्ष्य कार्यतां व्रीहीणां लक्षणाया बोधयित्वावघातस्य द्वारैदमर्थ्ये प्रमाणं भवतीत्यर्थः।

**॥ ग्राहकगृहीतस्येति ॥** मत्प्रकरणे पठितं मदर्थमिति फलापूर्वपरिगृहीतस्य साक्षाद्ग्राहक-स्वरूपानिष्पादकतया साक्षाच्छेषत्वायोगात्तन्निर्वाहाय साक्षाद्ग्राहकशेषभूतकरणशेषत्वेनेतिकरणैदमर्थ्यं कल्पनीयं तास्मिन्कल्पितेऽपि करणभूतयागस्वरूपं न साक्षान्निवर्तयतीति यागस्वरूपघटकद्रव्य-प्रकाशनादिरूपद्रव्योपकारद्वादैव द्वारशेषतेत्यर्थः।

**॥ श्रुतितो विलम्बितत्वादिति ॥** श्रुतिग्राहकान्वयमात्रमपेक्ष्यावघातादेर्द्वारैदमर्थ्यं बोधयति। लिङ्गं तु ग्राहकान्वयं करणैदमर्थ्यं चापेक्ष्य मन्त्रस्य द्वारैदमर्थ्यं बोधयतीति विलम्बितत्वाच्छ्रुतितो दुर्बलमित्यर्थः।

## तर्कताण्डवम्

**तथा मन्त्राणां न पाठमात्रात्सम्भूयबोधकतयैक-वाक्यता। विनियोगाधीनत्वान्मन्त्रभेदाभेदयोः। स्योनं ते मन्त्रस्य विनियोगश्च लैङ्गिक इति लिङ्गपूर्वकं वाक्यं स्वापेक्षणीयाल्लिङ्गाद्विलम्बितमिति दुर्बलम्। अयमेव हि**

**वाक्यस्य लिङ्गेन बाधो नाम यल्लिङ्गानुसारेण भेदकल्पनम् ॥**

## न्यायदीपः

लिङ्गाद्वाक्यस्य दौर्बल्यबीजविप्रकर्षमाह ॥ **तथा मन्त्राणामिति** ॥ स्योनं ते सदनं कृणोमी-त्यादीनां तस्मिन्सीदेतिभागेन सहाध्ययनमात्रेण सम्भूय मिलित्वाबोधकतयैकवाक्यता नेत्यर्थः।

॥ **मन्त्रभेदाभेदयोरिति** ॥ स्योनं त इत्यारभ्य कल्पयाम्यन्त एको मन्त्रस्तस्मिन्नित्यादिरन्य इति वा, स्योनं त इत्यादि सुमनस्यमान इत्यन्तं सर्वोप्येकं एवेति मन्त्रभेदाभेदयोर्विभागेनैकैकदेशस्य विनियोगेन वा, अविभागेन सर्वस्य मन्त्रस्य विनियोगेन वा, ज्ञातव्यत्वादित्यर्थः। अस्तु विनियोगाधीनत्वं तथोः ततः किमित्यत आह ॥ **स्योनन्ते मन्त्रस्येति** ॥ स्योनं त इतिमन्त्रस्येत्यर्थः।

## तर्कताण्डवम्

**तथा इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य सर्वापेक्षणीयत्वेन प्राधान्येपि तेन करणान्वयस्यैव सिद्धेः करणीयद्वारान्वयस्य कल्प्यत्वात्क्लृप्ते च वाक्यीये आभिधानिके द्वारविशेषान्वये सति सर्वद्वारान्वय-कल्पनायोगेन द्वारान्वये क्लृप्ताद्वाक्यात्कल्प्य द्वारान्वयं प्रकरणं दुर्बलमिति। इन्द्राग्नी इदमित्यत्रेदमित्यादिकं समभिव्याहृतेन्द्राग्न्यादिपदेनैवान्वेति नान्येन।**

## न्यायदीपः

वाक्यप्रकरणयोर्बलाबलबीजमनुवदति ॥ **तथेतिकर्तव्यतेति** ॥ **सर्वापेक्षणीयत्वेनेति** ॥ प्रधानापूर्वशब्दितविनियोगस्येतिकर्तव्यताकाङ्क्षावशादेव हि श्रुतिलिङ्गादिभिः पदार्थानामन्वयो बोध्य इति श्रुत्यादिसर्वापेक्षणीयत्वेनेत्यर्थः। तेन प्रकरणेन दर्शपूर्णमासयागप्रकरणान्वयस्येव सिद्धेः प्रकरणस्य सर्वकरणान्वयमूलत्वादिति भावः।

॥ **करणीयेति** ॥ करणसम्बन्धि यद्द्वारं द्रव्यदेवताप्रकाशनादिरूपं तदन्वयस्य कल्प्यत्वा-दित्यर्थः। प्रकरणस्य तत्रासमर्थ्यादिति भावः ॥ **क्लृप्ते चेति** ॥ इन्द्राग्नी इदं हविरजुषेतामित्यत्रेदं हविरित्यादेरिन्द्राग्नीपदसमभिव्याहाररूपवाक्येनेन्द्राग्निदेवता-प्रकाशनरूपद्वारविशेषान्वयः क्लृप्तः प्रमित इत्यर्थः। अन्विते शक्तेरुपेतत्वेनाभिधानवृत्तिलब्धत्वादाभिधानिकश्च भवति। तस्मिन्विद्यमाने सर्वकरणीयाग्नीषोमादिदेवतादिप्रकाशनरूपद्वारान्वयकल्पनायाः प्रकरणप्राप्ताया अयोगेन द्वारान्वयविषये क्लृप्ताद्वाक्यात्कल्प्यद्वारान्वयं प्रकरणं दुर्बलमित्यर्थः। दुर्बलमितीति शब्दो हेत्वर्थः। इति हेतोरिदमित्यादिकं इन्द्राग्न्यादिपदेनैवान्वेतीत्यर्थः ॥ **नान्येनेति** ॥ अग्नीषोमादिपदेनेत्यर्थः।

### तर्कताण्डवम्

**तथा राजसूयप्रकरणे अभिषेचनीयेष्टिसन्निहितानां देवनादीनां वाक्यार्थत्वादरुणया क्रीणातीत्यादौ पदार्थानां क्रियाकारकाद्यन्वये आम्नासन्निधानस्य तन्त्रत्वेपि वाक्यार्थान्वये तस्यातन्त्रत्वान्नियोगाकाङ्क्षामुखसन्निधानस्यैव तन्त्रत्वात् तस्य च नियोगीयसर्वकरणसाधारण्यात्तदीय-सर्वकरणान्वयो न तु सन्निधानादभिषेचनीयमात्रान्वयः। तत्सन्निधानं त्वाम्नानार्थम्।**

**तथा पौरुषेययौगिकसञ्ज्ञारूपसमाख्या न वैदकीत्यन्वयहेतुर्वैदिकसन्निधानकल्पनयैवान्वयहेतुर्न साक्षादिति शुन्धनमन्त्रस्य पुरोडाशपात्रान्वयबाधेन सान्नाय्यपात्रान्वय – इति ॥**

**तन्न। अतिदेशप्रमाणयोश्चोदनालिङ्गवचनयोः क्रम-प्रमाणयोः श्रुत्यर्थयोर्देवताप्रमाणयोर्लिङ्गतद्धितयोश्च बला-बले तस्य बीजस्याननुगमात्। न हि श्रुतिलिङ्गादिकं शेष-शेषित्व एव प्रमाणम्॥**

## न्यायदीपः

प्रकरणस्थानयोर्बलाबलबीजमाह ॥ **तथा राजसूयेति** ॥ **वाक्यार्थत्वादिति** ॥ अक्षैर्दीव्यतीत्यादिवाक्यार्थत्वादित्यर्थः। अस्य वाक्यार्थान्वय इत्यनेन सम्बन्धः। पदार्थानामारुण्यादीनाम् ॥ **आम्नानसन्निधानस्य** ॥ पाठसान्निध्यस्येत्यर्थः। नियोगः राजसूयशब्दितेष्टिपशुसोमकरणकपरमापूर्वस्य या इतिकर्तव्यताकाङ्क्षा तद्द्वारकसन्निधानस्येत्यर्थः।

॥ **तस्य चेति** ॥ नियोगाकाङ्क्षामुखसन्निधानस्येत्यर्थः ॥ **नियोगीयेति** ॥ नियोगजनकेष्टिपशुसोमरूपसर्वकरणसाधारण्यान्नियोगसम्बन्धिसर्वकरणशेषतेत्यर्थः ॥ **आम्नानार्थमिति** ॥ यत्र क्वच पठनीयत्वात्तत्र पाठः कृत इत्यर्थः।

स्थानसमाख्ययोर्बलाबलबीजमाह ॥ **तथा पौरुषेयेति** ॥ **अन्वय इतीति** ॥ शब्दस्य इत्येवमाहुरिति पूर्वेणान्वयः। अतिदेशप्रमाणयोरित्यादि भट्टमतबलाबलबीजभङ्गे विवृतमेतत्।

ननु श्रुत्यादिकं शेषशेषिभाव एव मानं, तत्र चोक्तं बलाबलबीजं नाव्याप्तमित्यत आह ॥ **न हीति** ॥ चोदनालिङ्गस्य वचनशब्दितश्रुतेश्चातिदेशमन्त्रलिङ्गस्य देवतायां श्रुत्यर्थशब्दितश्रुतिलिङ्गयोः क्रमे प्रमाणत्वादिति भावः।

## तर्कताण्डवम्

**किञ्च मन्त्राधिकरणे तदर्थशास्त्ररूपश्रुतेरनुवादकत्वाय लिङ्गस्याग्रेसरत्वोक्त्या तद्विरोधः ॥**

**अत्रोक्तं नयविवेके – अनुगुणतदर्थशास्त्राल्लिङ्गस्य अग्रेसरत्वं तत्रोक्तम्। शेषशेषिकिञ्चित्कारो हि विनियोगसामग्री। तत्रोरुप्रथस्वेति पुरोडाशं प्रथयतीत्यादितदर्थशास्त्रैः शेषशेषिमात्रमर्पितम्। न तु शेषसाध्यः शेषिगतः प्रथनप्रकाशरूपः किञ्चित्कारः। स तु लिङ्गगम्यः।**

**एवं च किञ्चित्कारार्थं श्रुत्यपेक्षितं लिङ्गं विनियोग-**

सामग्रीभूतशेषशेषिकिञ्चित्कारपूर्तेः स्वयमेव विनियोजकम्। तस्यां दशायां तदर्थशास्त्रमनुवादः। ऐन्द्यां तूपान्मन्त्रकरण इति सूत्रादुपपूर्वस्य तिष्ठतेरभिधानार्थत्वेनोपतिष्ठत इत्यनेन गार्हपत्याभिधानस्य किञ्चित्कारस्यापि श्रुत्यैवोक्तत्वाल्लिङ्गानपेक्षा श्रुतिरिति भेदः।

## न्यायदीपः

श्रुतितो लिङ्गस्य विलम्बितगतित्वेन विप्रकर्षोक्तिर्मन्त्राधिकरणविरुद्धेत्याह ॥ **किञ्चेति** ॥ **नयविवेक इति** ॥ शाबरव्याख्यानरूपे प्राभाकरग्रन्थे मन्त्राधिकरणीयश्रुतिलिङ्गवैषम्यमुक्तं मन्त्राधिकरण इत्यर्थः।

मन्त्रोक्तार्थप्रकाशकं तदर्थशास्त्रम्। तद् द्विविधं मन्त्रानुगुणं तदननुगुणं चेति। तत्राद्यंप उरु प्रथस्वेति पुरोडाशं प्रथयतीति। द्वितीयं तु धान्यमसीति दृषदि तण्डुलानधिवपतीति। तत्रानुगुणशास्त्रादेव मन्त्रलिङ्गस्याग्रेसरत्वमुक्तम्। न तु तदननुगुणशास्त्रस्य। तथाप्यैन्द्र्यादिस्थले न तत्साम्यमिति भावेन मन्त्रधिकरणोक्तं तावद्व्यनक्ति ॥ **अनुगुणेत्यादिना** ॥

कथमुक्तमित्यतो व्यनक्ति ॥ **शेषेत्यादिना** ॥ शेषकृतशेषिगतोपकारशब्दितकिञ्चित्कारवतीत्यर्थः। किञ्चित्कारे लब्धे विनियोजकं प्रमाणं विनियुङ्क्ते नचेन्नास्तीत्यर्थः ॥ **शेषशेषिमात्रमिति** ॥ मन्त्रः शेषः प्रथनं शेषीतीति विज्ञापितमित्यर्थः।

॥ **लिङ्गगम्य इति** ॥ ''उरु प्रथस्वोरु ते यज्ञपतिः प्रथता''मिति मन्त्रस्यार्थप्रकाशनसामर्थ्यरूपलिङ्गगम्यः। तावता कथं लिङ्गस्याग्रेसरत्वमित्यत आह ॥ **एवं चेति** ॥ किञ्चित्कारे लिङ्गगम्ये सतीत्यर्थः ॥ **श्रुत्येति** ॥ विनियोजकतदर्थशास्त्रादिरूपश्रुत्येत्यर्थः।

॥ **शेषेति** ॥ शेषकृतशेषिगतप्रकाशनरूपकिञ्चित्कारस्य पूर्तेः पूर्णत्वादित्यर्थः। अस्त्वेवं प्रकृते किमित्यत आह ॥ **ऐन्द्र्यां त्विति** ॥ **उपादिति** ॥ उपशब्दपूर्वकात्स्थाधातोरात्मनेपदं भवति, मन्त्रकरणकाभिधाने विवक्षिते सतीति पाणिनिसूत्रादित्यर्थः। अभिधानार्थत्वेनेत्येकदेशानुवादः। तावत एव प्रकृतोपयोगात् ॥ **किञ्चित्कारस्यापीति** ॥ न केवलं शेषादिस्वरूपस्येत्यपेरर्थः।

## न्यायदीपः

**धान्यमसीति दृषादि तण्डुलानधिवपतीति विगुणतदर्थशास्त्रे किञ्चित्कारस्य श्रुत्यानुक्तत्वेपि तत्र विनियोज्यस्य मन्त्रस्य वाक्यरूपत्वेनाभिधानसामान्यरूपकिञ्चित्कारसामान्यमाश्रित्य श्रुतिरेव विनियोजिका। लिङ्गलभ्यस्य धान्यप्रकाशरूपकिञ्चित्कारस्य शेषीभूततण्डुलगतत्वाभावेन विध्यनपेक्षिततया तिरस्कृतत्वात्। अनुगुणतदर्थशास्त्रे तु प्रथनप्रकाशनरूपकिञ्चित्कारविशेषो न तिरस्कारार्हः। विध्यपेक्षितत्वादिति।**

## न्यायदीपः

नन्वेवं – विगुणतदर्थशास्त्रेऽपि किञ्चित्कारस्य श्रुत्यलभ्यत्वात्तत्रापि लिङ्गसापेक्षता स्यादित्यत आह ।। **धान्यमसीति** ।। **विगुणेति** ।। मन्त्रब्राह्मणयोर्भिन्नार्थत्वादिति भावः ।। **श्रुत्येति** ।। विनियोजकब्राह्मणस्थश्रुत्येत्यर्थः।

।। **अभिधानसामान्येति** ।। धान्याभिधानतण्डुलाभिधानत्वरूपविशेषविनाकृतसामान्यरूपेत्यर्थः ।। **विधीति** ।। अधिवपतीति विध्यनपेक्षितत्वेनेत्यर्थः। विगुणतदर्थशास्त्रप्रक्रियोपन्यासो वक्ष्यमाणदोषोक्तिसौकर्याय। अनुगुणेप्येवं कुतो नेत्यत आह ।। **अनुगुणेति** ।।

## तर्कताण्डवम्

**उच्यते–**

**यथा ग्राहैकदमर्थ्यस्य प्रथमावगतस्य पाश्चात्येनद्वारैदमर्थ्येन निर्वाहः, यथा वारुण्यस्य क्रयसाधनताया पूर्वावगतायाः पार्ष्टिकेन द्रव्यान्वयेन निर्वाहः, यथा वा**

**रथघोषेण माहेन्द्रस्तुतिमुपाकरोतीत्यत्रादृष्टद्वारिकाया माहेन्द्रस्तुतिं प्रति रथघोषशेषतायाः व्रीहीन्प्रोक्षतीत्यत्र व्रीहीन्प्रतिप्रोक्षणशेषतायाश्च पश्चात्कल्पितेनादृष्टेन निर्वाहः; तथा हि पुरोडाशं प्रथयतीति तदर्थशास्त्रस्थेनेति शब्देन मन्त्रस्य करणत्वप्रतीतेरनेनेदङ्कर्तव्यमित्येवंरूपेण तदर्थशास्त्रेण स्पष्टं पूर्वावगतस्य विनियोगस्य पाश्चात्येन लैङ्गकेन किञ्चित्कारेण निर्वाहोस्तु। न हि किञ्चित्काररूपोपकारहेतुत्वमेव शेषत्वम्। उपकारकस्याप्याधानस्य अनङ्गत्वात्। त्वन्मतेऽनुपकारकस्याप्यवघातस्य कृष्णलान् प्रतिशेषत्वाच्च।**

## न्यायदीपः

यन्मन्त्राधिकरणेतिश्रुतितो लिङ्गस्य प्रथमप्रवृत्तत्वमुक्तम्। तदयुक्तम्। ऐन्द्र्येत्यादाविव तत्रापि श्रुतेरेव प्राथम्योपपत्तेरित्येतद्दृष्टान्तचतुष्टयोक्तिपूर्वकमाह ॥ **यथेत्यादिना** ॥ **ग्राहकेति** ॥ अवघातादेः परमापूर्वकाकाङ्क्षया तच्छेषत्वेनावगतस्य व्रीह्यादिद्वारशेषत्वेन निर्वाहः साक्षादसम्भवादित्यर्थः ॥ **आरुण्यस्येति** ॥ अरुणया क्रीणातीत्यादिवाक्योक्तस्येत्यर्थः।

॥ **द्रव्येति** ॥ गवा क्रिणातीत्युक्तगोरूपद्रव्येन्वयेनेत्यर्थः ॥ **रथघोषेणेति** ॥ सोमयागे क्रीतसोमलताधारभूतरथाकर्षोत्पन्नचक्रघोषेणेत्यर्थः। रथघोषं श्रुत्वा महेन्द्रस्तोत्रं कुर्यादित्यर्थः। दृष्टासम्भवादाह ॥ **अदृष्टेति** ॥ शेषताया निर्वाह इत्यन्वयः ॥ **व्रीहीनिति** ॥ यथा वेत्यनुकर्षः ॥ **अदृष्टेनेति** ॥ व्रीहिगतातिशयरूपादृष्टेनेत्यर्थः।

ननु – शेषत्वप्रतीतावेव किञ्चित्कारप्रतीत्या भाव्यं तद्धेतुत्वस्यैव शेषत्वरूपत्वादिति वदन्तं प्रत्याह ॥ **न हीति** ॥ **आधानस्यानङ्गत्वादिति** ॥ ''तत्प्रकृत्यर्थं यथान्येनारभ्य वादा'' इति तृतीयषष्ठपादीयपञ्चमाधिकरणे तथोक्तेरिति भावः। अव्याप्तिं चाह ॥ **त्वन्मत इति** ॥ कृष्णलः स्वर्णमाषः। ''प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम'' इति विकृतौ श्रुतकृष्णलान्प्रति

तुषविमोकलक्षणोपकारमकुर्वतोपीत्यर्थः।

## तर्कताण्डवम्

यदि तु अनुगुणतदर्थशास्त्रस्यानुवादकत्वाय लैङ्गिक-किञ्चित्कारप्रतीतिर्विनियोगसामग्रीति मतं, तदा विगुण-तदर्थशास्त्रस्थलेपि सैव विनियोगसामग्री स्यात्। तदर्थ-शास्त्रस्थं तु तण्डुलपदं लिङ्गानुसाराद्धान्यलक्षकं स्यात्।

कथं हि सन्निकृष्टत्वेन प्रबलं लिङ्गं विप्रकृष्टस्यानुगुण-तदर्थशास्त्रस्यानुवादकतामापादयद्विगुणतदर्थशास्त्रस्य गौणतां नापादयेदिति लिङ्गमेव बलीयः स्यादिति दिक्।

## न्यायदीपः

विपक्षबाधकेनापि लिङ्गस्याग्रेसरत्वं निराह॥ **यदि त्विति**॥ विगुणस्थले लिङ्गगम्यकिञ्चित्कारो नास्तीत्यत आह॥ **तदर्थशास्त्रस्थं त्विति**॥ **लिङ्गेति**॥ मन्त्रलिङ्गानुसारादित्यर्थः।

लिङ्गाच्छ्रुतेर्गौणत्वमन्याय्यमित्यत आह॥ **कथं हीति**॥ **सन्निकृष्टत्वेनेति**॥ किञ्चित्कारपूर्त्या विनियोजकं लिङ्गमित्युक्तत्वादिति भावः।

## तर्कताण्डवम्

प्रकाशस्त्वग्रेसरत्वेपि श्रुतेर्भाविन्या लैङ्गिक्या-प्राप्त्यानुवादता, त्रिकालायां ह्यप्राप्तौ विधिः, एवं च श्रुति-लिङ्गनयोक्तं श्रुतेरग्रेसरत्वेन प्राबल्यं मन्त्राधिकरणोक्त-मनुगुणतदर्थशास्त्रस्यानुवादकत्वं चाविरुद्धम्, विगुण-तदर्थशास्त्रे तु भाविन्यपि लैङ्गिकप्राप्तिर्नेति नानुवद-कतेत्याह।

तन्न। अवश्यम्भाविनी हि प्राप्तिर्विधित्वं विहन्ति। इह तु ज्ञाते श्रौते विनियोगे ग्राहकमन्त्राम्नानयोश्चरितार्थत्वाद् भाव्यपि लैङ्गिको विनियोगो नास्त्येव।

किञ्च लैङ्गिकप्राप्तेर्भावित्वेपि न पूर्वस्याः श्रुतेरनुवादता उक्तस्य वादो ह्यनुवादः॥

## न्यायदीपः

लिङ्गस्य सर्वत्र विप्रकृष्टत्वेन दौर्बल्यमेवोपेत्य केनचिदुक्तं समाधिमनूद्य निराह ॥ **प्रकाश-स्त्विति** ॥ कस्यचिन्नामैतत् आहेत्यन्वयः। अनुवादतानुगुणतदर्थशास्त्रस्य दुर्लभेति भावेन दूषयति ॥ **तन्नेत्यादिना** ॥ **इह त्विति** ॥ उरुप्रथस्वेति विनियोगस्थले त्वित्यर्थः ॥ **ग्राहकेति** ॥ ग्राहकस्य मन्त्राम्नानस्य चेत्यर्थः।

ननु – श्रौतविनियोगे जातेपि किन्द्वारास्य शेषत्वमिति विचारे दृष्टसम्भवेऽदृष्टकल्पना-योगाल्लैङ्गिकोपि विनियोगः आवश्यक इति वादिं प्रत्याह ॥ **किञ्चेति** ॥

## तर्कताण्डवम्

चन्द्रस्तु – यद्यपि श्रुत्या शीघ्रं विनियोगः। स तु क्रिया-कारकान्वयरूपो द्वैतीय एव। न तु शेषशेषित्वरूपस्तार्तीयः। किञ्चित्कारस्य श्रुत्यानुक्तेः। किन्त्वयं लैङ्गिक एव। ऐन्द्र्यान्त्वभिधानरूपः किञ्चित्कारः श्रुत्योक्तः इति तत्र तार्तीयोपि श्रौत इत्याह।

तन्न। धान्यमन्त्रे किञ्चित्कारस्य श्रुत्यानुक्तत्वेन तत्र विनियोगस्याश्रौतत्वापत्तेः। श्रुतिलिङ्गाधिकरणे तार्तीय-शेषत्व एव श्रुतिलिङ्गयोर्बलाबलस्योक्तत्वेन तत्रैव श्रुतेः

**शीघ्रताया वक्तव्यत्वाच्च। प्रतीयते चेप्सिततमत्वाद्यभि-धायकद्वितीयादिना लिङ्गादपि शीघ्रं शेषत्वम्।**

## न्यायदीपः

प्रकारान्तरेण मन्त्राधिकरणविरोधं केनचिदुक्तमनूद्य निराह ॥ **चन्द्रस्त्विति** ॥ इत्याहेत्यन्वयः। द्वैतीयो द्वितीयाध्यायसम्बन्धी। एवं तार्तीय इत्यपि किञ्चित्कारस्य शेषकृतस्य शेषिगतस्येत्यर्थः। अयं, किञ्चित्कार इत्यर्थः ॥ **अभिधानरूप इति** ॥ उपान्मन्त्रकरण इत्यादिप्रागुक्तरीत्येति भावः ॥ **श्रौत इति** ॥ लैङ्गिकश्चेत्तदा श्रुतेरग्रेसरत्वविरोधः स्यादिति भावः। श्रुत्यनुक्तत्वमात्रेणाश्रौतत्वेतिप्रसङ्गमाह ॥ **धान्येति** ॥ ''धान्यमसीति दृषदि तण्डुलानधिवपत'' इत्यत्रेत्यर्थः।

यत्तु – श्रुतेः शीघ्रं विनियोजकत्वं द्वितीयाध्यायोक्तक्रियाकारकान्वयबोधकत्वरूपमेव। लिङ्गविनियोजकत्वं तु तृतीयोक्तशेषत्वादिबोधकत्वादिरूपं क्वचित्तृतीयेपि श्रौतमपि नियोजकत्व-मस्तीति। तत्र द्वितीये श्रौतविनियोग इत्ययुक्तमित्याह ॥ **श्रुतिलिङ्गेति** ॥

॥ **अंशत इति** ॥ ''आग्नेय्याग्नीध्रमुपतिष्ठत'' इत्यादिस्थले श्रुतेरग्रेसरत्वोपगमेऽनुवादकता। ''उरुप्रथस्वेति पुरोडाशं प्रथयत'' इत्यादितदनगुणतदर्थशास्त्रस्थले लिङ्गस्य विधिरूपत्वं तस्यैव तत्राग्रेसरत्वोक्तेरिति भावः ॥ **श्रुतेरिति** ॥ तदर्थशास्त्ररूपश्रुतेः शीघ्रत्वादित्यर्थः। इतिशब्दो मन्त्राधिकरणविरोधपरिहारप्रकारभेदखण्डनरूपावान्तरप्रकरणसमाप्तौ।

## तर्कताण्डवम्

**यत्तु केनचिदुक्तं – न प्रतिमन्त्रं लैङ्गिको विनियोगः। किं तु यो मन्त्रो यत्प्रकाशकः तत्तेन कुर्यादिति ग्राहकगृहीतसर्वमन्त्रसाधारण एक एव विनियोगः। तेन बहुविषयस्य लिङ्गस्यांशतोनुवादकत्वमन्ततश्च विधित्वमिति स्वीकारे वैरूप्यापत्तेः। सर्वत्रापि विधितैव। तदर्थशास्त्रं त्वल्पविषयत्वाद्वैरूप्याप्रसङ्गादनुवाद इति। तन्न। प्राबल्याय**

श्रुतेः शीघ्रत्वादनुवादकत्वायोगात्। अनुवादकत्वाय लिङ्गस्यैव शीघ्रत्वे तु श्रुतेर्विप्रकर्षेण दौर्बल्यापातादिति।

यच्च लिङ्गवाक्ययोर्बलाबलबीजमुक्तम्। तन्न। लौकिक वाक्यवत् ब्राह्मणवाक्यवत् छन्दो निबद्ध ऋगात्मकमन्त्रवत् इषेत्वेत्यादिश्रुतिविनियुक्तयजुर्वच्च स्योनं त इत्यादिलिङ्ग-विनियोज्ययजुःस्वपिविनियोगनिरपेक्षमेवार्थैकत्वनयोक्तरीत्या अर्थवशेनैव भेदाभेदप्रतीतेः।

उक्तं हि–

"रूपादुत्तरकाले हि विनियोगप्रयोजने।
तस्मात्प्रागेव तत्क्लृप्तेर्भेदाभेदप्रतीक्षणम्" ॥

इति। न हि विनियोगादुत्तरकालं रूपनिरूपणं युक्तम्। अज्ञातस्वरूपस्य विनियोगाशक्तेः।

यदा च मन्त्ररूपनिरपेक्षश्रुतिविनियुक्ते इेष त्वेत्यादौ स्वत एव वाक्यभेदधीः तदा किं वक्तव्यं मन्त्ररूप-सापेक्षलिङ्गविनियोज्य इति। एवं वाक्यप्रकरणादेरपि परोक्तबलाबलबीजदूषणमूह्यम्।

तस्माट्टीकोक्तमेव श्रुत्यादिलक्षणं बलाबलबीजं च युक्तम्। नान्यदिति।

प्राभाकरोक्तश्रुत्यादिबलाबलबीजभङ्गः ॥ ८३ ॥

इति श्रीब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना
विरचिते तर्कताण्डवे द्वितीयःपरिच्छेदः समाप्तः।

## न्यायदीपः

लौकिकवाक्यवदित्यादिवतिप्रत्ययाः सप्तम्यान्ताद्ध्येयाः। लौकिकवाक्यादावर्थवशेनैव भेदाभेदधीस्तथेत्यर्थः॥ **श्रुतिविनियुक्तेति**॥ इषेत्वेति छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीत्येवं रूपेण विनियुक्तेत्यर्थः॥ **अर्थैकत्वेति**॥ अर्थैकत्वादेकं वाक्यमिति नयोक्तेत्यर्थः।

॥ **रूपादिति**॥ स्वरूपनिर्णयादुत्तरकाल इत्यर्थः। तत्क्लृप्तेः विनियोगप्रयोजननिर्णयात् प्रागेवेत्यर्थः। श्रुतिविनियुक्ते यजुषि भेदधीर्युक्ता। न तु लिङ्गविनियोज्ये प्रागेव भेदधीरित्यत आह॥ **यदा चेति**॥ **एवमिति**॥ यथा ग्राहकैदमर्थ्यस्येत्याद्युक्तदिशा प्रकरणस्य विनियोजकसर्वप्रमाणसहायत्वेन तेन प्रथमावगतकरणीयान्वयस्येन्द्राग्न्यादिवाक्यशेषतया यथाश्रुताम्नानाबाधेनाप्युपपत्त्या तत्र प्रकरणबाधाभावात् प्रकरणस्थानबलाबलबीजस्थलेप्यभिषेचनीयाङ्गत्वाबाधेनैवाधिकेष्टिपश्वाद्यङ्गत्वस्योक्तत्वेन तत्र प्रकरणप्राबल्येन सन्निधिबाधाभावात् यथासङ्ख्याम्नानादिस्थले त्वदुक्तबीजाभावाच्च समाख्यादौर्बल्यबीजं चायुक्तम्। वैदिकसमाख्यायामव्याप्तेः। तस्यापौरुषेयत्वेन साक्षाच्छ्रुतेरिव विनियोजकत्वसम्भवादित्यादिरूपेणोह्यमित्यर्थः।

परोक्तखण्डनस्योपयोगं वदन्नुपसंहरति॥ **तस्मादिति**॥ उक्तदिशा परोक्तस्य दोषग्रस्तत्वात् टीकोक्तस्य चानवद्यत्वादित्यर्थः।

प्राभाकरोक्तश्रुत्यादिबलाबलबीजभङ्गः॥ ८३॥

इति श्रीमत्सुधीन्द्रगुरुपादशिष्यराघवेन्द्रयतिकृते
तर्कताण्डवविवरणे न्यायदीपे द्वितीयः परिच्छेदः समाप्तः

***

# Tarkatāṇḍavam of Śrī Vyāsatīrtha

Epistemology is an important aspect of Philosophy. Every school of Philosophy develops its own epistemology. In Indian Philosophy the Nyāya school is exclusively devoted to the development of epistemology. It is designated as प्रमाणशास्त्र. However, the other schools differ from it on some important epistemological issues. These differences are noted in the Manuals on epistemology of respective schools. Tarkatāṇḍava of Vyāsatīrtha gives a consolidated and comparitive exposition of all major issues of epistemology. Tatvachintāmaṇi of Gangeśa is taken as a representative text of Nyāya, Prakaraṇapañcikā of Śālikanātha is taken as a representative text of Prābhākara mimāmsā. The views of these two schools are particularly reviewed.

The theory of knowledge, the theory of the impersonal nature of Veda, the theory of the meaning of the word and sentence, the import of the injunction, are discussed in detail and a comparative and critical presentation of the Nyāya, Mīmāmsa and Vedānta views is made.

Vyāsatīrtha has developed a new style of presenting philosophical and epistemological issues in his Nyāyāmṛta and Tarkatāṇḍava. It is hailed as

न्यायामृतेनार्जिता कीर्तिः ताण्डवेन विभूषिता

His critical review of Tatvachintāmaṇi of Gangeśa needs serious attention of Nyāya Research Scholars and clarification on many crucial points. Pakṣadhara Miśra a contemporary Navyanyāya scholar who met Śrī Śrī Vyāsatīrtha records his appreciation.

यदधीतं तदधीतं यदनधीतं तदप्यधीतम् ।
पक्षधरविपक्षो नावेक्षि विना नवीनव्यासेन ॥